विष्णुपुराणके वचनको लिखदेहैं नरेति नरक जो फल इस को महर्षिलोक कर्मादि लोपका अर्थात् पुण्यके नाशका कहतेहैं इसीमें यमजीका वाक्यहै सुरेति मदि रापीणवाला १ और ब्राह्मण और गौके मारणे वाला २ और सुवर्णके चुराणेवाला ३ और पतितके साथ व्यवहारकरणवाला ५ और कृतघ्न क्या जो किसेका उपकार नहि जाणे ६ और गुरुकीस्त्रीको स्वीकार करणेवाला ७ एह सभ नरकोंविषे क्रमकर्के पैदेहैं तिन्होंविषे जो वेदविहित का नहि करणा इसको पापकी उत्पत्तिकरणे विषे विशेष माधव जीने कियाहै तथाहीति ( प्रष्ण ) निंदितका सेवन है भाव तिसते भावरूप पापकी उत्पत्ति जो कहीहै सो उचित है परंतु विहितका नहि करणा सो है अभाव इसते भावरूपकी उत्पत्ति

विष्णुपुराणम् ● नरकंकर्मणांलोपात्फलमाहुर्महर्षयः ● यमः ● सुरापो ब्रह्महागोघ्नः सुवर्णस्तेयकृन्नरः पतितैस्संप्रयुक्तश्चकृतघ्नोगुरुतल्पगः एतेप तंतिसर्वेपुनरकेष्वनुपूर्वशइति तत्र विहितानुष्ठानाभावस्य पापोत्पादकत्वे विशेषो माधवीये तथाहि ( ननु ) निन्दितसेवनाद्भावरूपाद्दुरितोत्पत्ता वपि विहिताकरणादभावात्कथंदुरितोत्पत्तिः नह्यभावाद्भावउत्पद्यमानः क्वचिदृष्टः अत्रकेचिदाहुः संध्यावन्दनादिविहितानंनुष्ठानमग्निहोत्राद्य नधिकाररूपाशुचित्वद्योतकम् अयमेवार्थोऽकुर्वन् प्रत्यवैतीत्यनेनाभिधी यते नत्वनुष्ठानाभावाद्भावरूपस्य दुरितस्योत्पत्तिरभिधीयते सचाऽनधि कारः प्रायश्चित्तेन निवर्त्ततइति अपरे पुनराहुः अकुर्वन्निति लक्षणार्थे शतृप्रत्ययः यदेतद्विहिताकरणं तदेतत्प्रागभवीयनिषिद्धाचरणजन्यदुरि तापूर्वसद्भावस्य लिंगम् तदेवदुरितंप्रायश्चित्तेन निवर्त्ततइति

क्यों होई किसे जगा भी अभावसे भावकी उत्पत्ति नहि देखी इसमे कोई ऐसा विचार करतेहैं संध्या वंदनादि जो हैं विहितकर्म इनका नहि करणा यह अग्निहोत्रादि शुभकर्मों विषे अनधि काररूप अपवित्रताको द्योतन करदाहै एहि अर्थ अकुर्वन्प्रत्यवैति इसकर्के कहीदाहै और अनुष्ठानके अभावसे भावरूपकी उत्पत्ति नहि है सोई अनधिकार प्रायश्चित्तकर्के दूर हुंदाहै और विद्वान् ऐसा कहतेहैं अकुर्वन् इत्थं लक्षणाविषे शतृप्रत्यय है तिसका ऐसा अर्थ है जो यह विहितका नहि करणा सो एह पूर्वजन्मकर्के निषिद्धाचरण ते होआ जो पाप तिस के होणेका चिन्हहै सोई पाप प्रायश्चित्त कर्के दूर हुंदाहै

होर कोई ऐसा भी कहदेंहैं अभावसे भाव नहि पैदे हुंदा यह कोई सार्वत्रिक वार्ता नहि किंतु न्यायमत विषे प्रागभाव सभका कारण है और मीमांसकोनें और भट्टजीने भी अभावसे भावकी उत्पत्ति कहीहै क्यों कि योग्यानुपलब्धिहै स्वरूप जिसका ऐसा अभाव जो है प्रमाण तिसते घटादियोंके अभाव विषे विषय प्रमिति क्या विषयबोधरूप जो भाव तिसकी उत्पत्ति कहणाते और प्रभाकर के मतवाले कहतेहैं कि भावहि किसे कारणते अभाव किहा जाताहै कोई अभाव पदार्थ वक्खरा नहि तिसते यह सिद्ध होआ कि विहिताऽकरण भी एक भाव हि है जेकर तिसतेप्रत्यवाय उत्पन्न होवे तद तेरेको कौणसी हानी है॥ अब इसमे अपणा विचार कहतेहैं (अथेति) प्रत्यवाय नाम पापरूप अपूर्वका है सो कृतिका साध्य हो करके कृतिका

अन्येप्येवंसमादधते ॥ अभावाद्भावोनोत्पद्यतइति नायमेकान्तः तार्किकमतेप्रागभावस्य कारणत्वात् मीमांसकमते भट्टैस्तावदभावाद्भावोत्पत्तिरभ्युपगता योग्यानुपलब्धिलक्षणादभावात्प्रमाणाद् घटाद्यभावे विषयप्रमितेर्भावरूपायाजननात् प्राभाकरैश्च भावएवाऽभ्युपगम्यते भावान्तरमभावोहिकयाचिद्व्यपेक्षयेत्युदीरणात् तथाच सति विहिताकरणमपिभावान्तरमितिकृत्वा तस्मात्प्रत्यवाय उत्पद्यतां का तव हानिः ॥ अथोच्यते ॥ प्रत्यवायो नाम दुरितापूर्वं तच्च कृतिसाध्यत्वेसति कृत्युद्देश्यं तथाच विहिताकरणस्य कृतिरूपत्वाभावादपूर्वजनकत्वं नास्तीति नाऽयंदोषः तस्य लक्षणस्य विहितप्रतिषिद्धजन्यापूर्वविषयत्वेन संकोचनीयत्वात् अन्यथा उपेक्षालस्याभ्यामकृतिरूपाभ्यांदुरितापूर्वानुत्पादप्रसंगात् उपेक्षाजन्यं च दुरितापूर्वं स्कंदपुराणे दर्शितम् नाभिरक्षंतियेशक्ता दीनंचातुरमाश्रितंआर्त्तनचानुकम्पंते तेवैनिरयगामिन इति

उद्देश्यहै अर्थात् किसेके नामपर प्रयत्न करणेका विषयहै और जो है विहितका नहिकरणा तिसको कृतिरूपत्वके ना होणेते अपूर्वजनकत्व नहि है इसते यह दोष नहिहै तिसलक्षणको विहित और निषिद्ध जो कर्म्महि तिसतें पैदे होआ जो अपूर्व तिस विषयत्व करके संकोचकरणेके योग्य होणेते अर्थात् विहितनिषिद्धको हि ओह लक्षणविषयकर्दाहै कोई विहितके ना करणेमे नाहि जेकर इसको नहि मानो तो उपेक्षाजाणके कर्म्म नहि करणा और आलस्य एहदोनोकृतिरूपवाले जो नहि इनकर्के पापकोउत्पत्ति हुंदीहै परंतु नाहोणी चाहिए उपेक्षाकर्के पाप होताहै सो स्कंदपुराणविषे लिखयाहै नाभीति जो पुरुष समर्थहोण और उनको दुःखी और दारिद्री जो आश्रित होआहै उसकी रक्षा नहि करण और आतुरपर कृपा ना करण सो नरक को जातेहैं

आलसककें जो पाप है सो मनुजीनें किहाहै अनेति वेदोंका आलसतें अभ्यास ना करणा और आचारका उलंघनकरणा आलसहोणतें और अन्नदोषतें ब्राह्मणकों मृत्यु मारयाचांदाहै ॥ अब पुछदेहें कि तिस जगाभी किसे तहाँ कृति है इस बातको मनदे हो तो इत्थे भी विहितको उलंघनरूप कृति है इसते यह सिद्ध होआ कि वहुतरस्मृतिवचन ना करणाविषे प्रत्यवायपर हैं सो सभ सार्थक होजानगे ॥ मतांतरकहतेहैं ईश्वरेति ईश्वरवादी जो हैं आस्तिकलोक तिनके मतविषे विहितका नहि करणा यह परमेश्वरकी आज्ञाका उलंघनहै इसतें इनकोभी कृतिरूपता स्पष्टहोई इसमे स्मृतिवचन भी है श्रुतीति ईश्वर कहतेहैं श्रुति और स्मृति यह

आलस्यजन्यं चाऽपमृत्युनिमित्तं दुरितापूर्वं मनुना ॥ अनभ्यासाच्चवेदाना माचारस्यचलंघनात् आलस्यादन्नदोषाच्चमृत्युर्विप्रान्जिघांसतीति ॥ अथ कथंचित्तत्रकृतिः संपद्यते तर्ह्यत्रापि विहितोल्लंघनलक्षणा कृतिरस्तु एवं च सति वहूनिस्मृतिवचनान्यकरणे प्रत्यवायपराणि स्वारस्येनाऽर्थवंति भविष्यन्ति ईश्वरवादिनां तु विहिताकरणस्याज्ञोल्लंघनरूपत्वात्कृतिरूपत्वं विस्पष्टम् अतएव स्मर्य्यते श्रुतिस्मृतीममैवाज्ञेयस्तेउल्लंघ्यवर्त्तते आज्ञाच्छेदीममद्वेषीनसभक्तोनवैष्णवइति सर्वथा विहितमकुर्वतः प्रायश्चित्तनिमित्तं दुरितापूर्वमस्त्येव निन्दितसेवनेत्वऽविवादं दुरितापूर्वं(ननु) अनिग्रहाच्चेन्द्रियाणामिति पृथगुपादानमयुक्तं विहिताकरणानिंदितसेवनाभ्यान्यस्य तृतीयस्य दुरितहेतोरभावात् मैवम् अस्याभयात्मकत्वेन तृती यत्वोपपत्तेः

दोनो मेरी आज्ञाहैं जो कोई इनका उ[illegible]घन करकें वर्तदाहै सो पुरुष मेरी आज्ञाका छेदन करदाहै और मेरा द्वेषीहै क्या मेरा विरोधीहै और अभक्तहै और वैष्णव भी नहिं इति इसते कहतेहैं कि सर्वप्रकारसें जो वेदविहित नही करे [illegible] उसकोप्रायश्चित्तका निमित्त दुरितापूर्व क्या पाप है और निन्दितसेवनविषे पापहोणेमे कोई [illegible] विवाद नहि(प्रश्न)इंद्रियांकें नहि रोकणेतें पाप हुंदाहै यह तीसरा हेतु जुदें करकें क्यों किहाहै नाहि कहणाचाहिए(उत्तर)ऐसामत कहो इसके दोनो स्वरूपहैन विहिताकरण और निंदितकासेवन इसककें तीसरा रूपहोणा योग्यहै सोईकहतेहैं

तयेति समनाहि इंद्रियोंके अर्थविषे प्रसक्त ना होवे इस विषे इंद्रियके विषयमें प्रीति को निंदा है सो शब्दसे कही है और स्नातक व्रतप्रकरणके मध्यविषे इसका पाठहै तिसविषे इंद्रियप्रसंगके निषेधका संकल्प विधेय है इस अर्थसे भी निषेध आया तिसते अनिग्रह तीसरा हेतु पापका हैं यहि विहिताकरणादि हेतुत्रय पापके पैदे करण वाले प्रश्नोत्तर करके दृढ कीतेहैं मदनपारिजातविषे ॥ सो कहतेहैं ( प्रश्न ) अकुर्वन् विहितं इत्यादि जो किहाहै इस वचनकरके पाप तो प्रायश्चित्तविषे निमित्त है और पाप विषे विहिताकरणादि हेतुत्रय हैं यह किहा है तैसे जो पुंश्चली व्यभिचारिणी स्त्री और वानर

तथाहि इन्द्रियार्थेषु सर्वेषु न प्रसज्येतकामतइति इन्द्रियप्रसक्तेर्निन्दितत्वं शाब्दम् स्नातकव्रतप्रकरणमध्ये पाठात्प्रसक्तिप्रकरणानिषेधसंकल्पस्य तत्र विधेयत्वेनाऽवगमात् विहितत्वमार्थिकम् तथाचाऽनिग्रहस्योभयोल्लंघनरूपत्वात्तृतीयनिमित्तत्वेन पृथगुपादानम् विहिताकरणादित्रितयस्यैव पापोत्पादकत्वमाक्षेपसमाधानाभ्यां पुनर्दृढीकृतं मदनपारिजाते तथाहि ( ननु ) अनेन वचनेन पापं प्रायश्चित्ते निमित्तं पापे च विहिताकरणादित्रयमेव हेतु रित्युक्तम् तथाच पुंश्चलीवानरखरादिदष्टस्य मिथ्याभिशप्तादेश्च विहिताकरणादिष्वन्यतमस्याऽपिहेतोरभावेन पापाभावात्कथं पुंश्चलीवानरखरैर्दष्टःश्वोष्ट्रादिवायसैः प्राणायामंजलेकृत्वाघृतंप्राश्यविशुद्ध्यतीत्यादिभिर्याज्ञवल्क्यादिवाक्यैस्तस्य प्रायश्चित्तं विधीयते ॥ उच्यते एतत्प्रायश्चित्तविधानात्पापे च हेतुत्रयस्यैवकथनाज्जन्मांतराचरितनिंदितसेवनादिजन्यं मिथ्याभिशापादिलिंगाक्षेप्यमेतत्प्रायश्चित्तविनाश्यं तस्य पापमस्तीति गम्यते तथाच तत्क्षयार्थं प्रायश्चित्तविधानमिति युक्तमेवपापे हेतुत्रयकथनम्

और गधा इनका दंशहोणा और मिथ्या किसीको दूषण लगाणा इत्यादि जो पापहैं सो इन्हो तीनो हेतुओं विचों किसे करके भी नहि होते तो किसकरके उनके वास्ते प्रायश्चित्त किहाहै क्या पुंश्चलीआदिकका जिनको दंदलगे सो प्राणायाम जलविषे करके घृतपीने से शुद्धहुंदाहै इत्यादि याज्ञवल्क्यादि मुनियों ने सो प्रायश्चित्त नहिं कहणा था( उत्तर )उच्यते इति इस प्रायश्चित्तके विधान होणेते और पापविषे हेतुत्रयको हि दिखाणेंनि जन्मांतर विषे क्या और किसे जन्मविषे कीते होए पापोंका प्रायश्चित्त उक्तविषयविषेमिथ्याभिशापादि निमित्त द्वारा किहाहै ऐसा प्रतीत हुंदाहै तिसते जन्मांतरके कीते होए पापके क्षयवास्ते प्रायश्चित्त करणायोग्य है

और पापविषे तीन हेतु किहेहैं सोभी योग्य हैं ॥ और इसमे मनुजीभी पापद्वारा विहिताकरणादि त्रयकों हि प्रायश्चित्तका प्रयोजक कहतेहैं प्रयोजकनाम परंपरा कारणदा है सो वचन लिखोदा है अकुर्वन्निति इसका अर्थ पिच्छे होचुकाहै तिसतें प्राय श्चित्त मे पाप हि निमित्त है और पापविषे हेतु तीनहैं एह वात सिद्धहोई अब कहते हैं कि पाप तो सिद्ध होआ ❀ परंतु तिसकी संख्या कितनी है इसवास्ते प्रायश्चित्तक दंवादि जो ग्रंथहैं तिन्हांविषे कही जो पापकी गणना सो लिखीदीहै सो गणना पृष्टाकोटि न्यायकर्के नहि होसकदी यथा जिसको पुच्छयाहोये तिसका थोडा वहुत कर्के सभका उत्तरकहणा इसकानाम पृष्टाकोटिन्यायहै जैसे चोरीके दंडवास्ते पुच्छया

मनुरपि पापद्वारा विहिताकरणादित्रयस्यैव प्रायश्चित्तप्रयोजकत्व माह अकुर्वन्विहितं कर्मनिन्दितंच समाचरन् प्रसक्तश्चेन्द्रियार्थे षुप्रायश्चित्तीयतेनरइति तस्मात्प्रायश्चित्ते पापमेव निमित्तं पापे ष हेतुत्रयमेवेति सिद्धम् ❀ अथ सिद्धे दुरिते का तत्संख्येति प्रायश्चित्तकदंवाद्युक्ता गणना लिख्यते सा च पृष्टाकोटिन्यायेन वक्तुमशक्याऽपि स्थूलोपाधिविषयत्वेन शक्या यथा महापातकम् १ अतिपातकम् २ पातकम् ३ इदमेवाऽनुपातकम् ३ उपपातकम् ४ इमानि पातित्यहेतूनि तथा जातिभ्रंशकराणि ५ संकरी करणानि ६ मलिनीकरणानि ७ अपात्रीकरणानि ८ प्रकीर्णकानि ९

होआ वस्त्र भूषण भाजन काष्ठकुद्दालादि गणना से कहणा होवे तो अनंतहै कह नहि सकीदा सो स्थूल २ उपाधि कर्के हि कहणेको शक्य है जैसे सुवर्णका चोर और होर किसे वस्तुका चोर इसरीतीसे गणना करीदीहै यथेति प्रथम महापातक १ और अतिपातक २ और पातक ३ इसीकों अनुपातकभी कहते हैं उपपातक ४ यह चार पातित्यके हेतु हैं अर्थात् इन्हों पापोंके करणवाला पतित हुंदाहै पहले त्रयपापके करणेवाला एकवारी करणेते भी पतित होताहै और चतुर्थके करणेवाला वहुतवार करणेसे पतित हुंदाहै यह विचार आगे आवेगा जातीति यह अर्थ स्पष्ट है

अवकीर्ण का नाम दूसरा ( अवकीर्ण ) है अथेति इनके उद्देश क्रमकर्के भेद दिखायी देहैं ब्राह्मणकामारणा १ मदिराकापीणा २ ब्राह्मणके सुवर्णका १६ मासेतें अधिक चुराणा ३ और गुरु स्त्रीकों भोगणा ४ और इनके संसर्गवाला ५ यह पंज महापाप कहेहैं और माताविषे गमन करणा १ और कन्याविषे २ और स्नुषा क्या नोआंविषे ३ और भगिनीविषे गमन ४ यहचारे अतिपातक हैं तैसेहि यज्ञ विषे स्थित क्षत्रियकावध १ और यज्ञविषे स्थित वैश्यका वध २ और रजस्वला स्त्रीका वध ३ और गर्भवतीस्त्रीका.४ और समानगोत्रवाली स्त्रीका क्या अपने गोत्रवाली स्त्रीका.५ और ब्राह्मणका अविज्ञात जो गर्भ तिसका, ६ और शरणागतका जो मारणाहै ७ और गुरुओंका अनादर

अवकीर्णानीतिकेचित् अथैपामुद्देशक्रमानुसारेण भेदाः ब्रह्महत्या १ सुरापानं २ स्तेयम् ३ गुर्वंगनागमः ४ एतत्संसर्गश्चेति ५ पंच महापातकानि मातृगमनं १ दुहितृगमनम् २ स्नुषागमनम् ३ भगिनीगमनंचेति ४ चत्वार्य्यतिपातकानि ॥ यागस्थक्षत्रियवधः १ यागस्थवैश्यवधः २ रजस्वलायावधः ०३ अन्तर्वत्न्याव ४ सगोत्राव- ५ ब्राह्मणस्याविज्ञातगर्भस्य ६ शरणागतस्यघातनम् ७ गुर्वधिक्षेपः सतु वहुविधः गुरुप्रतिकूलता ८ गुरूपरोधः ९ गुरुणासहवाग्विरोधः १० गुरुप्रत्यर्थिता ११ गुरुस्पर्द्धालुता १२ गुरोरनृताभिशंसनम् १३ वेदनिंदा १४ सुहृद्वधः १५ अधीतवेदविस्मरणं १६ विश्वस्तविपदानं १७ ब्राह्मणश्वासरोधश्चेति १८ ब्रह्महत्यासमानि ॐ निषिद्धभक्षणं १ कौटिल्यंराजविपये २ स्वोत्कर्पार्थंराजकुलादावनृतभापणं ३

सो वहुत तरांकाहै एक गुरुयोंकी प्रतिकूलता क्या विरोधीहोणा ८ और दूसरा गुरुका रोकणा जो बातसे अथवा वादार्थसे ९ और गुरुओंके साथ वाग्विरोध १० और गुरुकी प्रत्यर्थिता क्या जीविकाका विघात ११ और गुरुओंके साथ स्पर्द्धा क्या परोक्षनिंदा १२ और गुरुके अर्थ झूठकहणा अथवा उनके साथ झूठ कहणा १३ और वेदकी निंदा १४ मित्रका मारणा १५ और पडेहोए वेदका विस्मरण १६ विश्वासपर रहणवाले को विपदेणी १७ और ब्राह्मणका श्वास रोकणा १८ यह पाप ब्रह्महत्याके तुल्यहैं ॐ निषिद्ध जो लसुनादि तिनका भक्षणकरणा १ राजा विषे कुटिलता करणी २ और अपनी वडयाई वास्ते राजकुलादि विषे झूठ कहणा ३

और रजस्वला स्त्री का मुख चुंबन करणा ४ और झूठी उगाही देणी ५ और मित्रका वध करणा ६ इनकी ब्रह्महत्याके तुल्य और सुरापानके तुल्य इन्हां दोआं विषे जो गणनाहै सो प्रायश्चित्तके विकल्प वास्ते है यह संपूर्ण पाप मदिरा पानके तुल्य हैं ❀ घोडेका चुराणा १ और रत्नका चुराणा २ और मनुष्य का चुराणा ३ और स्त्रीका चुराणा ४ और पृथ्वीका चुराणा ५ और गौका चुराणा ६ और सभतर्हांकी ब्राह्मणकी छोडी होई अमानत नहिदेणी यह संपूर्ण सुवर्ण चुराणेके तुल्य जानणे ❀ मित्र की स्त्री और उत्तमवर्णकी कन्या और भयण और चांडाली और हीनजाति की स्त्री। और समान गोत्र की स्त्री और नुंह और माता की भयण और पिता की भयण और मामी और माता की सौकण माताकी भयण और आचार्य की कन्या

रजस्वलामुखास्वादः४ कौटसाक्ष्यं ५ सुहृद्वधः६ उभयत्रगणना प्रायश्चित्तविकल्पार्था इतिसुरापानसमानि ❀ अश्वहरणं १ रत्नहरणं २ मनुष्यहरणं ३ स्त्रीहरणम् ४ भूहरणम् ५ धेनुहरणम् ६ सर्वनिक्षेपहरणम् ७ तच्च ब्राह्मणसंबंधि इतिसुवर्णस्तेयसमानि ❀ मित्रभार्य्या उत्तमवर्णाकुमारी भगिनी चांडाली हीनजातिः समानगोत्रा स्नुषा मातृष्वसा पितृष्वसा मातुलानी मातृसपत्नी मातृभगिनी आचार्य्यतनया आचार्य्यपत्नी ऋत्विगुपाध्यायश्रोत्रियपत्नी रजस्वला निक्षिप्ता स्वसुताआसुगमनम् तथाश्वश्रूः पितृव्यपत्नी शिष्यपत्नी भगिनीसखी शरणागता राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा आसुगमनम् गुरुतल्पसमानि ३० इमान्यनुपातकानि ❀

और आचार्य की स्त्री और ऋत्विग् और गुरु और वेदपाठी इनों की स्त्री और रजस्वला स्त्री और निक्षिप्त क्यां कोई रक्षावास्ते छोडीगिआहै किसे स्त्रीको सो स्त्री और अपणी कन्या इनों विषे गमन करणेवाला तैसेहि श्वश्रू क्या अपनी स्त्रीकी माता और पितृव्यपत्नी क्या चाचेकी स्त्री और अपने शिष्यकी स्त्री और भगिनीकी सखी क्या सहेली और शरणागता क्या किसेके भयसे अपनी रक्षाके अर्थ आई होई और राजाकी स्त्री और संन्यस्त होई जो स्त्री और धात्री क्या उपमाता दुद्धपिआणे वाली और साध्वी क्या सच्चरित्रा और वर्णोत्तमा क्या ब्राह्मणी इन्हांविषे जो गमनहै सो गुरुतल्पग पापके तुल्यहै १० यह अनुपातक किहेहैं ॥

और गोवध क्या गौ का मारणा १ और व्रात्यता क्या जो यज्ञोपवीतादि संस्कारहैं तिन्हते हीनहोणा २ और स्तेय क्या ब्राह्मण के तोला सुवर्णते उरे सुवर्णकी अर होर सभवस्तुकी चोरी ३ और करज नामुकाणा ४ और जिसको अग्निके स्थापन का अधिकार है तिसने अग्निका स्वीकार नहि करणा ५ और जो वस्तु नहि वेचणे योग्य तिसका वेचणा ६ और परिवेदन क्या बड़ेको छोडकर छोटेको विआणा

गोवधः १ व्रात्यता २ स्तेयम् ३ ऋणानपाकरणम् ४ अनाहिताग्निता ५ अपण्यविक्रयः ६ परिवेदनम् ७ भृतादध्ययनादानम् ८ भृतकाध्यापनम् ९ पारदार्यं १० पारिवित्त्यम् ११ वार्द्धुष्यम् १२ लवणक्रिया १३ स्त्रीवधः १४ शूद्रवधः १५ वैश्यवधः १६ क्षत्रवधः १७ निंदितार्थोपजीवनम् १८ नास्तिक्यम् १९ व्रतलोपः २० सुतविक्रयः २१ धान्यस्तेयम् २२ कुप्यस्तेयम् २३ पशुस्तेयम् २४ अयाज्ययाजनम् २५ पितृत्यागः २६ भ्रातृत्यागः २७ सुतत्यागः २८ तडागविक्रयः २९ आरामविक्रयः ३० कन्यासंदूषणम् ३१ परिनिंदकयाजनम् ३२ परिनिंदकस्यकन्याप्रदानम् ३३ कौटिल्यम् ३४ व्रतलोपनम् ३५ आत्मार्थेक्रियारंभः ३६ मद्यपस्त्रीनिषेवणम् ३७ स्वाध्यायत्यागः ३८ अग्नित्यागः ३९ सुतत्यागः ४० बांधवत्यागः ४१ इन्धनार्थंद्रुमच्छेदः ४२ स्त्रियाजीवनम् ४३ हिंसयाजीवनम् ४४ औषध्याजीवनम् ४५ हिंस्रयंत्रविधानम् ४६ व्यसनानि ४७ आत्मविक्रयः ४८ शूद्रप्रेष्यं ४९ हीनसख्यम् ५० हीनयोनिनिषेवणम् ५१ अनाश्रमेवासः ५२ परान्नपरिपुष्टता ५३ असच्छास्त्राधिगमनम् ५४ आकरेष्वधिकारिता ५५ भार्याविक्रयः ५६ असत्प्रतिग्रहः ५७ भार्यात्यागः ५८ मिथ्याभिशंसनं ५९ नित्यानिशंसनता ६० इत्युपपातकानि ●

एकः सुतत्यागोगृहान्निष्कासनम् अन्यत्रसुतत्यागःसंस्काराद्यकरणम्

७ और मजूरी मककर पढना ८ अथवा पढाना ९ और पारदार्य्य क्या परस्त्रीका सेवनकरणा १० इत्यादि ६० सठउपपातक हैं सो मूलविषे स्पष्ट हैं ● इनकेअर्थ उपपातक प्रकरणके आदिविषे लिखेहैं उसीजगाते देखलेने इसगणनामे एकजगा सुतत्यागका अर्थ यह है कि पुत्रत्यागदेना दूसरी जगा यह अर्थ है कि पुत्रका संस्कार नहि करणा-

ऐसेहि एकजगा व्रतलोपहै ब्रह्मचारिको स्त्रीसंभोग और दूसरीजगा व्रतलोप है व्रतका नहिकरणा क्या एकादश्यादि व्रतका लोप ॥ अब होर पाप दिखाईदेहैं ब्राह्मेति ब्राह्मणको पीडाकरणी १ और दुर्गन्धि जो लसुनादि और मद्य तिसका आघ्राण क्या सिंघणा २ और कुटिलस्वभावहोणा ३ पुरुषके साथमैथुन ४ मुखआदिमे मैथुन ५ पशुके साथ मैथुन ६ एह छे जाति भ्रंशकरनामक पाप हैं ॥ और गधा १ घोडा २ ऊठ ३ मृग ४ हाथी ५ छाग क्या बकरा६ मेप क्या भिड्ड ७ मछ ८ सर्प्प ९ महिष १० इनका एक एकका जो मारणाहै एहसंकरीकरणपहैं ॥ और निन्दित जो हैं म्लेच्छ पतितादि तिन्हाते प्रतिग्रह क्या दानलैणा १ और वाणिज्य क्या निन्दित वस्तुका व्यापार करणा २ शूद्रसेवा द्विजातियोंने करणी ३ एहत्रय पाप अपात्रीकरण कहेहैं ॥ और छोटेजीवोंकी हत्या १ और मोटेजीवोंकी हत्या २ और पक्षिओंकी हत्या ३ और मद्यकर्के मिलीहोई वस्तुका भोजन ४ और फलोंकी ५ और

एकत्रव्रतलोपो ब्रह्मचारिणः स्त्रीसंभोगः अन्यत्रव्रतलोपो व्रताऽकरणम् एकादश्याद्यननुष्ठानम् ॥ ब्राह्मणपीडाकरणम् १ दुर्गंधेर्लशुनादेर्मद्यस्यचाघ्राणम् २ कुटिलत्वम् ३ पुंसिमैथुनम् ४ मुखादौमैथुनम् ५ पशुमैथुनम् ६ इमानि जातिभ्रंशकराणि ॥ गर्द्दभ १ तुरग २ उष्ट्र ३ मृग ४ हस्ति ५ छाग ६ मेष ७ मत्स्य ८ सर्प्प ९ महिषाणांप्रत्येकंवधः १० इमानि संकरीकरणानि ॥ निन्दितेभ्यःप्रतिग्रहः १ वाणिज्यम् २ शूद्रसेवनम् ३ इमान्यपात्रीकरणानि ॥ क्षुद्रजंतुहत्या १ स्थूलजंतुहत्या २ पक्षिहत्या ३ मद्यसंस्पृष्टभोजनम् ४ फल ५ समिधा ६ कुसुमानांचौर्य्यम् ७ अल्पद्रव्यनाशेऽप्यत्यन्तवैक्लव्यम् ८ इमानिमलिनीकरणानि ॥ राजाज्ञाप्रतीघातः १ राजाज्ञप्तकर्माऽकरणम् २ पुनःप्रदानम् ३ प्रकृतिसंभेदः ४ पाषंडिसंबंधेनवैदिकानांश्रेणीनांगणानां च धर्मविपर्ययाः ५ पितापुत्रविवादः ६ प्रायश्चित्तविपर्ययः ७ प्रतिग्रहविलोपः ८

समिधांकी ६ और पुष्पोंकीचोरी ७ और थोडीभी वस्तुकानाश देखकर व्याकुल होणा ८ एह अठ पाप मलिनीकरणनाम करके किहेहैं ॥ अब प्रकीर्णकपापोंकी गणना करतेहैं राजाकी आज्ञाका भंगकरणा १ राजाकी आज्ञासे प्राप्त जो कार्य तिसका नाकरणा २ एक वेर दान कीतेका दूसरी वेर दान करणा ३ राजाके साथ प्रजाकाभेदकराणा ४ पाखंडियोंके संबंधकर्के वैदिक अर्थात् वेदपढनेवाले लोक और पंच और जातिसमूह इनांका धर्म्म विपरीत कराणा ५ पिताकेसाथ पुत्रका संवादहोणा ६ और किहाहै जो प्रायश्चित्त तिसमे होर प्रायश्चित्त कराणा ७ दानलेकर मुकर जाणा ८

आश्रमीति आश्रमी जो ब्रह्मचारी आदिक हैं इनांको कोप कराणा ९ वर्ण संकरकादोष १० उत्तमपुरुषनें वर्णसंकरोंकी वृत्तिधारणी ११ वर्णसंकरका नियम करणा १२ उष्ट्रयान क्या ऊठके ऊपर चढना १३ और खोतेके ऊपर चढके जाना १४ और तुंकार हुंकार कर्के गुरोंको जीतना १५ और वादकर्के ब्राह्मणोंकी पराजय करणी १६ और ब्राह्मणकों वस्त्रकर्केबांधना १७ और ब्राह्मणकेतांई दंडका गूरणा १८ और दंडादिकर्के ब्राह्मणका रुधिर निकासना १९ और ब्राह्मणकों मारमार अंदरल हु पादेणा २० और काष्ठर्थी आदिलेकर जो शस्त्रहैं तिनोंकर्के ब्राह्मणकी त्वचाका भेदनकर णा २१ और ब्राह्मणकी अस्थिका भेदनकरणा २२ और पाणीकी सन्निधि क्या जलकी

आश्रमिणांकोपः ९ वर्णसंकरदोषः १० वर्णसंकरवृत्तिः ११ वर्णसंकरानियमः १२ उष्ट्रयानम् १३ खरयानम् १४ तुंकारहुंकाराभ्यांगुरुजयः १५ वादेन विप्रपराजयः १६ विप्रस्यवाससावंधः १७ विप्रायदंडोद्गूरणम् १८ दंडादिनाविप्रस्याऽसृक्पातनम् १९ तथाविप्रस्याऽभ्यंतरशोणता २० काष्ठादिनाविप्रत्वग्भेदनम् २१ विप्रास्थिभेदनंवा २२ जलसन्निधिंविनामलमू त्रोत्सर्गः २३ जलेवाअग्नौमलमूत्रादित्यागः २४ वेदोदितंनित्यकर्मत्यागः २५ स्नातकव्रतलोपः २६ पंचमहायज्ञानऽकृत्वाभोजनम् २७ आहिताग्ने रग्न्युपस्थानाभावः २८ अन्यस्मैइंद्रचापदर्शनम् २९ वाअन्यस्मैपला शाग्निदर्शनम् ३० ब्राह्मणेननीलवस्त्रधारणम् ३१ क्षत्रियवैश्याभ्यां पर्वसुनीलीवस्त्रधारणम् ३२

समीपता विना विष्टा और मूत्रका त्याग २३ जलमें वा अग्निमें विष्ठा मूत्रादिका त्याग २४ और वेदकर्के कथन किया जो नित्यकर्म्म सन्ध्यावन्दनादि तिसका त्याग २५ और स्नातक व्रतका लोप २६ और पंचजो हैं महायज्ञ क्या पाठकरणा १ और हवनकरणा २ और अति थिका पूजन ३ और तर्प्पण ४ और वलिवैश्व देव ५ इनके करणे विना भोजन करणा २७ और साग्निककों अग्निकीसेवातें रहित होणा २८ और दूसरे मनुष्यकेतांई इन्द्रधनुषका दिखाणा २९ अथवा दूसरे मनुष्यके तांई अकस्मात् लगा जो पत्रोंकोंअग्नि तिसका दिखाणा ३० और ब्राह्मणने नीलकर्के रंगया जो कपडा तिसका धारणाकरणा ३१ क्षत्री और वैश्य जो हैं तिनोंने पर्वोंमे नीले वस्त्रका धारणा ३२

द्विजस्येतिद्विज जो हैं ब्राह्मण क्षत्री वैश्य इनोंने पळाशवृक्षके काष्ठकके वने जो हैं यान और शय्याश्रौर पादुकादि तिनमें स्थित होणा ३३ श्रौर क्षत्रि जो हैं तिनकों रणते पराङ्मुखहोना ३४ फळके देनेवाले वृक्षका छेदन ३५ श्रौर दोब्राह्मण जो हैं तिनके मध्यविषे गमन ३६ श्रौर ब्राह्मण श्रौर अग्निके मध्यविषे गमन ३७ श्रौर स्त्रीपुरुष जो हैं तिनके मध्यविषे गमन ३८ श्रौर गौ श्रौर वृषभ इनके मध्यविषे गमन ३९ श्रौर होमके समयमें होमके करणे वाला. जो है श्रौर श्रग्नि जो हैं तिनके मध्यविषे गमन ४० गौ. श्रौर महिषीके दोहकालमें मध्य विषे गमन ४१ श्रौर पठन पाठन समयमें मध्य विषे गमन ४२ श्रौर दार संग्रह क्या स्त्री संग्रह समयमे मध्यविषे गमन ४३ श्रौर नख. केश रुधिर इनका भक्षण ४४ श्रौर मूत्र वा विष्टा

द्विजस्यपलाशवृक्षयानशय्यापादुकादौस्थितिः ३३ क्षात्रियस्यरणात्पराङ्मुखत्वम् ३४ फलप्रदवृक्षच्छेदनम् ३५ ब्राह्मणद्वयोरंतरेणगमनम् ३६ ब्राह्मणाऽग्न्योर्वा ३७ दंपत्योर्वा- ३८ गोवृषयोर्वा ३९ होमकालेऽन्तरेणगमनम् ४० दोहेऽन्तरेणगमनम् ४१ स्वाध्याये ४२ दारसंग्रहेऽन्तरेणगमनं ४३ नखकेशरुधिरभक्षणम् ४४ कृते मूत्रेपुरीषे वा शौचंविनास्नानकरणम् ४५ गर्भिणीपतेः समुद्रस्नानम् ४६ केशश्मश्र्वादिकर्त्तनं वा ४७ तथाश्राद्धभोजनम् ४८ शरणागतपरित्यागः ४९ वेदविप्लवः ५० चांडालश्रोत्रावकाशेश्रुतिस्मृतिपाठः ५१ सर्पनकुलयोः ५२ तथाऽजमार्जारयोः ५३ मूषकोष्ट्रयोः ५४ मंडूकयोषितोः ५५ पुरुषैडकयोः ५६ अश्वशुनोः ५७ अश्वखरयोरंतरागमनम् ५८ क्रोधात्स्वभार्य्यायाअगम्येतिकथनम् ५९

त्यागके पीछे शौचके किये विना स्नान करणा ४५ श्रौर गर्भिणीके स्वामीकों समुद्रस्नान ४६ अथवा गर्भिणीके पतिकों शिरकेवाल श्रौर श्मश्रुश्रादिका मुंडन ४७ श्रौर गर्भिणीपतिकों श्राद्धका भोजन ४८ श्रौर शरणागत .का त्याग ४९ श्रौर .वेदोंका विनाश करणा ५० श्रौर चांडालकेसुनतेहोयांवेद श्रौर.स्मृतियोंका पडना ५१ सर्प श्रौर नकुलके मध्यमें गमन करणा ५२ श्रौर तैसेंहि बकरे श्रौर बिल्लेके मध्यमें गमन ५३ चूहे श्रौर उष्ट्रकेमध्यमे गमन ५४ श्रौर मंडूक क्या. डड्डूँ श्रौर स्त्रीके मध्यमें गमन ५५ श्रौर पुरुष. तथा भेडके मध्यमें गमन ५६ घोडे श्रौर कुत्तेके मध्यविषे.गमन ५७ घोडे श्रौर खोतेके मध्यमें गमन ५८ श्रौर क्रोधतें अपनी स्त्रीकों अगम्या कथन क्या तूं मेरी माताहैं वा भगिनीहैं ऐसा कथन ५९

अस्नानइति और स्नानकियेविना भोजनकरणा ६० पंक्तिजोहै भोजनकरणवालयोंकी तिसमें वैषम्यप रिवेषण क्या किसीकों अन्नादिदेणा और किसीको नाहिदेणा वा किसीको वहुतदेणा किसीकों थोडादेणा ६१ और नदीके जलके उतरणेका जो मार्गहै तिसकों तोडदेणा ६२ और कन्या दानमें विघ्नकरणा ६३ और सममें विषमहोणा ६४ और पतितादि जो है तिसकेसाथ वार्ता करणेयां ६५ और पतितादिजो हैं तिनोंवें अन्नधनादिका ग्रहणकरणा ६६ और स्त्रीके धनका विनाश० ६७ और चौरादि जो हैं तिनको दंड नाहि करणा ६८ और चौरादियों की पंक्तिमें भोजनकरणा ६९ और द्विजाति जो हैं ब्राह्मणादि तिनकों नीलीविषे केशरंजन अर्थात् तिनकों वसमा लाणा ७० और नीली काष्ट करके द्विजका रुधिर निकालणा ७१ ॥

अस्नानेभोजनम् ६० पंक्तौवैषम्यपारिवेषणम् ६१ नदीजलावतरणमार्गभं जनम् ६२ कन्यादानेविघ्नः ६३ समेवैषम्यम् ६४ पतितादिसंभाषणम् ६५ पतितादिभ्योऽन्नधनादिग्रहणम् ६६ भार्याधनविनाशः ६७ चौरादेर्द डाभावः ६८ चौरादिपंक्तिभोजनम् ६९ द्विजातेर्नील्याकेशरंजनम् ७० नीलीकाष्ठेनद्विजस्यरुधिरनिष्कासनम् ७१ दुःस्वप्नदर्शनम् ७२ सिंधुसौ वीरादिदेशगमनम् ७३ सूर्याभिमुखंपुरीषाद्युत्सर्गः ७४ स्वकीयपुरीषद र्शनम् ७५ आहवनीयाद्यग्नौपादप्रतापनम् ७६ ब्राह्मणस्यक्षत्रियाद्यभि वादनम् ७७ तथाक्षत्रियादेर्वैश्यादौ ७८ शय्यापादुकाद्यारूढस्याभिवाद नम् ७९ अन्यत्रनिमंत्रितस्यान्यत्रगमनम् ८० समित्पुष्पादिहस्तस्याऽ भिवादनम् एतच्चाभिवाद्याभिवादकयोः ८१

और माडे स्वप्नकादर्शन होणा ७२ और सिंधु. सौवीरादि जो देशहैं तिनमें गमन ७३ और सूर्यादिसन्मुख विष्ठादिका त्याग करणा ७४ और अपणी विष्टाका देखणा ७५ आहवनीय आदि जो अग्निहै तिसमें पैरोंका तपाना ७६ ब्राह्मणने क्षत्रियादियोंकों अभिवादन क्या प्रणाम करणा ७७ तिसीप्रकार क्षत्रीकों वैश्यादि को अभिवादनमें है ७८ शय्या और पादुकादिमें आरूढ जो है तिसकों प्रणामकरणा ७९ और स्थानमें जो निमंत्रितहै उसका दूसरे स्थानमें गमन ८० और समिधा और पुष्प जिसके हाथमें हैं उसकों प्रणामक रणा एह पाप जिसकों प्रणामकरणा उसकों और जिसनें प्रणामकीतीहै उसको भी तुल्य प्रायश्चित्तहै ८१

उदकुंभेति जलका कलश हाथमें लेकर्के प्रणामकरणी ८२ और तैसांहि अपवित्र होकर्के प्रणामकरणी ८३ जपकरतेहोत्रां प्रणामकरणी ८४ पितृकार्य जो है श्राद्धादि और देवकार्य जो है पूजनादि तिनके करतेहोत्रां प्रणामकरणी ८५ शयनकरतेहुवे मनुष्यने प्रणामकरणी ८६ और यज्ञोपवीतके विना विष्टा. और मूत्रका त्याग करणा ८७ और तैसेंहि यज्ञोपवीत विना भोजनकरणा ८८ ऊर्द्ध्वोच्छिष्ट क्या भोजनकर्के आचमनकाअभाव ८९ और अधोच्छिष्ट क्या बिष्टा और मूत्र त्याग कर्के शौचकाअभाव ९० और भोजनके आरंभ और समाप्तिमें आचमन नहिकरणा ९१ दर्श और पौर्णमास और नित्ययज्ञका नहि करणा ९२ यज्ञके प्रारंभकरते होत्रां

उदकुंभादिहस्तेनाभिवादनम् ८२ तथाऽशुचिनाअभि- ८३ जपताअ- ८४ पितृदेवकार्यकुर्वताअ- ८५ शयानेनअ-८६ ब्रह्मसूत्रंविनाविण्मूत्रोत्सर्गः ८७ भोजनंवा ८८ ऊर्द्ध्वोच्छिष्टता ८९ अधोच्छिष्टता ९० भोजनस्याऽऽदावंतेचाचमनाभावः ९१ दर्शपौर्णमासादिनित्ययज्ञाऽकरणम् ९२ प्रारब्धेयज्ञेहविर्लोपः ९३ संध्यादिलोपः ९४ पितृयज्ञलोपः ९५ यज्ञंविनानवान्नप्राशनम् ९६ नैमित्तिककर्मलोपः ९७ ऋतौस्वपत्न्यगमनम् ९८ ऋतुस्नानांते पत्यौस्त्रियोऽपिगमनाऽभावः ९९ गृहिणोऽनापदिभिक्षाचरणम् १०० देवादीनामाभिमुख्येष्ठीवनम् १०१ मंडपोद्यानदेवागारादिभंजनम् १०२ स्वस्थानात्प्रतिमोत्थापनम् १०३

हवनद्रव्यका लोपहोणा ९३ और संध्यादिकर्मका लोप ९४ और पितृयज्ञ जो श्राद्ध तिसका लोप ९५ यज्ञकिये विना नवीन अन्नका भोजनकरणा ९६ और नैमित्तिक कर्मोका लोप ९७ और ऋतुस्नानके पीछे अपणीस्त्रीमें गमन नहिकरणा ९८ ऋतुस्नानके पीछे स्वामीकेपास स्त्रीको जाणेका अभाव अर्थात् नहि जाणा ९९ और, गृहस्थीकों आपदातें विना भिक्षाका मांगणा १०० और देवतायों आदिलेकर जो श्रेष्ठहैं उनके सन्मुख थूकणा १०१ मंडप और बागऔर देवताके मंदिरादि जो हैं तिनका तोडदेणा १०२ और अपने स्थानतें प्रतिमांका उठाणा १०३

पर्वेति पर्वोमें स्त्री- तैल. मांसका सेवनकरणा १०४ द्विजाती जो हैं ब्राह्मण क्षत्रि वैश्य इनकों वमन कर्के भोजनकरणा १०५ और भग्नभांड जो है भज्ञा होआ पात्र तिसमें भोजन करणा १०६ और मांसादिकर्के वमनमें भोजनकरणा १०७ यज्ञोपवीतके नाश होआं भोजन करणा १०८ शयनमे सूर्य्यका उदय होणा १०९ और शयनमें हि सूर्य्यका अस्त हो जाणा ११० और वमनके होआं दिनमें शयन करणा १११ नग्नस्त्रीका दर्शन करणा ११२ और नग्न होकर शयन करणा ११३ और श्मशानमें पैरदेकर लंघ जाणा ११४ और घोडेयों आदिलेकर जो वाहन हैं तिनकें ऊपर चडकर्के पूज्य जो हैं गुरोंथी आदलेकर तिनका उल्लंघन करणा ११५ अजगरादि

पर्वसुस्त्रीतैलमांससेवनम् १०४ द्विजातीनांविच्छर्दनेभोजनम् १०५ भिन्नभांडभोजनम् १०६ मांसादिवमनेभोजनम् १०७ यज्ञोपवीतादिनाशे भोजनम् १०८ सुप्तेसूर्य्योदयः १०९ सुप्तेसूर्य्यास्तम् ११० वांतेदिवाशयनम् १११ नग्नस्त्रीदर्शनम् ११२ नग्नस्वापः ११३ श्मशानाक्रमणम् ११४हयादीनारूह्यपूज्यातिक्रमः ११५ अजगरादीनांवधः ११६ मणिवस्त्रगवादिप्रतिग्रहः११७ अजीर्णेभोजनम् ११८ गर्भाधानादिसंस्काराभावः ११९ गर्भाधानाकरणम् १२० क्षुत्करणम् १२१ निष्ठीवनम् १२२ अनृतभाषणम् १२३ पतितैस्सहभाषणम् १२४ वासःपरिधायाचमनाभावः १२५ संवत्सरंक्रियाहीनस्यदर्शनस्पर्शनसंभाषणानि १२६ स्वीकृत्यनिमंत्रणत्यागः १२७ निमंत्रिताऽनाव्हानम् १२८ वधफलकानृतभाषणम् १२९

जो हैं सर्प तिनका मारणा ११६ मणि वस्त्र आदिक जो वस्तु हैं तिनका दानलेणा ११७ अजीर्णमें भोजनकरणा ११८ गर्भाधानादि जो स्त्रीके संस्कार हैं तिनका नहि करणा ११९ गर्भाधान जो है तिसका नहि करणा १२० छिक्कका मारणा १२१ और थुक्कणा १२२ झूट बोलणा १२३ पतित जो हैं तिनके साथ वार्ता करणियां १२४ वस्त्रधारकर्के आचमनका नाहिं करणा १२५ वर्षपर्यंत क्रियाहीन जो मनुष्य है तिसके साथ दर्शन और स्पर्श और संभाषण करणा १२६ और अंगीकार किया. जो निमंत्रण भोजन करणेके निमित्त तिसका त्याग करणा १२७ निमंत्रणकर्के नाहिं बुला लेणा १२८ मरणहै फल जिसका ऐसा झूठ बोलणा १२९

व्रणेति व्रण जो है घा तिसमें कीडयों का पडना १३० दिनमें स्त्रीका संगम करणा १३१ और नग्न होयकर स्नानकरणा १३२ निषिद्ध काष्टकर्के दंतधावन करणा १३३ ब्रह्मचारीकों शौच और आचमनथीं आदिलेकर जो धर्म्म हैं तिनका लोपकरणा १३४ ग्रहणाकिया जो व्रत तिसका भंगकरणा १३५ और झूठी सुगंद खाणी १३६ और अपणी वृत्तिकों छोडकर दूसरेकी वृत्ति कर्के धनकों पैदेकरणा १३७ शूद्रने ब्राह्मण क्षत्रि वैश्य जोहें तिनका जो कर्म्महे वेदाध्ययनादि तिसका करणा १३८ स्त्रीधनकर्के जीविका करणी १३९ स्त्रीके मुखमे मैथुनकरणा १४० वृषभकर्के युक्त जो है गड्डा तिसमें स्थितहोकर मैथुन करणा १४१ स्त्रीकों भगिन्यादिशब्दकर्के कथनकर्के फेर उसके साथ भोग करणा १४२

व्रणमध्येक्रिमिपातः १३० दिवामैथुनम् १३१ नग्नस्नानम् १३२ निषिद्धकाष्ठेनदंतधावनम् १३३ ब्रह्मचारिणःशौचाचमनादिधर्मलोपः १३४ गृहीतव्रतभंगः १३५ मिथ्याशपथः १३६ अन्यवृत्त्याधनार्जनम् १३७ शूद्रस्यद्विजकर्म्मकरणम्. १३८ स्त्रीधनोपजीवनम् १३९ भार्यामुखमैथुनम् १४० गोयुक्तयानस्थमैथुनम् १४१ भार्याभगिन्यादिशब्देनाकृत्वापुनर्मैथुनम् १४२ वस्तिकर्मप्रच्छर्दनविरेचनानि १४३ देवागारशिलादिनास्वगृहकरणम् १४४ वानप्रस्थयत्योर्व्रतभंगः १४५ दीक्षाभेदः १४६ यमनियमातिक्रमः १४७ क्रोधाऽहंकारपिशुनानि १४८ जलेप्रतिबिंबदर्शनम् १४९ अशुचौमूत्रपुरीषादौचापलम् १५० वृथाचेष्टा १५१

वस्तिकर्म- प्रच्छर्दन विरेचन कर्म्मका. करणा वस्तिकर्म मूत्रवृद्धि १ प्रच्छर्दन उलटी २ विरेचनदस्त ३ ॥ १४३ देवताके मंदिरके पत्थर चूनेथीं आदिलेकर जो वस्तु हैं तिनोकर्के अपने घरको बनाणा १४४ वानप्रस्थ और यतिके व्रतका भंगकरणा १४५ दीक्षामें भेदकरणा १४६ नित्य और नैमितिकका त्याग करणा १४७ क्रोध और अहंकार और चुगली इनका करणा १४८ जलमें अपने प्रतिबिंबकादेखणा १४९ अशुचि क्या अपवित्र जो हैं मूत्र और विष्टातिसके त्यागमें चापल क्या वातां करणीआं और इधर उधरकी चेष्टाकरणी १५० वृथा चेष्टाकरणी १५१

प्रतिज्ञेति प्रतिज्ञाकर्के झूठवोलणा १५२ मौनविना भोजनकरणा १५३ अर्धभुक भोजन पात्रमें जलपानकरणा १५४ केवल मुखकर्के जलका पीणा १५५ और जो अपणे सापिंडी क्या समीप कुलके नाहिंहैं उनके साथ रोदन करणा १५६ प्रेतको अलंकरण क्या तिसको स्नानादिक कराणा १५७ आत्मघातीका संस्कार करणा १५८ नहिअपणे वरावर और अपणेसें श्रेष्ट जातीका जो प्रेत तिसके साथ गनम १५९ ब्राह्मणने शूद्रप्रेतके साथ दाह निमित्त जाणा १६० स्निग्ध क्या गिल्ली जो मनुष्यकी अस्थि है उसके साथ स्पर्श करणा १६१ क्षत्रीको वैश्य और शूद्रजातिके प्रेतकेसाथ दाहनिमित्त जाणा १६२ रजस्वला होती जो कन्या तिसको

प्रतिज्ञायाऽनृतकथनम् १५२ मौनंबिनाभोजनम् १५३ अर्धभुक्तेभोजन पात्रेजलपानम् १५४ मुखेनजलपानम् १५५ असपिंडैःसहरोदनम् १५६ प्रेतालंकरणम् १५७ आत्मघातिनःसंस्कारः १५८ असमानोत्कृष्टजाति प्रेतानुगमनम् १५९ ब्राह्मणेनशूद्रप्रेतानुगमनम् १६० स्निग्धमनुष्यास्थिस्पर्शः १६१ क्षत्रियस्यवैश्यशूद्रप्रेतानुगमनम् १६२ ऋतुमतीकन्यारक्षणम् १६३ ब्राह्मणेनचैत्यवृक्षस्पर्शः १६४ इत्यादीनिप्रकीर्णकानि इमान्युद्दिष्टपापानि ❁ अनुद्दिष्टान्यपि ❁ अस्थिमत्सहस्रवधः १ अनस्थिमदनोवधः २ पतितेनसंस्पर्शः १ तेनसंलापः २ तन्निःश्वासादानम् ३ तेनसहैकयानावस्थानम् ४ तेनसहैकासनावस्थानम् ५ तेनस्वस्ययागः ६ स्वयंतस्ययागोवा ७ ततोऽध्ययनम् ८ तस्याध्यापनंवा ९

नहि विवाह देणा १६३ और ब्राह्मणनें चैत्यवृक्षके साथ स्पर्शकरणा १६४ इसर्थीआदिलेकर प्रकीर्ण पाप कहेहैं ❁ यह उद्दिष्ट पाप हैंन और अनुद्दिष्ट पापभीहैंन सो कहतेहैं ॥ अस्थियोंवाले जो हजारों जीव हैं तिनका मारणा १ और विनाअस्थियोंतें जो जीव हैं तिनकर्के भरेहोएगड्डेकामारणा २ पतितके साथ स्पर्शकरणा १ और पतितके साथ वार्ता करणीआं २ और पतितकें जो श्वासहैं तिनका लेणा ३ पतितके साथ एकयानमें वैठणा ४ पतितके साथ एक आसनमें वैठणा ५ पतितकर्के अपणा यज्ञ कराणा ६ अथवा आप पतितको यज्ञ कराणा और पतितसें पढना ८ और पतितको पढाना ९

पतितके ताईं कन्या देणी १० और पतितथें कन्यादान लैणा ११ और पतितके साथ एकपंक्तिमें भोजन करणा १२ पतितका पक्वान्न खाणा १३ पतितके पात्रमें भोजन करणा १४ पतितका और अपणा पक्का होया अन्न किट्ठा करणा अर्थात् रलाणा १५ पतितके पात्रकर्के अथवा पतितके पात्रतें जलपीणा १६ और पतितके धूमयंत्रकर्के धूमपान करणा १७ पतितने स्पृष्ट किया जो पक्वान्न तिसका भोजनकरणा १८ पतितके साथ एक सेजेमें शयन करणा १९ पतितकीस्त्रीके साथ संभोग करणा २० पतितनें धारया जो वस्त्र तिसका धारणा २१ पतितनें अपणी स्त्री क्या शुद्धपुरुषकी जो स्त्री है तिसके साथ भोगकरणा २२ पतितका जूठा अन्न भक्षणकरणा २३ और पतितते दानलैणा २४ इन्होंते लेकर अनेक

तस्मैकन्यादानम् १० ततोग्रहणंवा ११ तेनसहैकपंक्तयांभोजनम् १२ तदीयान्नभोजनम् १३ तद्भांडभोजनम् १४ तदीयस्वकीयपक्वान्नमिश्रणम् १५ तदीयभांडेन वा तद्भांडाद्वा जलपानम् १६ तदीयधूमयंत्रेणधूमपानम् १७ तत्स्पृष्टपक्वान्नभोजनम् १८ तेनसहैकशय्यायांशयनम् १९ तत्स्त्रीसंभोगः २० तत्परिहितवस्त्रपरिधानम् २१ तेनस्वकीयस्त्रीसंभोगः २२ तदुच्छिष्टान्नभोजनम् ३२ तत्प्रतिग्रहः २४ इत्याद्यनेकविधं संसर्गजम् ॥ संसृज्यते इतिसंसर्ग इतिव्युत्पत्तेः ॥ प्रायश्चित्तंतुउत्तममध्यमाधमभेदेन नवधा विभज्य दर्शितम् तत्र यौनादयउत्कृष्टाः १ सहभोजनाद्योमध्यमाः २ संलापादयोऽधमाःसंसर्गाः ३ परंपरास्पर्शेपि ४ ❀ वृहद्विष्णुना तु सर्वाणि प्रायश्चित्तनिमित्तानि उत्तरोत्तरलघीयांसि पृथक् २ संज्ञाभेदाभिन्नानि गणितानि तद्यथा ब्रह्महत्या. सुरापानम्

प्रकारके संसर्गते उत्पन्नभये पाप हैं ❀ संसर्ग शब्दका अर्थ कहतेहैं सामिति अच्छी प्रकार जो उत्पन्नकरीदाहै एकत्र होयकर्के सो कहिये संसर्ग ❀ अब प्रायश्चित्त उत्तम-मध्यम- अधम एह जो भेदहै इस कर्के नव ९ प्रकारका विभागकर्के दिखाआहे तिसमें यौनादि जो संसर्ग हैं सो श्रेष्ठ हैं १ और साथ भोजनकरणा इत्यादिक मध्यमहैं २ और संलापादि जो हैं पतितोंके साथ वार्ता करणीआं सो अधमहैं ३ परंपरास्पर्शमें भीअधमजानणा ४ ❀ अब वृहद्विष्णु जो ऋषि है तिसनें संपूर्ण जो प्रायश्चित्तों के निमित्त हैं सो उत्तरोत्तर लघु क्या उसतें अगला छोटा और उसतें बो छोटा इसतरह भिन्न भिन्न संज्ञा भेदकर्के गिणेहैं सो कहिनेहैं ब्राह्मणकामारणा १ सरावकापीणा २

वाहेति ब्राह्मणका सुवर्णचुराणा ३ गुरोंकी स्त्रीसें संग करणा ४ एह महापातक हैं श्रीर एहं जो महापातकी हैं उनके साथ संयोगकरणा श्रोह वो उनके बराबर है ५ माताके साथ संयोगकरणा १ कन्यामें संगकरणा २ स्नुषा जो है पुत्रकी स्त्री तिसमें संगकरणा ३ एह अतिपातक हैं ॥ यज्ञमेंस्थित जो क्षत्री तिसका मारणा वैश्य श्रीर रजस्वला श्रीर गर्भिणी स्त्री श्रोर अपणी गोत्रकी स्त्री श्रीर अविज्ञातगर्भ जो है श्रीर शरणागत जो है इनके मारणेसे ब्रह्महत्याके बराबर पाप होताहै ॥ झूठी उगाई देणी श्रीर मित्रका मारणा एह दोनो सुरापानक तुल्य हैं ॥ श्रीर ब्राह्मणकी भूमिका जो हरणाहै सो सुवर्णकी चोरीके तुल्यहै ॥ पिताके भ्राताकी जो स्त्री है श्रोर नानी जो है श्रीर मामी जो है श्रीर राजाकी स्त्री जो है इनमें जो

ब्राह्मणसुवर्णापहरणं गुरुदारगमनमिति महापातकानि तत्संयोगश्च ॥ मातृगमनम् दुहितृगमनम् स्नुषागमनमित्यतिपातकानि ॥ यागस्थक्षत्रियवधो वैश्यस्य च रजस्वलायाश्चान्तर्वल्न्याश्च सगोत्रायाश्चाऽविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानि ॥ कौटसाक्ष्यं सुहृद्वध इत्येतौ सुरापानसमौ ब्राह्मणभूमिहरणं सुवर्णस्तेयसमम् ॥ पितृव्य मातामह मातुल नृपपत्न्यभिगमनं गुरुदारगमनसमम् ॥ पितृष्वसुर्मातृष्वसुर्गमनं श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं च स्वसुःसख्याः सगोत्राया उत्तमवर्णाया रजस्वलायाः शरणागतायाः प्रव्रजिताया निक्षिप्तायाश्च गमनमित्येतान्यनुपातकानि ॥ अनृतं च समुत्कर्षे राजगामि च पैशुनम् गुरोश्चालीकनिर्बंधो वेदनिंदा

संगमकरणा सो गुरोंकी स्त्रीके संगके बराबरहै ॥ श्रीर पिताकी जो भगिनी श्रोर माता की जो भगिनी श्रीर श्रोत्रिय जो है वेदपाठी तिसकी स्त्री श्रीर ऋत्विक् जो है यज्ञ करावणेवाला तिसकी स्त्री श्रीर उपाध्याय जो है पढावणेवाला तिसकी स्त्री श्रीर मित्रकी स्त्री इन स्त्रियों में जो संगम करणा श्रीर भगिनीकी जो सहेलीहै श्रीर सगोत्रा जो स्त्री श्रीर उत्तम वर्णकी जो स्त्री श्रीर रजस्वला जो स्त्री श्रोर अपणी शरणको प्राप्त जो स्त्री श्रीर संन्यास धारया है जिसने सो जो स्त्री श्रीर निक्षिप्ता यथा किसीनें अमानतरी जो स्त्री इनमें जो गमनहै एह सब अनुपातक कहे हैं ॥ अनृतमिति अपणी वडआई निमित्त जो झूठ दालणा श्रोर राजाके कणमें प्राप्तहोणे वाली चुगलीकरणी श्रोर गुरोंमें झूठा हठकरणा श्रोर वेदोंकीनिंदा करणी

अधीति और पठनाकिया जो शास्त्र तिसका त्याग और अग्नि- पिता- माता- पुत्र- स्त्री- इनका जो त्याग ॥ और अभोज्य जो हैं जिनका अन्न नाहिं भक्षण करणा उनका अन्नभक्षण करणा ॥ पराये धनका चुराणा। परस्त्री गमन करणा। जिनको यज्ञका अधिकार नाहि है तिनकों यज्ञकराणा और व्रात्यता अर्थात् व्रतकालमें यज्ञोपवीतका नाहि धारणा और मूल्यलेकर पढाणा। और मूल्यदेकर्के पढना। और सपूर्णखाणोंमें अधिकार होणा ॥ जीवमारणके निमित्त महायंत्रका प्रवर्त्तन करणा। वृक्ष-गुल्म-वेलां-ओषधिआं इनकी हिंसाकर्के जीविका करणी। अभिचार जो है हिंसाकर्म और मूलकर्म जो है जादू तिसमें वर्त्तना। अपने निमित्त क्रिया का आरंभ करणा। अग्नि को नाहिं सेवणा। देवता-ऋषि-पितरों का जो ऋण तिसका नाहिं दूरकरणा। माडे

अधीतस्यत्यागोऽग्निपितृमातृसुतदाराणांच अभोज्यान्नभक्षणं परस्वापहरणं परदाराभिगमनं अयाज्यानांचयाजनं व्रात्यता भृतकाध्यापनं भृतादध्ययनादानं सर्वाकरेष्वधिकारो महायंत्रप्रवर्त्तनं द्रुमगुल्मलतौषधीनां हिंसाजीवनम् अभिचारमूलकर्म्मसुच प्रवृत्तिः आत्मार्थक्रियारंभोऽनाहिताग्निता देवर्षिपितृणामृणस्याऽनपक्रिया असच्छास्त्राभिगमनं नास्तिकता कुशीलता मद्यपस्त्रीनिषेवणमित्युपपातकानि ॥ ब्राह्मणस्यरुजःकरणम् अघ्रेयमद्ययोर्घ्रातिः जैह्म्यं पशुषु पुंसि च मैथुनाचरणमित्येतानि जातिभ्रंशकराणि ⊛ ग्राम्याऽरण्यपशूनां हिंसनं संकरीकरणम् ⊛ निन्दितेभ्यो धनादानम् वाणिज्यं कुसीदजीवनं असत्यभाषणं शूद्रसेवनमित्यपात्रीकरणानि ⊛ पक्षिणां जलचराणां जलजातानां च घातनं

शास्त्रमें अभिगमन करणा नास्तिक होणा। माडे स्वभाव वाला होणा। और मद्य पान करणे वाली स्त्रीका सेवन करणा। यह सभ उपपातक हैं ⊛ ब्राह्मणको रोगवान करणा और जो नाहिं सिंगणे योग्यवस्तु और सराव इनको सिंगणा और कुटिल होणा पशुओं में और पुरुषमें मैथुनकरणा यह जातिभ्रंशकर पापहैं ⊛ ग्राम्य और वनके पशुओंका जो मारणाहे सो संकरीकरण पाप होताहै ⊛ निंदित जो हैं पुरुष तिनों तें धनका लैणा व्यापार करणा व्याजकर्के जीविका करणी-झूठ बोलणा शूद्रकी सेवा करणी यह अपात्रीकरण पाप हैं ⊛ पक्षी और जलचर और जलतें उत्पन्न भये जो जीव तिनका मारणा ॥

कृमीति कीडयोंका मारणा मद्य करके युक्त भोजन करणा एह मलावह पापहैं ● और जो नहिकथ नकिया सो प्रकीर्णक पापहै ❀ अवपापकी गणनाके प्रसंगतें पतित भी गिणादे हैं सकृदिति द्विज जो है ब्राह्मण-क्षत्री-वैश्य-सो एकवार अज्ञानतें सरावके पीणेकरके सद्यःपतित होताहै इत्यादि करके ब्रह्महत्येति ब्रह्महत्या-सरावकापीणा.चोरी.गुरोंकीस्त्रीके साथ संग करणा इनकों महापातक कहते हैं और जो मनुष्य महापातकियोंके साथ वसें इत्यादिश्लोक करके कथनकिये जो महापातक करणेवाले सो पतित होतेहैं और इसीप्रकार कन्यागामियोंतें आदिलेकर अतिपापी जो हैं सो सद्यः वचा तात्कालिक पतित होतेहैं सोई ( यम ) कहिताहै माताकी भगिनी- और

कृमिकीटघातनं मद्यानुगतभोजनमिति मलावहानि ● यदऽनुक्तं तत्प्रकीर्णकमिति ❀ अथपापगणनाप्रसंगात्पतिताअपिगण्यन्ते सकृत्पीत्वासुरांमोहात्सद्यःपततिवैद्विजइत्यादिना ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः महान्तिपातकान्याहुर्यश्चतैःसहसंवसेदित्याद्युक्तमहत्पापकर्त्तारः पतिता इतिगम्यते एवंकन्यागाम्यादयोऽप्यतिपापिनःसद्यःपतिताभवन्ति तथाच (यमः) मातृष्वसा मातृसखी दुहिताच पितृष्वसा मातुलानी स्वसा श्वश्रूर्गत्वासद्यःपतेन्नरइति नरइत्यनेनाद्विजेतराणामपिशूद्रप्रभृतीनां ग्रहणम् गौतमेनाऽन्येऽपि पतिताउक्ताः❀मातृपितृयोनिसंबंधागः स्तेन नास्तिक निन्दितकर्म्माभ्यासि पतितात्यागिअपतितत्यागिनःपतिताः पातकसंप्रयोजकाश्चेति ❀ पातकेति मिथ्यापातकप्रयोगेणाऽन्यदूषकाः

माताकी सहेली. कन्या. पिताकी भगिनी. मामेकीस्त्री. भगिनी. सस्स इनके साथ संग करणेसें मनुष्य उसीसमय पतित होजाताहै नर इसपदके ग्रहण करणेसें जो ब्राह्मणोंतें भिन्न भी- शूद्रप्रभृति हैं तिनका ग्रहणहोताहै● और गौतमजीने औरभी पतित कहेहैं माता पिताकी योनि संबंधी स्त्री विषे गमनकरणे वाला जो पाप. चोर. नास्तिक. और वहुतवार निंदित कर्म्मोंको करणेवाला और पतित जो हैं तिनकों नहीं त्यागणे वाला और अपतित जो हैं-शुद्ध तिनकों त्यागने वाला इतने पतित होतेहैं और-पातकोंके संप्रयोजक भी पतित होतेहैं अर्थात् जो मिथ्यापातक प्रयोगकरके अन्यदूषक वचा औरकों दूषण लगाणे वाले हैं

एवमिति इसीप्रकार महापातकोंके बराबर जो पाप कहेहैं उनकोही पातकसंज्ञा है और उनोंतें छोटे जो पाप हैं सो उपपातक हैं इत्यादिकर्के और गुरूणामिति गुरु जो हैं तिनका अत्यंत तिरस्कारकरणा और वेदोंकी निंदाकरणी सुहृद् जो मित्र हैं तिनकों मारणा और पढआ जो शास्त्र तिसकों भुलादेणा एह ब्रह्महत्याके बराबर पाप जानने योग्यहैं इत्यादि कर्के कहे जो पातकोंके करणेवाले सोबी पतितहैं और उपपातकी जो हैं सोबी कितनेक बहुतवार उपपातकके करणे करके पतित हो जातेहैं ॥ इसमें कितनेक पंडित ऐसा विचारकर्तेहैं ॥ जिस अर्थवादमें प्रत्यवायका विशेष श्रवण करीदाहै अथवा प्राय-

एवं महापातकतुल्यानिपापान्युक्तानियानितु तानिपातकसंज्ञानितन्न्यू नमुपपातकमित्यादिना गुरूणामध्यधिक्षेपो वेदनिंदा सुहृद्वधःब्रह्महत्यास मंज्ञयमधीतस्यचनाशनमित्यादिना चोक्ताःपातककर्त्तारोऽपिपतिताःउपपा तकिनस्तु केचिदभ्यासेन पतिता भवंति अत्रोच्यते ॰ यत्रार्थवादे प्रत्यवा यविशेषः श्रूयते प्रायश्चित्तवहुत्वं वा तस्मिन्निंदितकर्म्मणि यावत्यभ्यस्य माने महापातकतुल्यत्वंभवति तावानऽभ्यासः पातित्यहेतुः एवंच सकृद्गो घ्नादयस्तु पतिताभासाएव शास्त्रत आचारात्तु पतिताः अतएवोक्तं तन्न्यूनमु पपातकमिति दिवास्वप्नादौ तु सहस्रकृत्वोऽप्यभ्यस्यमानेपि न महापातक तुल्यत्वं भवतीति न पातित्यमतोयुक्तमुपपातकादेरभ्यासापेक्षया पतनहे तुत्वम् निन्दितकर्म्माभ्यासीति पूर्वोक्तगौतमोक्तेः

श्चित्तका बहुत्व श्रवण करीदा सो जो निंदित कर्म्महै तिसके बहुतवार करणेमें महापातककी तुल्य ताकों प्राप्त होंदाहै इतना जो अभ्यास है सो पातित्यका कारण है इसीप्रकार एकवार गोहत्याके करणेवाले पतिताभास हि हैं शास्त्रकर्के और आचारतें पतित होतेहैं इसीते किहाहै महा पातकोंतें जो छोटा है सो उपपातक है और दिवाशयनादिमे हजार वार अभ्यास कर्के भी महापातकादि तुल्यताकों नहिं प्राप्त होता और पतितभावको नहिं प्राप्तहोता इसतें उपपातकादि जो हें उनके बहुतवार करणेतें पतनहेतुत्व योग्य है ॥ निंदितकर्म्माभ्यासी जो है सो पतित होताहै एह पूर्वकिहा जो गौतमजीका बचन तिसतें

तेनेति तिसकर्के ब्रह्महत्यादि अतिदिष्ट प्रायश्चित्ती क्या जिनोंनें ब्रह्महत्या नहिं करी और गुरुद्रोहादि कियाहै उनका नाम हैं अतिदिष्ट प्रायश्चित्ती सो पापी हि हैं पतित नहि हैं ॥ एह जो है गर्भ तिसका नहि जाणआं एह आपस्तंवीयवचनकी व्याख्यामें ॥ तिस ब्राह्मणका गर्भ स्त्री पुरुषभावकर्के जो नहि जाणया तिसकों मारकर्के ब्रह्महत्याके व्रतकों करे इसप्रकारकी जो ब्रह्महत्या तिसमें व्रतका अतिदेश हि है पातित्यादिका अतिदेश नाहिं है तिसकर्के अतिदिष्ट प्रायश्चित्तमें अपतितभावके होणेतें द्विजातिकर्म जो हैं संध्यावंदनादि तिनोंकर्के अधिकारी करिदाहि है ॥ पतितत्व जो है सो द्विजातिकर्मका अनर्हत्वहै एह अपरार्कमें स्पष्ट कियाहै ॥ और तिसीप्रकार

तेन ब्रह्महत्याद्यतिदिष्टप्रायश्चित्तिनः पापा एव न पतिताः एतच्च गर्भंच तस्याऽविज्ञातमित्यापस्तंवीयवचनव्याख्यायां तस्यब्राह्मणस्य गर्भं स्त्रीपुरुषभावेनाऽविज्ञातंहत्वा ब्रह्महव्रतंचरेदित्येवंरूपायां अत्र व्रतातिदेशएव न पातित्यातिदेशःतेनाऽतिदिष्टप्रायश्चित्तेऽपतितत्वाद्द्विजातिकर्म्माभिरधिक्रियतएव पातित्यंच द्विजातिकर्म्मानर्हत्वमित्यपरार्के स्पष्टीकृतम् ॥ तथाच जातिभ्रंशकरादिपंचपापकर्तारस्तत्तन्नाम्नैव व्यवह्रियंते न पतिता इतिविवेकः द्विजातिकर्म्मणामपि अध्ययनेज्यादानाध्यापनयाजनप्रतिग्रहाणामेवाऽनाधिकारो न स्नानसंध्यादीनाम् खट्वांगकपालपाणिर्द्वादशसंवत्सरान्ब्रह्मचारीत्यादिसंवर्त्तस्मरणे ब्रह्मचारिपदस्य ब्रह्मचारिप्रकरणोक्तसन्ध्यावंदनादि वर्जयेन्मधुमांसेत्यादि यावद्धर्म्मप्राप्त्यर्थावगमात्

जातिभ्रंशकरादि जो पंच पापहैं तिनके करणेवाले तिस तिस नाम कर्के व्यवहार करीदेहैं पतित नहि होते एह विवेक है और द्विजातिकर्म जोहैं पढना पूजाकरणी,दानकरणा.पढाउना यज्ञकराणा, दानलैणा इनका हि उनकों अधिकार नाहि है और स्नानसंध्यादिका निषेध नहिं है अर्थात् स्नानादिकरन ॥ खट्वांगेति खट्वांग और कपाल हाथमें जिसके सो वारांवर्ष पर्यंत ब्रह्मचर्य धारकर्के वर्ते इत्यादि संवर्त्तऋपिके स्मरणविषे जो ब्रह्मचारीपदहै तिसते ब्रह्मचारी प्रकरणमें उक्तिहे जो संध्यावंदनादिकर्म्म तिनकोंकरे और सराव,मांस.इत्यादि जो हैं तिनकों त्यागे इसते आदिलेकर्के कहे जो संपूर्ण ब्रह्मचर्य धर्म तिनकी प्राप्तिकी प्रतीति होणेते अर्थात् प्राप्तहोणेतें

स्थान और आसन इनोंकर्के विहार करदा २ प्रातः १ संध्या. सायंकालमें स्नान करताहुआ शुद्ध होताहै एह गौत्तमस्मरणमें है अर्थात् गौत्तमस्मृतिमें है सवनेषूदकस्पर्शी इसपदकर्के स्नान विधिकर्के तदंगभूत जो संध्यावंदनादि तिनकोंभी उक्तहोणेतें किंचेति इसकर्के इसीकों फेर कहितेहैं पवित्र होयकर्के कर्म्म करणे योग्यहै इसकों सर्वकर्म्मसाधारण होणेतें ब्रह्मचर्यांगभूत जो शौच तिसकी संपादके निमित्त स्नानकीन्याईं संध्योपासन भी करणेयोग्यहै तिसकों शौचका जो संपादन तिस द्वारा सर्वकर्म्मोंके होणेतें अर्थात् सर्वकर्मोंका अंग होणेतें ॥ तथाचेति सोई दक्ष कहिताहै ॥ संध्याहीन जो है सो नित्यं प्रति अपवित्र होताहै और संपूर्ण

स्थानासनाभ्यांविहरन्सवनेषूदकोपस्पर्शी शुध्येदिति गौत्तमस्मरणे सवने षूदकस्पर्शीत्यनेनस्नानविधिना तदंगभूतानां सन्ध्यादीनामप्युक्तत्वात् किंच शुचिनाकर्म्मकर्त्तव्यमित्यस्य सर्वकर्मसाधारणत्वात् ब्रह्मचर्य्यांगभूतशौच संपत्त्यर्थं स्नानवत्संध्योपासनमपि कार्य्यं तस्याऽपिशौचापादनद्वारेण सर्व कर्म्मशेषत्वात् तथाच दक्षः ॥ सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्म्मसु य त्किंचित्कुरुतेकर्म्मनतस्यफलभाग्भवेदिति नच द्विजातिकर्म्मभ्योहानिःपतन मितिवचनात् संध्योपासनायाश्च द्विजातिकर्म्मत्वादप्राप्तिरितिशंकनीयम् यस्मात्पतितस्यैव व्रतचर्य्योपदेशात्तदंगतयैव संध्योपासनादिप्राप्तिरतोऽ ध्ययनादीनामेव द्विजातिकर्म्मणां हानि न सर्वेषां तावन्मात्रबाधेनाऽपि हानिवचनस्य चरितार्थत्वादिति विदांकुर्वन्तुविद्वांसः

कर्म्मोंमें अनर्ह क्या योग्य नहि होता. जिस २ कर्म्मको कर्त्ताहै तिस २ कर्म्मके फलका भागी नहि होता (प्रश्न) नचेति द्विजाति जो हैं ब्राह्मण क्षत्री वैश्य इनके कर्म्मोंते हा निका हि नाम पतनहै इसवचनतें संध्योपासन जो है तिसकों द्विजातिकर्म्महोणेते अप्रा प्ति क्या संध्योपासनादिको नहि करणा (उत्तर) एह शंका नहि करणेयोग्य जिसतें पतितकोंहि व्रतचर्य्याके उपदेशहोणेते तिसका अंग हि संध्योपासनादिप्राप्ति है और इसीतें एह प्रतीत होआ कि वेदाध्ययनादि जो द्विजातिकर्म्महैं तिनकी हि द्विजातिपतितोंको हानि है कोई सभकी नहि क्योंके तिनकी हानिकर्के भी हानिवचनकों चरितार्थहोणेते इस बातकों पंडितलोक जाणें

अत्रेति इसमें जो पुरुषोंको पतन निमित्त हैं स्त्रियोंको बी सोई जानणे योग्य हैं और याज्ञवल्क्यनें इसमें विशेष भी कथन कियाहै नीचमें संगमकरणा गर्भका पातनकरणा भर्त्ताको मारणा एह स्त्रियोंकों विशेष कर्के पतनीय हैं ब्राह्मणजातीतें भिन्नजातीकी जो स्त्रीहै तिसकों भी पतितकामारणा और ब्राह्मणजातीते भिन्न जो भर्त्ताहै तिसकाभी जो मारणा एह भर्तृहिंसन पदका अर्थहै एह तीन कर्म हैं स्त्रियोंकों असाधारण क्या निश्शेषपतनके निमित्तहैं इहां अपिश ब्दकर्के महापातकाऽतिपातकाऽनुपातकभीहैं और बहुतवार किये जो उपपातक सो स्त्रियोंको नि श्चित पतनके कारणहैं इह हि शौनकजीनेकहेहैं ॥ और वसिष्ठजी कहतेहैं स्त्रीको तीनहि पातक लोकमे धर्मके जाणने वाले कहितेहैं स्वामीका मारणा १ दूसरेका गर्भ पातन २ और अपणे

अत्र यानि पुरुषाणां पतननिमित्तानि स्त्रीणामपि तानि ज्ञातव्यानि याज्ञव ल्क्येनतु विशेषोप्यऽभिहितः नीचाभिगमनं गर्भपातनं भर्तृहिंसनम् विशे षपतनीयानि स्त्रीणामेतान्यपिध्रुवम् १ अब्राह्मण्याअपिभर्तुःअब्राह्मणस्या ऽपिहिंसनमित्येतानि त्रीणि स्त्रीणामसाधारणानि पतननिमित्तानि ॥ अपि शब्देन महापातकातिपातकानुपातकानि अभ्यस्तान्युपपातकान्यपि स्त्रीणां ध्रुवं निश्चितं पतनहेतूनि इमान्येव शौनकेनोक्तानि ॥ वसिष्ठेन तु ॥ त्रीणिस्त्रियाःपातकानिलोकेधर्म्मविदोविदुः भर्तुर्वधो भ्रूणहत्या स्वस्य गर्भस्यपातनमिति इदमपिविशेषार्थं नतु पुरुषपतननिमित्तनिरासार्थम् किंच चतस्रस्तुपरित्याज्याः शिष्यगागुरुगाचया पतिघ्नीचाविशेषेण जुंगितोपगताचया इत्येतास्तु पतितास्त्यागार्थं गणिताः

गर्भका पातन३ एहभी स्त्रीयोंको विशेषार्थ है और पुरुषपतननिमित्त जो हैं तिनके दूरकरणके निमित्त नहिहैं अर्थात् पुरुषको जो पतननिमित्तहैं सोभी सभ और उनमे स्वामीका मारणा भ्रूणहत्याका कराणा- और अपणे गर्भका पातनकरणा ३-एह तीन कर्म विशेष पतनकारण हैं किंचेति इसकर्केभी पूर्वोक्त अभिप्रायकों हि कहतेहैं चार स्त्रियां त्यागदेणे योग्यहैं ॥ अब तिनकों कहितेहैं एकतो शिष्यके साथ संग करणेवाली १ और दूसरी गुरुकेसाथ संग करणेवाली २ और तीसरी स्वामीकों मारणेवाली ३ और चौथी जुंगित जो है प्रतिलोमज तिसके साथ संग करणेवाली ४ एह पतित स्त्रियां त्यागके निमित्त गिणिआं हैं

ऐह लेकर प्रायश्चित्तके करणेकी इच्छानहि करें तवइनका परित्याग करणे योग्यहै.और जो पतित स्त्रियांहैं तिनकी वस्त्र.अन्न गृहमें वास देणा इत्यादि कर्के रक्षाकरणी एह तात्पर्य है और प्रतिलोमज जो मनुष्य है तिसका नाम जुंगितहै जैसें ब्राह्मणीमें क्षत्रीतें जन्म जिसका इत्यादि नान्विति ( प्रश्णः ) पतिततें जन्मभयाहै जिसका तिसकों पतित कहतेहैं परंतु स्त्रीतें विना सो स्त्री पर गामिनी है केवल तिस स्त्रीकों ग्रहणकरे अरिक्था क्या केवल वस्त्रमात्र कर्के युक्तकों अर्थात् तिसकोपतितके घरसे विवाहलेवे परंतु शुद्धस्नान होईकों अपना वस्त्रदेकर्के और धन. उसका साथ न लेवे एह कहिता जो वसिष्ट और हारीत तिनका क्या अभिप्रायहै ( उत्तर )

---

एतासां प्रायश्चित्तमनिच्छन्तीनां परित्यागोविधेयः अन्यासां तु पतितानां चैलान्नगृहवासादिना रक्षणमेवेति तात्पर्य्यम् ॥ जुंगितः प्रतिलोमजः।(ननु) पतितेनोत्पन्नःपतित इत्याहुः अन्यत्रस्त्रियाः साहिपरगामिनी तामरिक्था मुपादेयादिति वदतो वशिष्ठस्य हारीतस्य च को ऽभिप्रायः॥ पतितोत्पन्न कन्यायाग्रहणं प्रायश्चित्तेन युक्तं चेत्तदा तत्पुत्रस्यापि संततित्वाविशेषात् कुतो न ग्रहणम् स्त्रीणामर्द्धंप्रदातव्यमित्यादिवचमविशेषेण कन्यायाः स्वल्पेन प्रायश्चित्तेन पुत्रस्य त्वऽधिकेन शुभाचारिभिर्ग्राह्यता युक्तैव प्रतिभाति व्रात्योत्पन्नंवत् पतितोत्पन्नोऽपि प्रायश्चित्तार्होभवेत् ततश्च संस्कारानंतरं स्वस्ववर्णैर्व्यवहार्य्योभवेत् नहि व्रात्यपतितयोर्गुणद्रव्ययोरिव वास्तवोभेदः

पतिततें जन्मी जो कन्या तिसका ग्रहण प्रायश्चित्त कर्के जद योग्यहै तद पतितका जो पुत्रहै तिसकों भी संततीका अविशेष होणेतें क्या कन्याके तुल्य होणेते ग्रहण किसतें नहिं होना स्त्रियोंकों अर्ध प्रायश्चित्त देणे योग्यहै इत्यादि वचन विशेष कर्के कन्याकों थोडे प्रायश्चित्त कर्के और पुत्रकों बहुत प्रायश्चित्त कर्के शुभाचारि जो हैं शुभके आचरण करणवाळे तिनोंनें ग्राहाता कहीहै इह वार्त प्रतीत हुंदी है ( प्रश्ण ) व्रात्यतें उत्पन्नभया जो है तिसकी न्यांई पतितोत्पन्न वी प्रायश्चित्त योग्यहोवे तिसतें संस्कारतें उपरंत अपणे अपणे वर्णोंकर्के व्यवहारयोग्य होना चाहिए ( उत्तर ) व्रात्य और पतितका गुणद्रव्यकी न्यांई वास्तव भेद नाहिं है

किंतु धूम्र.कृष्ण जो रंग हैं तिनकी न्याईं दोषतारतम्यकृत भेद है इसतें इहां एह अर्थहै पतित पुरुष करके उत्पन्न भया जो पुत्र सोवी पतित होता है अपणे पिताके पातित्याऽनुसारकरके सो प्रायश्चित्त योग्यहै और कन्या पतिता नाहि हुंदी॰ अब इसीकों वौधायन ऋषिकहिताहै अशुचीति पतितके वीर्य्यतें जन्मे जो हैं और प्रायश्चित्तोंकी इच्छा करते हैं तिनकों पतितोंसें तीसरा हिस्सा प्रायश्चित्तहै और स्त्रियोंकों तीसरे हिसेका तृतीयांश प्रायश्चित्त है इसका एह अर्थहै पतित जो पिता तिसके जो पतनीय कर्म हैं तिनके प्रायश्चित्तोंका तृतीयांश पतितोत्पन्न पुरुषोंको प्रायश्चित्तहै तिसका वी तृतीयांश प्रायश्चित्त पतितोत्पन्न स्त्रियोंकोंहै तिसतें पतितोत्पन्न कन्या अथवा पतितोत्पन्न पुत्र

किंतु धूम्रकृष्णयोरिव दोषतारतम्यकृत एव भेदोऽस्ति अतश्चाऽयमत्रार्थः पतितेन पुरुषेणोत्पन्नः पुत्रोऽपि पतितः स्वजनकपातित्यानुसारेण प्रायश्चित्तार्हः कन्यातु न पतितेत्यर्थः ॰ इदमेवाह वौधायनः ॰ अशुचिशुक्रोत्पन्नानामिच्छतां प्रायश्चित्तानि पतनीयानां तृतीयांशः स्त्रीणामंशास्तृतीयः अयमर्थः जनकस्यपतितस्य यानि कर्माणि पतनीयानि तत्प्रायश्चित्तानां तृतीयांशः पतितोत्पन्नानां पुंसां प्रायश्चित्तं तस्यापि तृतीयोभागः पतितोत्पन्नानां स्त्रीणामिति ततश्च पतितोत्पन्ना कन्या पुत्रो वा सदाचारिभिः प्रायश्चित्ततारतम्येन मेलनीयः ॰ अथेदानींतनाः केचनजनाः॰ प्रागऽतीव वलवद्भिर्भारतवर्षीयधर्माध्वविध्वंसनाय कृतावतारैरिव म्लेच्छापसदैरकारणं वलादेव स्वकीयान्नभोजनेन स्वकन्या
दिसंबन्धसंविधानेन चैवंविधेनाऽन्येनापि सद्यःपातित्यहेतुना स्वैःसाकं शयनासनपानादिव्यवहारप्रवर्त्तनेनाऽवशतया स्वधर्मात्प्रच्याविताना

होवे सो श्रेष्ठ आचार करणे वालेयोंने प्रायश्चित्त की तारतम्यता करके मेलने योग्य है ॰ अथेति इसमे औरभी विचार है ॰ इसकालविषे होणवाले जो कोईकलोक सो पिच्छे बहुत वलवाले और भारतवर्षके धर्मरूपमार्गके नाश करणेवास्ते किया है अवतार जिनोंने ऐसे जो म्लेच्छोंके समान हैं तिनोंकरके कारणते विना वलतेंही अपणे अन्नके भोजनकराणे करके और अपनी कन्याकेदेनकरके भी उनको अपने धर्ममे लेआउना इसप्रकारके होर कर्म करके भी केस कर्महैं शीघ्र हि पातित्यके हेतुहैं और आपणे साथ शयन और आसन और पानादि व्यवहारके वर्त्तनकराणे करके अवशतातेंअपणे धर्मतें दूरहोए जो वर्णाश्रमी लोक

रहेति तिनांकों तिस कालविषें म्लेच्छोंको आज्ञादेहोत्रां होयां तिस आज्ञादे ना पालनेतें सता बाही सदूणे वंशके नाशनूं निश्चयकर्के कालांतरविषें उचित जो प्रायश्चित्त तिसके आचरणकर्के बहुतपापको दूरकरणेको संभावनाकर्के तथाविध जो बहुत आपदा तिसके विषें प्राणांको रक्षा करणो हि परम धर्म है एह जो मन्न रहेहैं और चिरकाल तिनांकी बलीयता कर्के तिनांते आपणे आपनूं छुडाने वास्ते अवसरभूं ना प्राप्त होकर्के पुत्रपौत्रादि परंपराकर्के तैसेंही अर्थात् म्लेच्छ हि जो स्थितहैं उसीतें लेकर जो म्लेच्छीभूतहै ब्राह्मण क्षत्री वैश्य शूद्र इनांके कुलविषें उत्पन्न होएथे और पीछे जेडे होएहैं म्लेच्छ और अपणी नास्तिकतानूं रौरवादि नरकका साधन जाणकर्के कोईकभी पूर्वजन्मका सुकृतलेश था तिसका जो परिपाकहै पकणा तिसके

तदात्वे तन्निदेशातिक्रमे सद्यएव सकलस्वान्वयनाशं निश्चित्य कालान्तरसमुचितप्रायश्चित्ताचरणेन गुरुतरदुरितनिष्कृतिसंभावनया तथाविधायां गरीयस्यामापदि प्राणत्राणमेव परमं धर्मं मन्यमानानां चिरं तेषां बलीयस्तया तेभ्यः स्वात्मानं मोचयितुमवकाशमलब्ध्वा पुत्रपौत्रादिपारम्पर्येण तथैवावस्थितानां ततएव च म्लेच्छीभूतानां विप्रक्षत्रियविट्शूद्राणां कुलेषु प्रसूना म्लेच्छा वा स्वां नास्तिकतां विविधरौरवादि निरयं साधनतया कुतश्चिदपि प्राग्भवीयसुकृतलेशपरिपाकोदितेन शिष्टवाक्यादिना दृढमवधार्य भृशमनुशयानाश्चेत्प्रणिपातमात्रपरितुष्टेभ्यो दीनजनानुकम्पया तदुद्धारार्थैव भगवता विधिना सृष्टेभ्यः स्वप्रार्थनांजलिशताकृष्टेभ्यः शिष्टेभ्यः कथंचिदपि साध्वनुष्ठेन प्रायश्चित्तादिना नरकतरणोपायं स्वोचितनिगमानुमतदेवतासमाराधनाद्युपदेशं च वारं वारंप्रणिपत्यप्रार्थयेरन्

उदय होणे कर्के और शिष्टपुरुषांके वाक्यादिकर्के निश्चयसे जानकर अतिशयकर्के अनुशयानाः क्या नरकदुःखकेदूरकरणे वास्ते चिताग्रस्त होए २ जेकर नमस्कारमात्रतें प्रसन्नहोणवाले और दीनपुरुषोंपर दयाकरणवाले और दुःखिओंके उद्धारवास्ते मानो ब्रह्माजीने रचे होएहैं और पापीकी सहितअंजलिके प्रार्थना सुणकर दयार्द्रचित्तवालेहैं ऐसे शिष्टपुरुषांतें कदाचित् अच्छीतरां कीतेहोए प्रायश्चित्ततें नरकतरणेके उपायको और अपणे योग्य शास्त्रानुसार देवताके आराधनादि उपदेशको वार वार प्रणिपातकर्के क्या प्रणामकर्के प्रार्थना करें

तर्हीति : तद सो किसेक प्रकारसे नास्तिक्यबुद्धिते हटाएनुं अथवा सदाचारांके उपदेश करणेनुं योग्य हैन अथवा नहि ॐ पहले पक्षकोंलेकर कहतेहैं (प्रश्न) जेकर उह म्लेच्छाभास भी उपदेश के योग्यहैं तदकहो कउन प्रायश्चित्त उनको देणा चाहिए कि जो जन्मतेलेकर उनके आश्रित ना स्तिक्य बुद्धिको हरे और उनकेयोग्य कोनसे आचारहैं(उत्तर)इहिविचार अब करतेहैं तत्रेति तिस विषे जिनोको अपना उचित संस्कार प्राप्त होगयाहै ऐसे चारोंवर्णों विचों जिस वर्णको अपणी इच्छा ते अथवा म्लेच्छोंके वलसे म्लेच्छभाव प्राप्त होआहै और नास्तिक भाव हुआहै तिसको अपणा समुचितसंस्कारहि करणा चाहिए जो याज्ञवल्क्यादिमुनिओंने किहाहै परंतु पहिलेप्रायश्चित्त कर्के पापको हटाकर और पीच्छे संस्कार कराणा तिसते अनंतर अपने वर्णके उचितधर्मकी प्राप्ति

तर्हिते कथंचिदपि नास्तिक्यतो मुक्तिं स्वोचिताचारांश्चोपदेष्टुमर्हा नवा ॐ अर्हाश्चेत् कीदृशं प्रायश्चित्तं जन्मतःप्रभृत्याश्रितनास्तिक्यदोषमोषकं केच तदुचिता आचारा इतिविमृश्यते तत्र येषांचातुर्वर्णिकानां प्राप्तस्वो चितसंस्काराणां वलात्स्वेच्छया वा म्लेच्छादिहीनजातिभिः संसर्गो ना स्तिक्याद्याश्रयणं च तेषां मनुयाज्ञवल्क्याद्युक्तप्रायश्चित्तै स्तत्संसर्गनास्ति क्यजपापविनाशेन पुनःस्वस्ववर्णोचितधर्मप्राप्तिस्तुस्पष्टैव अयं तु विशेषः तेषां संसर्गकालतारतम्यपर्यालोचनया लघु लघीयो गुरु गरीयः प्राय श्चित्तप्राप्तिः नास्तिक्यस्य तु वेदादिप्रामाण्याविश्वासरूपस्य नास्तिक्यं व्रतलोपश्चेत्युपपातकप्रकरणे पाठेनोपपातकशुद्धिःस्यादेवं चान्द्रायणे न वा पयसा वा ऽपि मासेन पराकेणाथवा पुनरित्युक्तेषु प्रायश्चित्तेष्व न्यतमेन पापानुरूपेणोपदिष्टेन निष्कृतिः

होवेगी एह बात स्पष्टहै इतना इसविषे विशेषहै कि जो वर्णाश्रमी म्लेच्छ होएदेहैं तिनके संसर्गकालके न्यूनाधिकभावके विचारकर्के कि इनका कितना चिर भोजनादिमें संसर्ग रिहा है इसविचारकर्के छोटेसे छोटा वडेसे वडा प्रायश्चित्त आवेगा और जो उनको वेदादिविषे अविश्वासरूप नास्तिक्य भाव रिहाहै तिसपापके दूरकरणेवास्ते वेदादिविषे प्रामाण्यबु द्धि होणी अर्थात् वेदहि प्रमाणहै ऐसा विश्वासहोणा इसकर्के और ( नास्तिक्यं व्रत लोपश्च ) ऐसा उपपातकप्रकरणविषे पाठ है तिसका प्रायश्चित्तभी उसी जगाहै ( उपपातक शुद्धिः स्यात् ) इत्यादिवचनाविषे कहे जो प्रकारहैं तिन्हां विचों किसे एक कर्के शुद्धि होवेगी

येषामिति और जेडे अकृतसंस्कार हैं क्या जिनके यज्ञोपवीतादि संस्कार नहि होए और म्लेच्छादि संसर्ग उनको होआहे और नास्तिक भाव भी होआहे तिनको आपत्तिकर्के संस्कारके लोप होणेते इतऊर्ध्वंत्रयोप्येते इत्यादिवचनकर्के व्रात्यदोषको कहकर पीछे व्रात्यस्तोमयज्ञते विना उनकीशुद्धि नहि होती ऐसाकिहाहै तिसते ब्राह्मणादिचारवर्णको क्रमकर्के १६। २२। २४ वर्षादे अंदर व्रात्यतादोषके दूर करणेवास्ते व्रात्यस्तोम यज्ञका विधानहै तिस प्रायश्चित्त कर्के नष्ट होएहैं पाप जिनांदे तिनको भी यज्ञोपवीतादि संस्कारपूर्वक अपणे धर्मकी प्राप्ति होवेगी तिसपूर्वोक्त वचनका अर्थ एह है त्रय वर्ण ब्राह्मण क्षत्रिय और वैश्य यथाकाल क्या जि

येषां त्वऽकृतसंस्काराणामेव तैःसंसर्गो नास्तिक्याश्रयणं च तेषामापदाऽप्राप्तसंस्काराणामित ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः सावित्रीपतिता व्रात्या भवन्त्याऽऽर्यविगर्हिता इतिमनूक्तेरापद्यपि व्रात्यत्वस्याऽपरिहार्यतयाऽतऊर्ध्वंत्रयोऽप्येते यथाकालमसंस्कृताः सावित्रीपतिताव्रात्या व्रात्यस्तोमादृतेक्रतोरिति विप्रक्षत्रियविशां क्रमेण षोडशद्वाविंशतिचतुर्विंशतिसंवत्सराभ्यन्तरेऽनुपनीतानां व्रात्यतायाः. पर्युदासमुखेन व्रात्यस्तोमरूपप्रायश्चित्ताऽपनोद्यत्वोक्तेः तेन नास्तिक्यप्रायश्चित्तेन च नष्टपापानामस्त्येवोपनयनपूर्वकं स्वस्वधर्मप्राप्तिः ❀ शूद्राणांतु सावित्रीप्राप्तेरेवाऽभावेन तदभावप्रयोज्यत्वस्यैव व्रात्यत्वे प्रागुक्तवचनतोऽलाभाद्व्रात्यत्वप्रयुक्तप्रायश्चित्ताऽप्राप्तावप्यऽव्यवहार्य म्लेच्छादि स्पृष्टान्नभोजनादिमात्रप्रयुक्तप्रायश्चित्तस्य दिनगणनया कल्पितावृत्त्या नास्तिक्यस्य च चातुर्वर्णिकैःसर्वैरपि परिहार्यतया

स कालमें उनको संस्कार करणा था उस कालमे जेकर उपवीतादिसंस्कार ना होवे तद उनकी व्रात्यसंज्ञा है सो व्रात्य श्रेष्टपुरुषोंमे विगर्हित है अर्थात् भलेलोक उनके साथ वर्त्तन नहि करदे ❀ शूद्रोंके अर्थ कहतेहैं शूद्राणामिति शूद्रोंको सावित्रीका विधान नहि तिस कर्के तिनको सावित्रीके नाहोणेते व्रात्यता नहि होती और तत्प्रयुक्त प्रायश्चित्तभी नहि होता किंतु नहि जिनके साथ व्यवहार करणा तिन्हों म्लेच्छोंके स्पर्श कीतेहोए अन्नका जो भक्षण है तिसका हि प्रायश्चित्त है तिसविषे भी दिनोंके गिणने कर्के कल्पित होई जो आवृत्ति तिस कर्के और तिनको जो रिहा नास्तिकभाव तिसका निषेध चारोंवर्णोंको है

तदिति इसतें शूद्रोंकोभी नास्तिक्यका प्रायश्चित्त करणा चाहिए तिसके पीछे शूद्रोंकोउचित जो धर्म्म है तिसकीप्राप्ति योग्य है ⊛ और ब्राह्मणादिवर्णत्रयको १५ वर्षतेपीछे गौणकाल हैं तिस तेभी पीछे संस्कार अनापदविषे क्या स्वस्थताविषे नहि होवे अथवा थोडाकालभी अनापद्विषे संस्कार नहिहोवे तद पतित इसतें आदिलेकर जो मिताक्षरामें वसिष्ठजीका वचनहैं. तिसकर्के उद्दालक व्रत और व्रात्यस्तोम अथवा तिनों विषे एक अथवा मनुप्रोक्त त्रैमासिक व्रत जो है तिसको जो क्रमकर्के करणवाले हैं तिनका यज्ञोपवीत होवे एह मिताक्षरामें स्पष्टहै ॥ और इस स्मृतिका अर्थ एह है कि जिसकी सावित्री पतितहो जावे सो उद्दालकव्रत करे और दो २ महीने यावक क्या यवांके काढेकर्के वर्त्ते और १ महीना दूधकर्के और १५ दिन आमिक्षाहै

तदाश्रयणप्रयुक्तपापनाशक प्रायश्चित्तस्याचरणेन च स्वोचितधर्मप्राप्तिरुचितैव ⊛ त्रैवर्णिकानां पंचदशवर्षाधिककालं गौणकालादूर्ध्वमनापद्यनुपनीतानां किंचित्कालमपिवाऽनापद्यनुपनीतानां ॥ पतितसावित्रीकउद्दालकव्रतंचरेद् द्वौ मासौयावकेनवर्त्तयेत् मासं पयसा पक्षमामिक्षयाऽष्टरात्रं घृतेन षड्रात्रंमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेदश्वमेधावभृथं गच्छेद्व्रात्यस्तोमेन वा यजेतेति मिताक्षराधृतवसिष्ठवचनेनोद्दालकव्रतव्रात्यस्तोमयोरन्यतरन्मनूक्तंत्रैमासिकं च क्रमेण कृतवतामुपनेयता मिताक्षरादौ स्पष्टैव ॥ येषां तु पिता पितृपितामहौ पितृपितामहप्रपितामहाश्चाऽनुपनीताः सवर्णास्ववच व्रात्यजासु पुत्रानुत्पादितवन्त स्ते भृज्जकण्टकादिसंज्ञकाः

जो दूधविषे दहींमिलाकर वणे तिसकर्के और ८ रातां घृतकर्के और दो २ रातां अयाचित कर्के और ३ रात्र जल भक्षणकर्के और दिनरात्र उपवास करे अथवा अश्वमेध जिस स्थानमे होता है तहां जावे अथवा व्रात्यस्तोम करे इति ॥ और जिनका पिता अथवा जिनका पिता और पितामह दादा अथवा जिनका पिताभी और पितामह दादाभी और प्रपितामह पड़दादाभी अनुपनीत हैं क्या यज्ञोपवीतसे हीन है सो अपने वर्णकीयां स्त्रियां विषे अर्थात् ब्राह्मणव्रात्य ब्राह्मणीविषे और क्षत्रियव्रात्य क्षत्रियाणी विषे इत्यादि क्रमसे अथवा स्त्रियांभी व्रात्यजा होण तिनांविषे पुत्रोंको पैदे करदेहोए सो उत्पन्नहोए पुत्र भृज्जकंटकादि नामवाले हुंदेहैं

न्नदिति सोई शूद्रकमलाकरग्रंथ विषे मनुजीने कहाहै व्रात्येति व्रात्य क्या संस्कारहीन ब्राह्मणते उत्पन्नहोआ जो पुत्र है सो पापात्मा है और भृज्ज कंटक तिसका नाम है और आवंत्य और वाटधान और पुष्पशेखर एह सभ उसीके नामहैं एह व्रात्यब्राह्मणते ब्राह्मणीविषे उत्पन्नहोएके नामहैं एह कैककहतेहैं ॥ होर कोई ऐसा अर्थ करदेहैं कि व्रात्यब्राह्मणने ब्राह्मणीविषे भृज्जकण्टक और तिसते ब्राह्मणीविषे आवन्त्य और तिसते ब्राह्मणीविषे वाटधान और तिसते ब्राह्मणीविषे पुष्पशेखर इति ऐसेहि व्रात्यक्षत्रियते क्षत्रियाणीविषे झल्ल मल्ल लिच्छिवि नट करण खस द्रविड इति और व्रात्यवैश्यते वैश्याविषे सुधन्वा आचार्य कारूष विजन्मा मैत्र सात्वत इनानामांवाले उत्पन्न होतेहैं एह सभ शूद्रकमला

तदुक्तं ( मनुना ) व्रात्यात्तुजायते विप्रात्पापात्मा भृज्जकण्टकःआवन्त्यवाटधानौच पुष्पशेखरएवच विप्रायांजायतेव्रात्यविप्रजोभृज्जकण्टकइति अत्र यंव्यवस्था आवन्त्याद्यास्तस्यैव संज्ञा इतिमेधातिथिः अन्येतु भृज्जकण्टका द्विप्रायामावन्त्यः तस्मात्तस्यां वाटधानः तस्माच्च तस्यां पुष्पशेखर एवव्रात्यक्षत्रियात्क्षत्रियायां झल्लोमल्लश्चराजन्याद्व्रात्याल्लिच्छिविरेवच नटश्चकरणश्चैवखसोद्रविडएवचेतिझल्लादयः॥ वैश्यात्तुजायतेव्रात्यात्सुधन्वाऽऽचार्यएवच कारूषश्चविजन्माच मैत्रः सात्वतएवचेति सुधन्वादयोवैश्याजा एव इदंच शूद्रकमलाकरे स्पष्टम् एषांच व्रात्यत्वेऽपि विप्रत्वादिकं नहीयते विप्रत्वादेर्जातिरूपतया विप्रजातीयपुरुषाद्विप्रजातीयकन्यायामुत्पन्नापत्यमात्रस्य विप्रत्वात्तत्र चाद्दुष्टत्वस्याप्रयोजकत्वात् अतश्च तेषां विप्रत्वादे रनपगमात् ॥ अतिक्रान्ते तु सावित्र्याः काल ऋतुं

करग्रंथविषे स्पष्टहैं प्रयोजन एह है कि इनांको व्रात्यत्वके होआंभी ब्राह्मण क्षत्रिय वैश्य एह संज्ञा दूर नहि हुंदी क्यों कि विप्रत्वादिक जाति जिसके पुरुषभी विप्र और स्त्री तैसी तिनते जो होवेगा सो सभ विप्री जातिकाहि केवल उस जातिमे दुष्ट अदुष्टतना हि विचारहै और ऐसा नहि कि दुष्ट होवे सोई जातिका प्रयोजक है ऐसा विचार होणेते ॥ अतएव इसी कारणते इनाका विप्रत्वादि जातिके नहि दुरहोणेते एहांको प्रायश्चित्तके अर्थ लिखतेहै अतिक्रांतेइति ॥ इसका अर्थ एहहै कि सावित्रीका काल जद लंघ जावे अर्थात् जिससमय यज्ञोपवीत पाणा था तिस समयके व्यतीतहोआं दो महीने पर्यन्त

त्रैविद्यक क्या जिसमे वेदत्रयका विचार होवे ऐसे ब्रह्मचर्यको करे तिसके अनंतर यज्ञोपवीत पावें और तदनंतर वर्षपर्यंत जलका उपस्पर्शनरूप एक कर्महै तिसकों करे पीछे साविञी पढाणी चाहिए और जिनका पिता और पितामह अनुपनीत होण क्या पतितसावित्रीक होण सो ब्रह्महसंस्तुत हैं अर्थात् ब्राह्मणमारणवालेओंकी पंक्तिमे हैं उनके गमनको क्या संबंधको और भोजनको और विवाहको वर्जना चाहिए उह जेकर प्रायश्चित्तकी इच्छा करें तो पहले अतिक्रमविषे जो ऊपर विधान लिखयाहै सो करके पीछे यज्ञोपवीत तदनंतर उदकोपस्पर्शन कर्म करें तदनंतर जितने पुरुष अनुपनीत रिहेहैं तितनी संख्याकके वर्षाविच्च ( यावन्तोऽनुपनीताः ) इत्यादि ऋचांकर्के और यज्ञपवित्र नामा यज्ञ कर्के और साम पवित्र नामकर्के आंगिरसेन क्या अंगिरा कर्के कहे

त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं ततःसंवत्सरमुदकोपस्पर्शनमऽथाध्याप्यो यस्य पिता पितामह इत्यनुपनीतौ स्यातां ते ब्रह्महसंस्तुताः तेषां गमनं भोजनं विवाहमिति वर्जयत् तेषामिच्छतां प्रायश्चित्तंयथा प्रथमेऽतिक्रम ऋतुरेवं संवत्सरोऽथोपनयनं तत उदकोपस्पर्शनं प्रतिपुरुषसंख्यया संवत्सरान् यावन्तोऽनुपनीताःस्युःसप्तभिः पावमानीभि र्यदन्ति यच्च दूरक इत्येताभिर्यज्ञपवित्रेण सामपवित्रेणांगिरसेनेत्यपि वा व्याहृतिभिरेव मथाध्याप्योऽथयस्य प्रपितामहादीनां नानुस्मर्यत उपनयनं ते श्मशान संस्तुताः तेषामभ्यागमं भोजनं विवाहमिति वर्जयेत् तेषामिच्छतां प्रायश्चितं द्वादशवर्षाणि त्रैविद्यं ब्रह्मचर्यं चरेदथोपनयनं तत उदकोपस्पर्शनं पावमान्यादिभिरथ गृहमेधेनाऽध्यापनं ततोऽभिनिवर्त्तते तस्य यथा प्रथमेऽतिक्रमे ततऊर्ध्वं प्रकृतिवदिति ॥

होए कर्के और व्याहृतिआं जो हैं ॐ भूःइत्यादि तिनांकर्के शुद्धहोआं गायत्रीका उपदेश ग्रहण करे और जिनके पडदादेते आदलेकर यज्ञोपवीतको वार्ता भी नहि सुणी सो श्मशानसंस्तुत हैं क्या श्मशानकीन्याईं अपवित्र हैं तिनांके स्थानमै जाणा आउणा और तिनका भोजन और विवाह एह सभ वर्जितहै जेकर उह प्रायश्चित्तकी इच्छाकरें तद १२ वर्ष त्रैविद्यनामक ब्रह्म चर्यको करें तिसते अनंतर यज्ञोपवीत तदनंतर उदकोपस्पर्शन और पावमानोसें आदि लेकर जो ऋचाईं तिनाकर्के गृहमेध करणेते अनंतर अध्यापन क्या गायत्रीका उपदेश होवे और तिसतें अनंतर फेरभी कोई सावित्री त्यागे तद तिसको जैसे पहले अतिक्रमविषे प्रायश्चित्त किहाहै तैसाकरे और उसके आगे फेरभी पूर्ववत् अतिक्रमहोवे तो पूर्ववत् प्रायश्चित्त करे

प्रायइति एह पूर्वोक्तव्यवस्थापक प्रायश्चित्तमयूख और प्रायश्चित्तोद्योत और प्रायश्चित्तमुक्तावली आदिक बहुत प्राचीनग्रंथोंविषे लिखेहोए आपस्तंबजीके वचनके अनुसार प्रायश्चित्तकरणकरके दूरहोए हैं पाप जिनोंके उनका उपनयनकरके पीछे आपोआपणे धर्मकी प्राप्तिहै और शूद्रोंको जिस तरहां अपणे धर्मकी प्राप्ति हुंदीहै सो पीछे कहचुकेहैं इनका व्रात्यत्वदोष नही है इसीकरके तिस के अर्थ कोई प्रायश्चित्त भी नहीहै और इसकेआगे जेकर वृद्धप्रपितामहको आरंभकरके अग के जनकोंका उपनयन नहि सुणया तद तिनांकीयां आपोआपणे वर्णोंकीयां स्त्रियांविषे उत्पन्न होए जो पुरुष तिनांको बहुत प्रायश्चित्त करणे करके भी उपनयनादि संस्कारकी योग्यता नहि है

प्रायश्चित्तमयूख प्रायश्चित्तोद्योत प्रायश्चित्त मुक्तावल्यादि बहुतर प्राचीनग्रन्थ निबन्धधृतापस्तम्बवचनानुसारि प्रायश्चित्ताचरणेन निर्णिक्तपातकाना मुपनयनपूर्वकं स्वस्ववर्णोचितधर्म्म प्राप्तिरस्त्येव शूद्राणां तु पूर्ववदेव तेषां व्रात्यत्व प्रयुक्तस्य पापविशेषस्याऽभावात् अतः परं च वृद्धप्रपितामहमारभ्य येषां जनकाना मुपनयनाभावः तेषां सवर्णास्वेवोत्पादितानामपि न प्रायश्चित्तस्य गुरुतरस्याऽप्याचरणेनोपनयनप्रभृति वैदिक संस्कारयोग्यताऽऽपस्तम्बेन चतुर्थ पुरुषावध्येवव्रात्यत्वे प्रायश्चित्ताभिधानात् ॥ नचाऽऽपस्तम्बेन यस्य प्रपितामहादीनां नाऽनुस्मर्यत उपनयनमित्युपक्रम्य प्रायश्चित्ताभिधानात् तत्र चादिग्रहणेन ततः प्राचामप्यनुपनीतत्वे प्रायश्चित्तेन व्रात्यत्वनाशो युक्त एवेति वाच्यम् ॥ उक्तवचनं व्याचक्षाणेन भाष्यकृता हरदत्तेन प्रपितामहादि प्रपितामहादारभ्य प्रपितामहः पितामहः पिता स्वयं च यथाकालमिति ते तथाविधाः समाएवकाः

क्योंकि आपस्तंबजीने चौथे पुरुष तक हि व्रात्यत्वका प्रायश्चित्त विधान कीताहै (प्रश्न) आपस्तंबजीने यस्य प्रपितामहादीनां इत्यादिवचनकरके आरंभ जद कीता और प्रायश्चित्तविधान कीता उसजगा चकारके ग्रहण करणेते तिनांते अगलयांकाभी ग्रहण हुंदाहै तोभी जेकर अनुपनीत होण तोभी उनको प्रायश्चित्त करणा चाहिए (उत्तर) एह पीछेकिहा जो है आपस्तंबजीका वचन इसकी व्याख्याकरणवाले जो हैं भाष्यकार हरदत्त तिनांने प्रपितामहादि इसका एह अर्थ कीताहै किप्रपितामह और पितामह और पिता एह सभे अनुपनीत होण तो बालकके सहिततथाविध हैं

इसेति और श्मशानतुल्य हैं इतनाहिं किहा है और जिसके प्रपितामहके पिताका उपनयन नहिं हैं वह तिनांविषे प्रायश्चित्तका अर्थ नाहे किया तथापि तिनांकी एक वार्ता है कि आपो आप के वर्णोविषे उत्पन्न होणे करके पूर्वोक्त रीतिसें विप्रत्वादिजातिकों न दूर होणेतें शूद्रकी अपेक्षातें उह श्रेष्ट हैं ॥ कुच्छ होर कहते हैं किंचेति अध्ययन जो है वेदकापढना तिसका अंग है उपनयन तिसकी प्राप्तिके नहिं होयां उपनीय गुरुः इत्यादि वचनकर्के शौचाचारों की शिक्षाकों उपनयनके अंगिताकी सिद्धीतें तिसका अंग जो उपनयन तिसकी भी प्राप्ति होई सो उपनयन अपणे समीप होणा इसीका ज्ञापक वचा प्राप्तिके करणवालाहे कोई यथार्थ रूप

इमशानतुल्या इत्यादि व्याख्याय यस्य तु प्रपितामहस्य पितुराऽरभ्य नाऽनुस्मर्यत उपनयनं तत्र प्रायश्चित्तं नोक्तमित्युपसंहारात् परंत्वेतषां सवर्णाजत्वेन प्रागुक्तरीत्या विप्रत्वाद्यनपायाच्छूद्राऽपेक्षयोत्कृष्टत्वमस्तीति युक्तम् किंचैषामध्ययनांगोपनयनप्राप्त्यभावेऽपि उपनीय गुरुःशिष्यं महाव्याहृतिपूर्वकम् वेदमध्यापयेच्चैनंशौचाचारांश्चशिक्षयेदितिवचनेन शौचाचारशिक्षणस्याऽप्युपनयनांगितायाःसिद्धेस्तदंगोपनयनप्राप्तिरस्त्येव तच्चस्वसमीप प्रापणमात्ररूपमितिबोध्यम् ० नच निषेकादिःश्मशानान्तो मंत्रैर्यस्योदितोविधिः तस्यशास्त्रेऽधिकारोऽस्मिन् ज्ञेयोनान्यस्यकस्यचिदिति मनुना समंत्रकश्मशानान्तविधिमतामेव शास्त्रोक्तानुष्ठानाधिकारो बोधितः व्रात्यजानां पुनः संकरजातीयप्रकरणमध्ये पाठात्तत्समानधर्मत्वप्रतिपादनेतात्पर्यावगमात्

की नहि करदा एह वार्त्ता जाणणे योग्य है और इसवचनका अर्थ एह है कि गुरु शिष्यकों यज्ञोपवीत देकर महाव्याहृतिपूर्वक वेदको पढावे और शौचाचारोंको सिखावे (प्रश्न) निषेकादीति मनुजीका वचन हे इसका एह अर्थ है कि जिस पुरुषकी निषेक जो है गर्भाधान तिसते आदि लेकर श्मशानपर्यंत मंत्रोंकर्के विधि कही है तिसका इस शास्त्रमे अधिकारहे और किसेका नाहि हे १ इसवचनते जिनांके संस्कार मंत्रांकर्के होएहैं तिनांकाहि शास्त्रोक्तविधिमे अधिकार है एह प्रतीत हुंदाहै और जो व्रात्योंके पुत्र हैं उनका संकरजातिके प्रकरणविषे पाठहोणेते तिसते जापयाहै कि तिनांसंकरोंके हि समान हैं ऐसा तात्पर्य्यहोणेवं

और जो संकरजातिहैं सो सभ शूद्रोंके तुल्य हैं इनवचनसें शूद्रोंकी तुल्यताका बोध होणेते और स्त्रीयोंको और शूद्रोंको अमंत्रक संस्कार है इसवचनकर्के तिनव्रात्यसंकरोंको मंत्रका अधिकार हि नहि है इसते कैसे उपनयनपूर्वक शौचोंका और सदाचारोंका शिक्षण होवे (उत्तर) ऐसा मत कहो कि मंत्रपदकर्के नाममंत्रका भी ग्रहण होणेते द्विजानामिति द्विज जो हैं ब्राह्मण क्षत्रिय वैश्य इनके १६ सोला संस्कारहैं शूद्रोंके १२ और संकरोंके ५ संस्कार कुलधर्मते हैं १ वेदव्रत उपनयन महानाम महाव्रत इनकेविना शूद्रोंके १२ संस्कार हैं परन्तु सभ नाममंत्रो हि हुंदेहैं २ एइ शूद्रकमलाकर ग्रंथ विषे लिखा

तेषांच शूद्राणांचसधर्माणः सर्वेपध्वंसजाः स्मृताइत्यनेन शूद्रसधर्मत्वबोधनात् स्त्रीशूद्राणाममंत्रकमितिवचनेन तेषां मन्त्राधिकाराभावबोधनात् कथमुपनयनपूर्वकशौचाचारशिक्षणप्राप्तिरिति वाच्यम् ॥ निषेकादिवाक्ये मंत्रपदेननाममंत्रस्याऽपिग्रहणात् द्विजानांषोडशैवस्युः शूद्रस्रद्वादशैवहि पंचैवमिश्रजातीनांसंस्काराःकुलधर्मतः वेदव्रतोपनयनमहानाम्नीमहाव्रतम् विनाद्वादशशूद्राणांसंस्कारानाममन्त्रतइति शूद्रकमलाकरधृतवचनेन तेषां नाममंत्राधिकारित्वबोधनात् अत्र चोपनयनशब्देनाऽध्ययनांगमेवोपनयनं विवक्षितं पूर्वोत्तरसाहचर्यात् अतएव महामहोपाध्यायगागाभट्ट कृत निबन्धे व्रात्यादीनां शौचाचारशिक्षणांगोपनयनप्राप्त्युक्तिः संगच्छते तत्र निषेकादिवचनेन शास्त्रोक्तसकलधर्माधिकारस्यैव नियमाच्च विप्रस्याप्यापत्तारतम्येन हीनजातिधर्माश्रयणास्याभिधानात् अतएव

जो वचनहै तिसकर्के नाममंत्रके अधिकारका बोध होणेते और व्रात्योंको उपनयन किहाहै सो भी अध्ययनका अंग है कोई यथार्थ नहिहै इसीकर्के महा महोपाध्याय गागाभट्ट जीने बनाएहोए निबंधविषे व्रात्योंको शौच और आचार की शिक्षाका अंग जो उपनयनहै तिसकी प्राप्तिका वचन संगत हुंदाहै और तिसस्मृतिविषे जो निषेकादि वचनहै तिसकर्के शास्त्रकेकहे होए सभधर्म्मके अधिकारका नियम होणेते और ब्राह्मणको भी आपत्तिके थोडे बहुतहोणे कर्के हीन जातिके धर्म्म जो हैं कृष्यादि तिनके स्वीकार विषे आज्ञा होणी इसते एहि प्रतीत होआ कि जो धर्म्म देश कालानुसारिजिसको उचित होवे तिसको आज्ञा होणी चाहिए इसीका श्लोकहै

देशोतिं मनुजो देशोंके धर्म और जातियोंके और कुलोंके सनातन धर्म और पाषंडियोंके धर्म इसशास्त्रविषे कहते भये इसते एह वार्ता संगत होई जेकर ऐसा नहि मानो तो पाषंडियोंको मंत्रपूर्वक संस्कार के नाहोणेकर्के ग्रंथके आरंभका विरोध स्पष्ट हि है जो एह वचनहै कि स्त्रियोंको और शूद्रोंके संस्कार मंत्रते विना कहे हैं सो वैदिक मंत्रका निषेधहै औरका नहि इसते विरोध नहि आवेगा और किहा जो शास्त्रविषे अधिकार उनककर्मा शास्त्राध्ययनके हि अधिकार विषे विवक्षा होणेते दोषका लेशभी नहि आवेगा अतइति इसी कारणते तिनांके प्रपितामहते पहले जो अनुपनीत थे तिनांका व्रात्यत्व कदेभी

देशधर्मान् जातिधर्मान् कुलधर्मांश्चशाश्वतान् पापण्डगणधर्मांश्चशास्त्रेस्मिन्नुक्तवान्मनुरितिसंगच्छते अन्यथा पापण्डानां मंत्रपूर्वकसंस्काराभावे नोपक्रमविरोधः स्पष्टएव स्त्रीशूद्राणाममंत्रकमित्यस्य च वैदिकमंत्ररहितमित्यर्थेन विरोधाभावात् शास्त्रेऽधिकार इत्यनेन शास्त्राध्यापनाधिकारस्य विवक्षणे दोषलेशस्याप्यऽभावाच्च. अतश्च तेषां प्रपितामहप्राक्कालप्रभृत्यनुपनीतानां व्रात्यत्वानपगमेऽपि शूद्रसमानधर्मतया नास्तिक्यम्लेच्छसंसर्गपरिहारपूर्वकमुचित प्रायश्चित्तेन शुद्धानामस्ति प्रागुक्तद्वादशसंस्कारप्राप्तिः येषां पुनश्चातुर्वर्णिकजत्वनिश्चयोऽपि नास्ति चिरं म्लेच्छादिभिःसंसर्गात् तेषामप्यस्ति पश्चात्तप्यमानानां नास्तिक्यपरिहारपूर्वकमास्तिक्याश्रयणेन भक्तिशास्त्राद्यधिकारोऽहिंसादि सामान्यधर्मप्राप्तिश्च

नहि दूर होवेगा परंतु शूद्रको समानधर्मता अर्थात् शूद्रतुल्यताकर्के नास्तिक्यदोष और म्लेच्छ संसर्गदोषका परिहार पूर्वक किहे होए उचित प्रायश्चित्त कर्के शुद्ध और उक्त १२ संस्कारकी प्राप्ति होवेगी और जिनांका चारवर्ण विषों एहहै ऐसा निश्चय नहि है क्योंकि चिरकालते म्लेच्छोंके संसर्गते म्लेच्छ होए होए हैं और किसीकभाग्यसे सत्संगपाकर अनुतापको जो प्राप्तहोएहैं तिनकों भी नास्तिक्यपरिहार पूर्वक आस्तिक्यमतके आश्रयकर्के भक्तिशास्त्रका अधिकार है और अहिंसादि सामान्यधर्मकी प्राप्ति हुंदीहै.

तेयेति सोई दिखाईदी है सूत्र करके ( आनिन्द्ययोनोति ) एह भक्ति सूत्रके दूसरे अध्याय विषे और दूसरे आह्निक विषे ७८ सूत्रहै इसका अर्थ भाष्यकार स्वप्नेश्वरजीने इस तहीं कीताहै कि निन्दित चांडालादि योनिपर्य्यंत भक्तिका अधिकारहै क्यों कि संसारसागरमे जो दुःखहै तिसको सभकोई दूर कीयाचांदाहै इसविषे किसी भेदके नहि होणेते ? प्रश्न ? वेदाध्यायनका जिनको नहि अधिकार तिनांको द्विजाति भावसे दूरहों आंको किसककै भक्तिमे अधिकारहै ? उत्तर ? ऐसा मत कहो परंपराते इस मार्गका स्थापन होणेते नोदनारूपधर्म्म शास्त्रयोनिहै क्या शास्त्रसे उत्पन्नहै इस न्यायते अलौकिक जो अर्थहै

तथाहि आनिंद्ययोन्यधिक्रियते पारंपर्यात् सामान्यवदिति भक्तिसूत्रे द्वितीयाध्याये द्वितीयाह्निकेऽष्टसप्ततितमं सूत्रम् अस्यचार्थो भाष्यकृता स्वप्नेश्वरेणएवंविवृतः निन्दितचाण्डालादियोनिपर्यन्तं भक्तावधिक्रियते संसार दुःखजिहासाया अविशेषात् अथ वेदाध्ययनानधिकारात् कथ मत्रैवर्णिकानां स इतिचेत्तत्राह पारंपर्यादिति चोदनालक्षणोऽर्थोधर्मः शास्त्रयोनित्वादितिन्यायादलौकिकोऽर्थः श्रुत्यैकसमधिगम्य इत्यत्र न विप्रतिपद्यामहे किंतु स्त्रीशूद्रादीनामितिहासपुराणादिद्वारा चाण्डाला दीनां च स्मृत्याचारवदुपदेशपारंपर्येण ज्ञानमपि श्रुतिमूलमेव भवति यथा तेषां सामान्याऽहिंसाधर्मादिज्ञानं अन्यथा तदसिद्धिप्रसंगादिति अनेनच सूत्रभाष्यसंदर्भेणस्पष्टएव मनुष्यमात्रस्य भक्तिशास्त्राधिकारःएवं प्रत्यभिज्ञाशास्त्रेऽपिजनस्येत्युक्त्या जन्ममरण प्रयुक्तक्लेशजिहासावतः प्राणिमात्रस्य ग्रहणमित्युक्तेः तत्राप्यधिकारः

सो केवल श्रुतितेही जाणीदाहै इसमे किसीके भी विप्रतिपत्ति क्या विरोध नाहिहै किंतु स्त्रियों को और शूद्रोंको और जो इनके तुल्यहैं तिनको इतिहासपुराणादिद्वाराहै और चांडालादि योंको स्मृति और आचार वालयोंके उपदेशकी परंपरासे जो है सो सभ श्रुतिमूल हिहै तिस तहीं तिनको सामान्य अहिंसादि धर्म्मादिओंका ज्ञानहै जेकर ऐसा नहि स्वीकार होवे तद सभ को उसधर्म्मकी असिद्धिका प्रसंग होवेगा इससूत्रके भाष्यके संदर्भसे स्पष्टहि मनुष्यमात्रको भक्ति शास्त्रका अधिकार प्रतीतहोआ और इसीप्रकार प्रत्यभिज्ञाशास्त्र विषेभी जनस्यइसवचनसे जन्ममर णके क्लेशको दूरकरणेकी इच्छावाले प्राणिमात्रके ग्रहणते भक्तिकाअधिकार सभको प्रतीत होआ

तथेति तैसेहि मंद २ क्रिया जो है वर्णाश्रमके योग्य तिसके लोपहोणेते एह जो हैं क्षत्रियजातियां क्या राजकुलके लोक वृषलत्व को क्या शूद्रभावको लोक विषे प्राप्त होर हीआंईं और ब्राह्मणके ना मिलनेसेभी इनको शूद्रत्व होआ ॥ १ ॥ तिनकानाम कहतेहैं पौंड्रेति पौंड्रकनामा इक जातिहै १ और चौड्र २ और द्रविड ३ और काम्बोज ४ और यवन ५ और शक ६ और पारद ७ और पल्हव ८ और चीन ९ और किरात और दरद १० और खश ११ ॥ २ ॥ मुखति एह सभ ब्राह्मण क्षत्रिय वैश्य शूद्र इनांते हि उत्पन्न होएदे हैव और जो बाहर जातिहैं म्लेच्छोंकीयां वाणिआं और आर्य्य जो श्रेष्ठ हैं तिनकीयां वाणिआं वालेभी एह सभ दस्यु क्या चोर नाम करके व्यवहृतहैं॥ ३ ॥ एह मनुजीने दस्यु शब्द करके किहे

तथा शनकैस्तुक्रियालोपादिमाःक्षत्रियजातयः वृषलत्वंगतालोके ब्राह्मणादर्शनेनच १ पौण्ड्रकाश्चौण्ड्रद्रविडाःकाम्बोजायवनाःशकाः॥ पारदाःपल्हवाश्चीनाः किरातादरदाःखशाः २ मुखबाहूरुपज्जानांयालोकेजातयोबहिः॥ म्लेच्छवाचश्चार्यवाचःसर्वेतेदस्यवः स्मृताः ३ इतिमनुना दस्युशब्देन व्यवहृतानां व्रात्यक्षत्रियादीनां धर्मे व्यवस्थापनं कथं स्यादिति * राजधर्मेषुपञ्चपष्टितमाध्याये ॥ यवनाः किरातागांधाराश्चीनाःशबरबर्बराः शकास्तुषाराः कंकाश्च पल्हवाश्चान्ध्रमद्रकाः १ पौण्ड्राःपुलिन्दा रमठाःकाम्बोजाश्चैवसर्वशः ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्चमानवाः २ कथंधर्मांश्चरिष्यन्तिसर्वेविषयवासिनः मद्विधैश्चकथंस्थाप्याः सर्वेवैदस्युजीविनः ३ एतदिच्छाम्यहंश्रोतुंभगवं स्तद्ब्रवीहिमे त्वंबंधुभूतोह्यस्माकं क्षत्रियाणांसुरेश्वरेति ४ मांधातुरिन्द्रंप्रतिप्रश्नः

होए व्रात्यक्षत्रियादियोंका धर्म्म विषे स्थापन किस तरां होवे इस ते प्रतीत हुंदाहै कि सभको धर्म्म विषे स्थापनकरणा चाहिए * और राजधर्म्म विषे ६५ अध्यायविषे भी किहाहै यवन १ किरात २ गांधार ३ चीन ४ शबर ५ बर्बर ६ शक ७ तुषार ८ कंक ९ पल्हव १० अंध्र ११ मद्र १२॥ १ ॥ पौंड्र १३ पुलिंद १४ रमठ १५ कंबोज १६ एह सभ चार वर्णकेहि पहलेथे॥ २ ॥ एह अब किस्मतरां धर्म्मको करणगे सभदेशोंके वस्सणेवाले और मेरे जैसे करके किस तरां एह दस्युलोक धर्म्मविषे स्थापित होणगे ॥ ३ ॥ एतदिति एह मैं सुणनेदी इच्छा करनाहां भगवन् तुं कहो मेरे तांईं तुं बंधुरूप हैं असाक्षत्रियांका हे इन्द्र ॥ ४ ॥ एह राजे मांधाताका इंद्रके प्रति ( प्रश्न ) होयां कहते हैं ॥

मंतोति मातापिताकी सेवा संपूर्ण पूर्वोक्त दस्युयोने करणी चाहिए और आचार्यको और गुरुकी सेवा और तैसेहि आश्रमवासियोंकी १ और भूमि पति जो हैं राजा तिनकी सेवा करणी चाहिए और वेदके धर्मों की क्रिया जो अगले श्लोकमें है सो सभ इनका धर्म्महै २ पितरोंके यज्ञ और खूह और बाउलीयां और शयन शय्या और दान यथाकाल ब्राह्मणके तांई सदा एह दस्युलोकदेण ३ और अहिंसा क्या किसे को मारणा नहि और सत्य कहणा और क्रोध नहि करणा और जीवका देणेवालेकी रक्षा करणी और पुत्र और स्त्रियोंकी पालना करणी शौच क्या पवित्र रहणा और द्रोह नहि किसे साथ करणा ४ और यज्ञोंकी दक्षिणा दुआणी और आपदेणी ऐश्वर्यकी इच्छा वालन

मातापित्रोर्हिशुश्रूषाकर्त्तव्या सर्वदस्युभिः आचार्यगुरु शुश्रुषातथैवा श्रमवासिनाम् १ भूमिपानांचशुश्रूषाकर्तव्यासर्वदस्युभिः वेदधर्म क्रियाश्चैव तेषांधर्मोविधीयते २ पितृयज्ञास्तथाकूपाः प्रपाश्चश यनानिच॥ दानानिचयथाकालं द्विजेभ्योविसृजेत्सदा ३ अहिंसासत्यमक्रो धोवृत्तिदायानुपालनम् भरणंपुत्रदाराणां शौचमद्रोहएवच ४ दक्षिणास र्वयज्ञानांदातव्याभूतिमिच्छता पाकयज्ञामहार्हाश्च दातव्याःसर्वदस्युभिः ५ एतान्येवप्रकाराणिविहितानिपुराऽनघ सर्वलोकस्यकर्माणिकर्त्तव्यानी हपार्थिवे ६ तीन्द्रस्योत्तरेण मातापितृशुश्रूषादेर्लिङ्तव्याभ्यां विधानादि मेधर्मा इतिस्पष्टमेव तत्र उपनीय तु यः शिष्यंवेदमध्यापयेद्बुधः सांगं चसरहस्यंचतमाचार्यंप्रचक्षत इति लक्षितस्य वेदाध्यापकस्याचार्यस्या संभवेऽपिउपनयनपूर्वकशौचाचारशिक्षकर्त्तवाऽचार्यपदेनाभिधीयते

और अनेक प्रकार के बहुत मूल्यवाले अन्नाद संपूर्ण दस्युओंने दुआणे चाहिए ५ एह इसप्रकार विधियां कहियां हैं हे निष्पापराजन् सर्व लोकके एह साधारण कर्म हैं ६ एह(उत्तर) इंद्रका है मातापिताकी सेवा आदि लिङ् प्रत्यय करके और तव्य प्रत्यय करके विधान होणेते एह धर्म्म इना दस्युलोकांके स्पष्ट प्रतीत हुंदे हैन॥ तबेतें जिसविषे आचार्यादिकांकी सेवाकरे ऐसा अद किहा तद आकांक्षा होई किसको आचार्य कहते हैं तिसवास्ते स्मृति है उपनीय जो शि ष्यको यज्ञोपवीत देकर पीछे भडावे सांग वेदको तिसको आचार्य कहते हैं इस लक्षणवाला अध्यापक जेकर नहि मिले तथापि शौचआचारकी शिक्षाकरणवाला आचार्य जाणणा॥

एवमिति इसीतर्हां गुरुपद कर्के वी निषेकादि इस लक्षण कर्के किहा होआ गुरु न मिले इस स्मृतिका अर्थ एह है कि निषेकते आदलेकर यथा विधि- जो संस्कारकरे और अन्नकर्के पालना करे सोब्राह्मणादि गुरु किहाहै इस विना कहतेहैं गुशब्द इविगुशब्दकर्के अंधकारकिहाहै तिसका निरोधक क्या अंधकारका निरोध करणवाला जो है सो गुरु किहाहै इस लक्षण वाला योग्यमंत्रादि दान कर्के नरकको निवृत्ति करणवाला गुरु इसजगा ग्रहण करना इनांकी सेवा करणीदस्यु लोकोंका धर्म्महै एह पूर्व साथ संबंध करणा(प्रश्न)जो पिच्छे कहे हैंदस्यु आदिलोक तिनांको किसेवी मंत्रका अधिकार नहि है किसतर्हां इनको अधिकार कहते हो(उत्तर) अगस्त्य संहिता विषे लिखयाहै शुचीति पवित्रव्रत है अतिशयकर्के जिनांका ऐसे जो हैं शूद्र धार्मिक और ब्राह्मणोंके सेवक और पतिव्रता स्त्रियां और प्रतिलोमज और अनुलोमज संकरजाति

एवं गुरुपदेनापि निषेकादीनिकर्माणियःकरोतियथाविधिसंभावयति चान्नेनसविप्रोगुरुरुच्यत इति पारिभाषिकस्य गुरोरऽसंभवेऽपि गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः अंधकारविरोधित्वाद्गुरुरित्यभिधीयत इतिलक्षितो योग्यमंत्रादिदानेन निरयरूपांधकारनिवर्त्तको गुरुरिह गृह्यते ॥ नचैषां कस्मिन्नपि मंत्रे नाधिकार इतिवाच्यम् ॥ अगस्त्यसंहितायाम् शुचिव्रततमाःशूद्राधार्मिकाद्विजसेवकाः स्त्रियःपतिव्रताश्चान्ये प्रतिलोमानुलोमजाः लोकाश्चाण्डालपर्यन्तंसर्वेऽप्यत्राधिकारिणइत्यादिना राममंत्रे मनुष्यमात्रस्याधिकार बोधनात् तथा श्रुतिर्ब्रह्माहषड्वर्णंस्मृतिर्वर्णद्वयात्मकम् षड्वर्णंब्राह्मणादीनां त्रयाणां यद्द्विवर्णकम् १ तदन्येषांदेशिकेन वक्तव्यं तारकंपरम्

और चांडाल पर्य्यंत जो लोक हैं सो सभ इस भक्तिमें अधिकारी हैं इत्यादि कर्के श्रीरामजीके मंत्रविषे मनुष्यमात्रके अधिकारका बोध होणेतें तथेति तैसेहि दिखाईदाहै श्रुति जो है वेद सो छे ६ अक्षरां वाले ब्रह्मको कहता है अर्थात् वक्ष्यमाण जो षडक्षर मंत्र है सोई ब्रह्म है ऐसा बोध करदा है और स्मृति जो है सो दो २ अक्षरके मंत्रको ॥ राम ॥ इसको ब्रह्मकहती है इसमें विवेक कहते हैं कि ६ अक्षरके मंत्रका अधिकार ब्राह्मणादि तीन वर्णोंको है और दो २ अक्षर वालेका अधिकार शूद्र और तिन्नांते होर जो हैं संकर जाति और म्लेच्छ तिन्हांको देशिकने क्या गुरुने कहणा चाहिए कैसा इह मंत्र है परम तारकहै क्या उद्धारकरणे वाला है इसी का अर्थ प्रगटकर्के कहते हैं

॥ ॐरामायनमः ॥ एहि षडक्षर मंत्र जान्नणा पूर्व वाक्यके साथ एकवाक्यता होणेते श्रौर होरणा सभना को रामनाम मंत्रके हि अधिकार की प्रतीति होणते एवमिति इसीप्रकार ब्रह्मोत्तरखण्डविषे शिवजीके पंचाक्षर का प्रसंग ल्याकर कहते हाए कि महापातक रूप शुष्कवन है तिसविषे एह मंत्र अग्नि की न्याई है श्रौर बिना ॐका रके सो एह मंत्र पंचाक्षर बनया है इसके अधिकारियोंको कहते हैं स्त्रियोंने १ शूद्रोंने २ संकरोंने ३ मुक्तिकी इच्छावालेयोंने धारिदाहैं इसकी कोई दीक्षा नहि श्रौर होम श्रोर संस्कार श्रौर तर्पण भी नहि २ कोई कालका नियम भी नहि एह सभनोंने जपणा चाहि

इत्यनेन त्रैवर्णिकानामोंरामायनमइति षड्वर्णे पूर्ववाक्यैकवाक्यतया तदन्येषां सर्वेषामपि मनुष्याणां रामनाममंत्रेऽधिकारावगमाच्च एवंब्रह्मो त्तरखण्डे शिवपंचाक्षरं प्रक्रम्य महापातकदावाग्निः सोऽयंमंत्रः षडक्षरः प्रणवेनविनामंत्रः सोऽयंपंचाक्षरोमतः १ स्त्रीभिः शूद्रैश्चसंकीर्णैर्धार्यतेमु क्तिकांक्षिभिः नास्यदीक्षानहोमश्च नसंस्कारोनतर्पणम् २ नकालनियम श्चात्र जप्यः सर्वैरयंमनुः वैश्यैःशूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्चमानवैरित्यनेन शिवपंचाक्षरमंत्रे म्लेच्छादीनामप्यधिकारस्य विस्पष्टमवगतेश्च वेदधर्म क्रियाइत्यनेन वेदमूलकस्मृत्याद्युक्त शिवविष्ण्वादिभक्तिसमाश्रयणमुच्यते मांहिपार्थव्यपाश्रित्ययेऽपिस्युः पापयोनयः स्त्रियोवैश्यास्तथाशूद्रास्तेऽ पियान्तिपरांगतिमिति भगवद्गीतासु भगवता स्वसमाश्रयणाभिधानात्

।

ए वैश्य शूद्र म्लेच्छ श्रौर इनाते होर जो मनुष्य हैं भक्तिवाले इना सभनाने जपना चाहिए इसकर्के सभना म्लेच्छादिंयोंको अधिकारकी स्पष्ट प्रतीति होणेते श्रौर वेद धर्म क्रिया जो कहीहे इसकर्के वेदमूलक स्मृत्यादिविषे कही जो है शिव विष्ण्वादि भक्ति तिसका स्वीकार करणा चाहिए श्रौर भगवद्गीता विषे भी श्रीमहाराज कृष्णचन्द्रजीका वचनहै मामिति हे अर्जुन मेरेको आश्रय होकर जेडीयां पापयोनियांहैं अर्थात् जो नीचलोकहैं श्रौर स्त्रीयां वैश्य श्रौर शूद्र सोभी परम गतिको प्राप्तहुंदेहैं इसते भी अपणे आश्रयकाकथन होणेते

अतइति इसी कर्के स्कंदपुराण विषेभीकिहाहै विष्णुकी भाक्ति कर्के युक्तहोआ २ भामे मिथ्या चारीभी होवे और अनाश्रमी भी होवे तथापि उह सभ लोकोंको पवित्र कर्ताहै जैसे उदयको प्राप्तहोआ सहस्रांशु सूर्य्य होवे १ और ब्राह्मण क्षत्रिय वैश्य शूद्र अथवा इनते इतर होर संकरादि जेकर विष्णुकी भक्ति कर्के युक्त होवे तद सभसे उत्तमो विषे भी उत्तम जानणा २ दुराचारी क्या हिंसादि कर्मभी करणवाला होवे होर सभका अन्न खाणेवाला होवे और कृतघ्न होवे क्या किसेका कीताहोआ उपकार नहि जाणे और नास्तिक होवे पहले ऐसा भीहै परन्तु जो पीछे आदिदेव नारायणजीको आश्रय करे श्रद्धाकर्के युक्तहोआ ३ तद उसको निर्दोष होएको जाण परमात्माके प्रभावते ऐसा उसजगा पढ्याहै ॥ इसीतर्हां देवीपुराण विषे लिखयाहै ॥ वर्णाश्रमके विभागकर्के देवता स्थापन करणेचाहिए अन्यथा नहि और

अतएव स्कन्दपुराणेऽपि विष्णुभक्तिसमायुक्तोमिथ्याचारोप्यनाश्रमी पुनातिसकलान्लोकान् सहस्रांशुरिवोदितः १ ब्राह्मणःक्षत्रियोवैश्यः शूद्रोवायदिवेतरः विष्णुभक्तिसमायुक्तोज्ञेयःसर्वोत्तमोत्तमः २ दुराचारोऽपि सर्वाशीकृतघ्नोनास्तिकःपुरा समाश्रयेदादिदेवंश्रद्धयाशरणंहियः ३ निर्दोषंविद्धितंजन्तुंप्रभावात्परमात्मनइतिपठ्यते एवंदेवीपुराणे वर्णाश्रम विभागेनदेवाःस्थाप्यास्तुनान्यथा ब्रह्मातुब्राह्मणैःस्थाप्योगायत्रीसहितः प्रभुः १ चतुर्वर्णैस्तथाविष्णुःप्रतिष्ठाप्यः सुखार्थिभिः भैरवोऽपिचतुर्वर्णै रन्त्यजानांतथामत इतिवचनेनान्त्यजादीनामपि भैरवप्रतिष्ठाधिकारः स्पष्टमुच्यते भगवद्भक्तेःसर्वमानुपेष्वनुमतत्वादेवच किरातहूणान्ध्रपुलिन्द पुक्कसाआभीरकंकायवनाः खसादयः

ब्राह्मणोंने गायत्रीकेसाथ ब्रह्मा स्थापनकरणा ॥ इसीमे कुछ होर कहतेहैं चतुरिति चारवर्णों ने विष्णु प्रतिष्ठापन करणेयोग्यहै अर्थात् इन्होंने सुखकी इच्छावालेउने विष्णुकी सेवा करणी और भैरवजी भी चारवर्णों कर्के क्या ब्रह्म क्षत्रि वैश्य शूद्र कर्के पूजने योग्यहै और तैसेहि अंत्यज जो हैं म्लेच्छ नीचजाति तिन्होंने भी भैरवजीकी उपासना करणी इस बचन कर्के नीचोंको भी भैरवजीकी प्रतिष्ठाका अधिकार स्पष्ट प्रतीत हुंदाहै और परमेश्वरकी भक्ति विषे सभ को अनुमती होणेतेहि भागवतके चउथे अध्यायविषे (श्लोक) किरातेति किरात १ हूण २ अन्ध्र ३ पुलिंद ४ पुक्कस ५ आभीर ६ कंक ७ यवन ८ खस ९ एह सभ नीच जातीहैं

और इनतें भिन्नभी जो नीचहैं जिस परमेश्वरके भक्तोंके भी आश्रित होए तांभी शुद्ध हुंदेहैं तिस प्रभाववाले विष्णुके तांई नमस्कार होवे इस वचनते भी भगवत्की भक्ति करके शुद्धिका कहणा संगत हुंदाहै और राममंत्र और पंचाक्षर मंत्र विषे सभका अधिकारहै एह पीच्छे कह चुकेहैं पितृयज्ञ जो हैं श्राद्धादि तिन विषे भी नास्तिक्य और म्लेच्छ संसर्गके परिहार करणेते पिच्छे किहे होए प्रायश्चित्तके अनुष्टान करके शुद्धहोआं कों शूद्रकमलाकर ग्रंथके अनुसार वेणजानगे तेषामिति तिन्हां कों शूद्रके तुल्य होणेते एवं इसी तर्हां किहा जो संदर्भ क्या ग्रंथ तिस करके मूलते क्या पहलेतेहि जो म्लेच्छहैं कोई पीछेते नहि बणे तिन्हांकेभी अपणे नास्तिक्यादिके त्याग पूर्वक राममंत्रादि विषे अधिकार सिद्ध होया

येऽन्येचपापायदुपाश्रयाश्रयाःशुध्यन्तितस्मैप्रभविष्णवेनम इतिभागवते चतुर्थाध्याये सर्वेषांभगवद्भक्त्या शुद्ध्यभिधानंसंगच्छते राममंत्रपंचाक्षरमंत्रयोःसर्वेषामधिकारःप्राङ्निरूपितएव पितृयज्ञादयश्च नास्तिक्यम्लेच्छसंसर्गपरिहारपूर्वकमुचितप्रायश्चित्तानुष्ठानेन शुद्धानां शूद्रकमलाकरोक्तप्रयोगानुसारिणःप्राप्नुवन्ति तेषां शूद्रसधर्मत्वात् एवं चोपपादितसंदर्भेणमूलतो म्लेच्छादीनामपि स्वनास्तिक्यादित्यागपूर्वकराममंत्राद्यधिकारःसिद्धातिकिं पुनर्बलान्म्लेच्छीकृतानाम् ॥ माभून्नामचिरकालनास्तिकम्लेच्छसंसर्गाद निश्चीयमानस्वस्वजातिकानां प्रायश्चित्तादिभिःसद्यएववर्णाश्रमान्तर्गतत्वं साक्षात्परंपरया वा मुक्तिसाधनतया सकलसंसारदावदाहशमकं भगवद्भक्त्याद्याश्रयणं तु कथंनिवार्यताम् किंच श्रद्दधानःशुभांविद्यामाददीतावरादपि

किमिति और पहले म्लेच्छ नहि थे किंतु तिन्हिांके संबधते पिच्छे म्लेच्छ होए तिन्हांकी क्या वार्त्ता कहणी तिनकों इसी अर्थसे अधिकार सिद्ध होगया ॥ परंतु ऐसा मनहो कि चिर काल के नास्तिक और म्लेच्छ संसर्गते नहि निश्चय करसकीदीहै अपणी जाति जिन्हांकी जो तिन्हांका लहि प्रायश्चित्तादिते अपणी जातिमें आजाए ॥ तथापि साक्षात् अथवा परंपराते मुक्ति की साधनतासे और सारे संसारके दुःखोंके दूरकरणेवाली भगवतकी भक्तोंका आश्रय करणा किसतर्हां दूरहोवे अर्थात् कउण कहे कि म्लेच्छादि भगवतकी भक्ति ना करए ॥ अब और मनुजीका वचन कहतेहैं श्रद्दधेति । श्रद्धावाला पुरुष शुभविद्याको अर्थात् लोकों पर उपकार करणे वाली गारुडादि विद्या को नीचतेभी ग्रहणकरे

श्रौर परम धर्म्म जो है जिसते किसेके प्राण बच रहण तिसको नीचते भी ग्रहण करे श्रौर स्त्रीरत्नको दुष्कुल जो है नीचकुल तिसते भी ग्रहण करे इसवचनको कहंदे होए मनुजीनें श्रेष्ट धर्म्मका ग्रहण नीचते भी किहाहै इसीते दंडापूपन्यायतें जैसे दंडके खिचणेतें तिसके साथ लगेहोए पूडेकाभी खिचणा हुंदा है इसनीतिते श्रेष्ट पुरुषते नीचोंको भी उचितधर्म्मको प्राप्ति सिद्ध होई ॥ श्रौर मनुवचनहै ॥ गार्भै रिति गर्भके जो हवनादिहैं श्रौर जातकर्म्मादि संस्कारहैं इन्हांकर्के बीजणेवाले पिताका पाप श्रौर गार्भिक क्या माताके कीतेहोए जो पापहैं सो सभ ब्राह्मणादिकें दूर हुंदेहैं इसवचनकर्के

अन्त्यादपिपरंधर्मंस्त्रीरत्नंदुष्कुलादपि इतिवदतामनुना नीचादपिसमी चीनधर्मग्रहणमनुमतं तेन दण्डापूपिकनीत्यैवश्रेष्ठात्स्वोचितधर्मप्राप्तिर्नी चानामपिसिद्ध्यति गार्भैर्होमैर्जातकर्मचौलमौंजीनिबन्धनैः बैजिकंगा र्भिकंचैनोद्विजानामपमृज्यत इतिवचनेनाऽभक्ष्यभक्षणजनितत्वादिनिषि द्धकालगमनादिवत्प्रायश्चित्ततारतम्येन क्रमायातदोषाणामपि नाशस्योप लक्षणविधयाबोधनाच्च अतएव पातकविशेषेण पतितानामपि पुनः संस्का रविधानमुपपद्यते तेन पातकेन ब्राह्मणत्वादेर्नाशेहि संस्कारविध्युद्देश्यता वच्छेदकस्यैवाभावेन तद्विधानानुपपत्तिः किंच मलादिभिश्चिरंसंसृष्टस्यापि सुवर्णस्य संस्कारसंख्यातारतम्येन शुद्धितारतम्यदर्शनात्

अभक्ष्यभक्षणादि पाप श्रौर निषिद्धकाल विषे जो स्त्री गमनादि पापके दूर होणेकी न्याई प्रायश्चित्तकें थोडे वहुते के करणेते क्रमकर्के आएहोए पापोंके भी नाशहोणेकी विधि का बोधहोणेते ॥ अतइति इसी कर्के पातकविशेष कर्के जो पतित होंएहैं तिन्हांको संस्कारका विधान करणा उचितहै तिसकर्के पातक करणेते ब्राह्मणत्वजातिका नाशहोआं संस्कार विधि जिसते होणीथी सो नहि होई तो संस्कार भी नहि होणाचाहिए सो पूर्वोक्त युक्तिसेहि हुंदाहै ॥ इसमै श्रौर युक्ति कहतेहैं किंचेति मलादिकर्के लित जो सुवर्णादि हैं तिनको संस्कार कथोडे वहुते होए कर्के थोडी वहुती शुद्धि देखीदीहै

पापोति तैसेहि प्रायश्चित्तके थोडे बहुते होणेकर्के पापिओंकी भी शुद्धि थोडी बहुती होणी युक्तहै तिसते ऐसा विचारहोआ कि उक्तविधि कर्के पापिओंकाशीघ्रहि पाप दूर होकर चार वर्णं विच्चों जो जिस वर्णमे जाणेके तिसकी प्राप्ति तो नहि हुंदी परंतु शुद्धिरूप सोपानकी परंपरा विषे जाणे का अधिकार सिद्ध होआ सो यथार्थहै इसी कर्के श्लोकहै गोमूत्रमिति गोमूत्र और गोमय गांया और दुग्ध और दहिं और घृत और कुशाका जल और एकरात्रका उपवास क्या निराहार व्रत एह सत्तांदिनांदा व्रतहै सो श्वपाक जो चांडालहै तिसकोभी शुद्ध करदाहै औरोंकी क्या वार्त्ता कहणीहै एह हारीतजीका वचनहै यद्यपी ति यद्यपि एह जो पिच्छे किहा है प्रायश्चित्त सो स्वार्थ विषे तात्पर्य्य वाला

पापिनामपिप्रायश्चित्ततारतम्येन शुद्धितारतम्यस्य यौक्तिकतया निर्दिष्टपापिनामपिसकलपापत्यागपूर्वकं चातुर्वर्णिकत्वाद्यसिद्धावपि शुद्धिसोपानारोहाधिकारो युक्तएव अतएव गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम् एकरात्रोपवासश्चश्वपाकमपिशोधयेदिति हारीतेनोक्तम् यद्यपि नेदं स्वार्थेतात्पर्यंयदपिघटितत्वात् तथापिशुद्धिःसर्वेषामपि भवत्युचितप्रायश्चित्तैरित्युपलक्षणविधया बोधयत्येव एतेन नहिशतशोध्मायमानोऽपिलोहः सुवर्णंभवति एवं म्लेच्छीभूतानां न कथमपि प्रायश्चित्तैःपापनाशइति प्रत्युक्तम् सद्यस्तदभावेऽपि क्रमेण चातुर्वर्णिकधर्मयोग्यतासंभवेनैव प्रकृतार्थसिद्धेः

नहि किंतु एह व्रतकी प्रशंसाहै कोई यथार्थ चांडालकी शुद्धि नहि करसकता अपिशब्दकर्के घटितहोणेते यथा अपिशब्दका हि ठीक अर्थहै होर नहि तथापि सभकी शुद्धि प्रायश्चित्तसें हुंदीहै आपो आपणे प्रायश्चित्तसें इस उपलक्षण विधि कर्के बोध करांदाहै ऐसा जाणना इतने कर्के एहशंका दूर होई कि सैकडेवार धोता अथवा तपाया होया भीहै लोहा परंतु सुवर्ण नहि हुंदा इसी तरहाँ अनेक प्रायश्चित्तों कर्के भी जेडे म्लेच्छ होगयेहैं ब्राह्मणादि सो शुद्धकर ब्राह्मणादि नहि हुंदे- इतनी शंकाका निरास समझणा इसमै उत्तर कहतेहैं कि शीघ्र पापदूर नहि हुंदा परंतु क्रम कर्के चारवर्णके धर्मको योग्यता के होणे कर्के पाप नाश हुंदाहिहै पूर्वोक्त दृष्टांत इसमै तुल्य नहिहै जिसकर्के लोहा जन्मसेहि लोहा हि है

म्लेछीति ओर एह पीछेते म्लेच्छ होएदेहैं इनांको म्लेच्छ होआं भी ब्राह्मणत्वादिकी प्राप्ति है एह पिच्छे कहआएहैं इसते दृष्टांत दार्ष्टांतिक की विषमता जांणणी ॥ इसी करके भविष्य पुराण विषे रहस्यके प्रसंग विषे किहाहै॥ तथेति तैसेहि विधान करके ब्राह्मण तांई मधु और घृत देवे सो तारदाहै सभनानुं पिचले और अगलेआंनुं और आपणे आपको भी तारदाहै हे नराधिप हेराजन् एह दानरूप प्रायश्चित्तहै १ अब चर्म दान कहतेहैं गोभिरिति चारबैल करके युक्त और पृथ्वी करके युक्त जो है अजिन क्या हरिणका चर्म्म तिसके प्रतिग्रह उठाणेमें जो समर्थ होवे तिसके तांई और अग्निहोत्र करण वालेके तांई देवे २ परंतु कतयाले महीनेकी पूर्णमासीकों अथवा वैशाखकी पूर्णमासीकों अथवा विशेष करके विषुव मेष संक्रांति और तुलसंक्रांति तैसेहि चन्द्र और सूर्यके ग्रहण विषे ३ एह दान

म्लेच्छीभूतानामपि ब्राह्मणत्वाद्यनपगमस्याधस्तादुपपादनेन दृष्टान्तदार्ष्टांतिकयोर्वैषम्याच्च ॥ अतएव भविष्ये रहस्यप्रसंगे॥ तथादद्याद्विधानेनद्विजायमधुसर्पिषी तारयत्यखिलान्पूर्वानात्मानंचनराधिप १ गोभिश्चतमृभिर्युक्तंतथाभूमिसमन्वितम् प्रतिग्रहसमर्थायविदुषेत्वाहिताग्नये २ दद्यादजिनंतुकार्त्तिक्यांवैशाख्यांवाविशेषतः विषुवत्ययनेचैवग्रहणेचन्द्रसूर्ययोः ३ कृच्छ्रात्तुतमसोघोरान्मुच्यतेसर्वतोभयात् अतीतान्सप्तपुरुषांस्तथाचान्याननागतान् ४ उद्धृत्यसनरोयातिब्रह्मलोकंसनातनमित्यादिनाऽतीतसकलस्ववंशीयानामात्मनश्च तारणाभिधानं दृश्यते एवं एकादशगुणाम्वापिरुद्रानावार्यधर्मवित् महापापैरुपस्पृष्टोमुच्यतेनाऽत्रसंशय १ इत्यंगिरोवचनम् एवं ॥ तीर्थप्रत्याम्नाये विष्णुपुराणम् ज्ञानतोऽज्ञानतोवापिभक्त्याभक्त्यापिवाकृतम् गंगास्नानंसर्वविधंसर्वपापप्रणाशनम् १

करणे वाला बडे घोर पापते और सभ भयते भी मुक्त हुंदाहै पिचले सत्त पुरुष जो पतित होए हैं और सत्त ७ अग्गे आउणे जो हैं तिनका उद्धार करके और साथ आपणे आपका उद्धार करके सनातन ब्रह्मलोक को जंदाहै ४ इत्यादि वचनां करके पिचले अगले आपणे वंशके लोकोंका और अपणे आपका तारणा प्रतीत हुंदाहै एवमिति इसी प्रकार ११ जारां रुद्रोंका आवर्तनकरे अर्थात् जारांवार रुद्रोंका पाठ करे सो पुरुष महापाप करके युक्तभीहै तांभी मुक्त हुंदा है इसमे कुछ संशय नहि १ इस अंगिराके वचनते पाप नाशका निश्चयहै इसमें ऐसा विचारहै कि ११ पाठकानामरुद्रीहै इसका ११ वारआवर्त्तनमें १२१ होणगे ॥ एवमिति ॥ इसी प्रकार तीर्थप्रत्याम्नाय विषे विष्णुपुराणका वचनहै ॥ श्रीगंगाजीका जो स्नानहै सो सभ तरांकीवेहोए सभनां पापांनु दूर करदाहै १

इसीका होर वचनहै चान्द्रेति १००० हजारों चान्द्रायणों कर्के जो कोई देह शोधन करे और जो कोई श्रीगंगाजीका जल पान करे एह दो २ बराबर होण अथवा ना होण अर्थात् श्रीगंगा जलकी महिमा हजारों चांद्रायणोंते भी अधिकहै २ इसमे दृष्टांतहै जिसप्रकार तार्क्ष्य जो गरुडहै तिसके दर्शनते सर्प्प निर्विष हुंदेहैं क्या विषरहित हो जांदेहैं तैसे हि श्रीगंगाजीके देखणेते मनुष्य सभ पापते मुक्त हुंदेहैं ३ और पुण्यक्षेत्र विषे जो गमनहै सो सभ पापके दूर करणवालाहै और देवताका पूजन पुरुषोंके सभ पापको हरदाहै एह किहाहै ४ और भविष्यपुराण विषे भी किहाहै ॥ स्नानमात्रकर्के भी गंगा विषे ब्रह्महत्यादि पाप दूर हुंदे हैं इस विषे जो संशय करे अथवा मुखसे जो किहे कि ऐसे पाप गंगा के स्नानमात्रसे किस तरहीं दूर होणगे ऐसे पुरुषका जो पाप है तिसको कहताहुं तिसको किरोड ब्राह्मणके मारणेका

चान्द्रायणसहस्रैस्तुयश्चरेत्कायशोधनम् पिबेद्यश्चापिगंगाम्भःसमौस्यातां नवासमौ २ भवन्तिनिर्विषाःसर्पायथातार्क्ष्यस्यदर्शनात् गंगायादर्शनात्त द्वत्सर्वपापैःप्रमुच्यते ३ पुण्यक्षेत्राभिगमनंसर्वपापप्रणाशनम् देवताभ्यर्चनं पुंसामशेषाघविनाशनमिति ४ भविष्येऽपि॥ स्नानमात्रेणगंगायाःपापंब्रह्म बधोद्भवम् दुरांधर्षंकथंयातिचिन्तयेद्योवदेदपि १ तस्याहंप्रवदेपापंब्रह्म कोटिवधोद्भवम् स्तुतिवादमिमंमत्वाकुम्भीपाकेपुजायते २ आकल्पंनरकंभु क्त्वाततोजायेतगर्दभ इत्यादिवचनैः श्रीगंगातीर्थस्नानादेः सकलपापना शकता सिध्यति ॥ एवं वृहन्नारदीये॥ सर्वसाधारणप्रायश्चित्तानिप्रोक्तानि प्रायश्चित्तानियःकुर्यान्नारायणपरायणः तस्यपापानिनश्यन्तिअन्यथापति तोभवेत् १ यस्तुरागादिनिर्मुक्तअनुतापसमन्वितः सर्वभूतदयायुक्तोविष्णु स्मरणतत्परः २

पाप लगदाहै और जो कोई पूर्वोक्तादि वचनोंको स्तुतिवाद मनदेहैं सो कुंभी पाक नरक विषे जांदेहैन २ और कल्प पर्यंत नरकभोग कर्के पिछे गर्दभ होंदेहैं इत्यादि वचनों कर्के श्री गंगास्नानादिते सभ पापका नाश कल्पना विषे आया सो यथार्थ जाणणेयोग्यहै ॥ एवमिति ऐसेहि वृहन्नारद पुराणविषे सर्वसाधारण प्रायश्चित्त किहेहैं अब तिनका फल कहतेहैं ॥ प्राय इति जो मनुष्य नारायण की सेवामे तत्परहोया २ प्रायश्चित्त करदाहै तिसके सभ पाप दूर हुंदे हैं अन्यथा क्या प्रायश्चित्त ना करे तद पतित हुंदाहै १ और जो पुरुष रागादि क्या प्रीति और द्वेष इसते रहित है और पश्चात्ताप वालाहै और सभ जीवोंपर दया करणेवालाहै और विष्णुके स्मरण विषे तत्परहै २

सो पुरुष महापातक करकेयुक्त होवे अथवा उपपातक जो हैं गोवधादि तिनकर्के युक्त होवे तथापि सभनां तो छोड़के मुक्त हुंदाहै जिस कारणते मन उसका विष्णुपरायणहै ३ इत्यादिवचनो कर्के विष्णुके भक्तका जिस किस मनुष्य मात्रके सभ पापोंका नाश विधान कीताहै ॥ इसतें एह सिद्धहोआ कि बहुत जगा प्रायश्चित्तके विधायक जो वाक्य हैं तिना विषे नर एह सामान्य पदका ग्रहण होणेते कहेहोए वचनां कर्के म्लेच्छादियोंको भी परमेश्वरकी भक्तिका अधिकार सिद्धहोणेते सभको आपो अपणे अधिकारकी योग्यताके अनुसार वैदिक मार्गके उन्मुख होणा उचितहै एह सिद्धहोआ ॥ इत्थमिति इसप्रकार तिन्नां पुरुषां वक क्या त्रयपीढीतक निश्चित है समान वर्णकी उत्पत्ति जिनकी जैसे अमुके

महापातकयुक्तोवायुक्तोवाप्युपपातकैः सर्वैःप्रमुच्यतेसद्योयतोविष्णुरतंमनः ३ इत्यादिना विष्णुभक्तस्य नरमात्रस्य सकलपापनाशोऽभिहितः॥ इत्थंच बहुत्र प्रायश्चित्तविधायकवचनेषु नरइति सामान्यपदोपादानादुदाहृतवचनैर्म्लेच्छादीनामपि भगवद्भक्त्यधिकारसिद्धेश्च सर्वेषामपिस्वाधिकारस्वयोग्यतानुसारेण वैदिकमार्गोन्मुखत्वं निराबाधं सिध्यति ॥ इत्थंच त्रिपुरुषावधि निश्चितसवर्णोत्पत्तिकानां कामतोऽकामतो वा म्लेच्छैःसंसृष्टानां प्रायश्चित्ताचरणेन पुनः स्वस्ववर्णांतर्गतत्वपूर्वकधर्मप्राप्तिः तदन्येषामपि व्रात्यतमानां मूलतो म्लेच्छादीनां वा सत्यामिच्छायां नास्तिक्यत्यागेन भक्तिशास्त्र प्रत्यभिज्ञाशास्त्ररामंमंत्राद्युपदेश्यताधिकारः शूद्रकमलाकरोक्तसंस्कारादिप्राप्तिश्च सिध्यतीत्यत्र न कस्यचित्कटाक्षावसरइति

ब्राह्मणका अथवा अमुकक्षत्रीका प्रपौत्र है एह म्लेच्छ इसतरहीं निश्चयवालेयोंको कामतें अथवा अकामतें म्लेच्छों के साथ मिले होएको प्रायश्चित्तके करणेते फेर आपो आपणे वर्णके अंतर्गत होकर धर्म प्राप्ति हुंदीहै ॥ तैसेहि होर जो व्रात्यतम क्या बडेव्रात्य अर्थात् बहुत दिनोंके व्रात्यहैं फिर म्लेच्छ होएहैं तिनकोभी लेकर अपणे धर्म विषे जानेकी इच्छा होवे तां नास्तिक्यका प्रथमत्याग कर्के भक्ति शास्त्रका क्या प्रत्यभिज्ञा शास्त्रका और रामचन्द्रजीके मंत्रोंका अधिकार सिद्ध होआ और शूद्रकमलाकर ग्रंथोक्तसंस्कारादि प्राप्ति भी सिद्धहोई इसजगा किसे का भी कटाक्ष नहि अर्थात् ऐसा कोई नहि कहसक्ता कि एह पुरुष भक्तिका अधिकारी नहि ऐसे औरभी जानणे

॥ अब कहेहोए शास्त्रार्थका संक्षेप अर्थ कहते हैं सकलेति बहुत श्रुतियां और बहुत स्मृतियां और पुराण और इतिहास इनके विचारणे तें निकलया जो विमर्शहै सो पक्षपातको छोड़कर बुद्धिवाले जो लोकहैं तिनोंने चित्तविषे धारणे योग्यहै इतिदिक् क्या एहविचार इक्कमार्गभूतहै कोई ऐसें नहि कि संपूर्ण इतनाहि विषय है क्योंकि होर भी विचार इसमें है सो आप करलेना चाहिए ॥ अब इसमें काम्य और नैमित्तिकका विचार करते हैं इदमिति एहप्रायश्चित्त नैमित्तिक है और काम्य संज्ञा वालाभी है जिसकर्के पाप निमित्तकेहोयां करीदा है इसतें नैमित्तिक है और पापनाशकी कामनातें करीदा है इसकर्के काम्य है सोई प्रायश्चित्त मयूखविषे किहाहै इसकर्के बृहस्पतिजीका वचनहै प्रायइति जो प्रायश्चित्त करीदा है सो नैमित्तिक जाणणा इसीमें जाबालजीका वचनहै इसीकारणतें काम्य है और नैमित्तिक भी है प्राय

सकलश्रुतिस्मृतिपुराणेतिहासपर्यालोचननिर्गलितो विमर्शो निष्पक्षपातधीभिः सुधीभिर्निपुणंविचारणीय इतिदिक् ॥ इदंच प्रायश्चित्तं नैमित्तिकं काम्यं च निमित्ते विधानान्नैमित्तिकं पाप नाशकतया काम्यं चेति प्रायश्चित्तमयूखे ॥ अतएव बृहस्पतिः ॥ प्रायश्चित्तं यत्क्रियते तन्नैमित्तिकमुच्यते ॥ जाबालः ॥ अतःकाम्यं नैमित्तिकं प्रायश्चित्तमिति स्थितिरिति ॥ पापिनः प्रायश्चित्तं नित्यं नैमित्तिकं वेत्यतो विकलांगादपि पापस्यनाशः किंत्वल्पस्यैव नतुसमग्रस्य एवंच काम्यमप्येतत् एवंच प्रधान निष्पत्ता वपि नप्रधानावृत्तिरिति बोध्यमिति नागेशः नित्यत्वंचाऽकरणेदोषश्रवणात् तथाच स्मृतिः चरितव्यमतोनित्यं प्रायश्चित्तं विशुद्धये निन्द्यैर्हिलक्षणैर्युक्ताजायंतेऽनिष्कृतैनसइति

श्चित्त एह धर्मशास्त्रियोंकी स्थिति है ॥ इसमें होर स्मृति कहते हैं पापिन इति पापीका प्रायश्चित्त नित्यहै और नैमित्तिक भी है और इस प्रायश्चित्ततें विकलांगते भी पापका नाश हुंदाहै परंतु थोडे पापका नाश हुंदाहै सारेका नहि एवंचक्या पापनाश होणेतें काम्यभी एह होआ एवंचेति इसतेक्या सिद्ध होआ कि पापनाशके विषे इसको प्रधानता की सिद्धिहोई कोई प्रधान की आवृत्ति नहि सिद्ध होई ऐसा नागेशजीका मतहै ॥ और इसको नित्यता सिद्धहोई नाकरतां दोषहै इसते जाणीदी है एहीनित्योंकालक्षणहै ॥ तैसेहि स्मृति भी इसमें है चरीति इसकारणतें एहप्रायश्चित्त विशुद्धिके अर्थ नित्यहि करणांचाहिए क्योंकि जो अनिष्कृतैनसहैं क्याप्रायश्चित्तहीन हैं सो निन्दित लक्षण जो हैं कुष्टादियोग तिनोंकर्के युक्तहोए २ उत्पन्नहुंदेहैं इसतें नाकरणेमें दोषआया

एहि याज्ञवल्क्यजीका मत है सो कहतेहैं प्रायइतिजो प्रायश्चित्त नहि करें और पापोंमें रत होए और पीछे पश्चात्ताप भी ना करन सो पुरुष दारुण जो नरक हैं तिनां विषे जांदे हैन ॥ इसीस्थान तिना नरकां का भी वर्णन करतेहैं तामिस्र इसतें आदि लेकर कहे होए उसीग्रंथसे जाणणे सो २१ हैं ॐ और ग्रंथों विषे भी किहाहै कि विहिताकरणादि निमित्तवाले प्रतिप्रेरणा होणेतें नैमित्तिक है प्रायश्चित्त (प्रश्न) गौतमस्मृतिविषे उसको क्यों काम्यत्वकी प्रतीति हुंदीहै फलका होणा और नाहोणा इसको कारण रक्खकर पूर्वपक्ष और उत्तरपक्ष करके तिसको कर्त्तव्यताकानिर्णय होणेतें तिसका वचन एहहै उक इति ॥ वर्णधर्म्म जो हैं ब्राह्मणादिकोंके धर्म्म और आश्रम धर्म्म जो हैं ब्रह्मचारीआदिकोंके धर्म सो सभ किहेहैं अथेति एहपुरुष

याज्ञवल्क्योपि प्रायश्चित्तमकुर्वाणाःपापेषुनिरतानराः अपश्चात्तापिनः कष्टान्नरकान्यांतिदारुणानिति नरकास्तु तामिस्रंलोहशंकुंचेत्यादिना तत एव वोध्याः ग्रंथांतरेऽपि तदेवं विहिताकरणादिनिमित्तयंतंप्रति चोदनान्नैमित्तिकंप्रायश्चित्तम्(ननु)गौतमस्मृतावस्य काम्यत्वं प्रतीयते फलभावाभावावुपजीव्यपूर्वोत्तरपक्षाभ्यां तस्य कर्त्तव्यतानिर्णयात् तद्वचनं चोक्तोवर्णधर्म्मश्चाश्रमधर्म्मश्च अथ खल्वयं पुरुषोयाप्येनकर्मणालिप्यते यथैतदयाज्ययाजनमभक्ष्यभक्षणमवंद्यवन्दनंशिष्टस्याक्रिया प्रतिषिद्धसेवनमिति ॐ तत्र प्रायश्चित्तंकुर्यान्नकुर्य्यादितिमीमांसंते न कुर्यादित्याहुः नहिकर्म्मक्षीयतइति कुर्यादित्यपरे

याप्यकर्म्म करके अर्थात् निंदित कर्म्म करके लिप्तहुंदाहै ऐसाकहकर कहतेहैं कि जैसा एह अयाज्ययाजन है ऐसाहि अभक्ष्यभक्षण और अवंद्यवंदन और शिष्टोंकीक्रियाका ना करणा और प्रतिषिद्ध जो हैं द्यूतादि तिनका सेवनकरणा एहसभ असत्कर्म्म हैं पूर्वोक्तरीतिसे इत्थेभी काम्यता और नैमित्तिकता जाणणी(उत्तर) अर्थात् फलकेअर्थहोआं तो काम्यहोआ और तिसविना नैमित्तिक होआ ॥ तत्रेति तिस विषे प्रायश्चित्त करे अथवा नाकरे इसका विचारकरेहैं केईओंका मत एह है कि प्रायश्चित्त ना करे क्योंकि कर्म्म जो कीता है सो नष्ट नहि हुंदा अर्थात् कीताहोआ पाप प्रायश्चित्त करके नहि दूर हुंदा ॥ और कहतेहैं कि प्रायश्चित्त अवश्य करणाचाहिए

जिसते ऐसा बेदमै देखयाहै कि यज्ञविषे विघ्नहोश्रां फेर स्तोम यज्ञकर्के अर्थात् प्रायश्चित्त कर्के सवन क्या यज्ञ विषे आउंदेहैं एह जाणीदा है अर्थात् जैसें प्रायश्चित्त कर्के यज्ञविघ्न दूर होआ ऐसे होर पाप भीं दूर होवेगा व्रात्यस्तोमकर्के पूजन कर्के सभ पापको तरजांदाहै ब्रह्मह त्याको तरदाहै जो अश्वमेध यज्ञ करदाहै इतनी स्मृति है ॥ अबइसका अर्थ कहतेहैं याप्यनाम निंदित कर्म्मका अयाज्ययाजनादिका है तिसके कीतेहोए लेपको दूरकरणेनुं नहि शक्य होणेते तिसके हटाणेवास्ते प्रायश्चित्त नहि करणा चाहिए जो कीता होआ कर्म्महै सो विनाभोगतेकदे भी नहि दूर हुंदा इसीवास्ते होर स्मृतिहै नेति नहि भोगिया होयाकर्म्म किरोडांकल्पांदे व्यतीतहोया

पुनः स्तोमेनेष्ट्वा पुनः सवनमायान्तीति विज्ञायते व्रात्यस्तोमेनेष्ट्वातर तिसर्वंपाप्मानं तरतिब्रह्महत्यां योऽश्वमेधेन यजतइति अयमर्थः याप्यं गर्हितमयाज्ययाजनादि तत्कृतस्य लेपस्य निवर्त्तयितुमशक्यत्वात् तन्नि वृत्तये प्रायश्चित्तं न कर्त्तव्यम् नहि कृतं कर्म्म भोगमन्तरेण क्षपयितुं शक्यते अतएव स्मृत्यन्तरम् नाऽभुक्तंक्षीयतेकर्म्म कल्पकोटिशतैरपि अव श्यमेवभोक्तव्यंकृतंकर्म्मशुभाशुभमिति १ शंखोपि यथापृथिव्यांबीजानि अन्नान्योषधयोयथा एवमात्मनिकर्म्माणितिष्ठन्तिप्रभवन्तिचेति १ यद्यन्त रेणापिभोगं दुरितलेपः क्षीयते तदा सुकृतलेपोपि क्षीयेतेत्यतिप्रसंगः तस्मात्प्रायश्चित्तन्नकर्त्तव्यमितिपूर्वपक्षिणआहुः कुर्यादेवप्रायश्चित्तमिति प्रामाणिकानांदर्शनम् तेहिश्रुतिमुदाहरन्ति पुनः स्तोमेनेष्ट्वापुनः सवनमायान्तीति

वी नाशको प्राप्त नहि हुंदाहै जो कीताहै शुभअशुभ कर्म सो अवश्य भोगणे योग्यहै १ शंखजी भी कहंदेहैं यथेति जैसे पृथिवीविषे बीजहै और अन्नहै ओषधिहैं एह यद्यपि त्रये पर्यायआपसमैंहैं तथापि थोडाभेद लईकरो किहाहै एह जिसतहीं उत्पन्नहुंदेहैं तैसेहि आत्मा विषे कर्म है जो बीज पृथिवी विच पिआहै सो अवश्यकर्के फलानुदिंदाहै ऐसा जानणा १ यदीति कहतेहैं किजद कीतेहोए पाप भोगणेविना वी नष्ट होजाण तद पुण्यभी नष्टहोण तिसकारणते प्रायश्चित्त नहीं करणा एह पूर्वपक्षहोआ ॥ अब जिनका मत प्रमाणहै सो कहतेहैं कि प्रायश्चित्त अवश्यकर्के करणा एह श्रुतिका उदाहरण दिंदेहैं पुनरिति इसका अर्थ पिच्छे होचुकाहै

एहि याज्ञवल्क्यजीका मत है सो कहतेहैं प्रायइतिजो प्रायश्चित्त नहि करें और पापोंमें रत होए और पीछे पश्चात्ताप भी ना करन सो पुरुष दारुण जो नरक हैं तिनां विषे जांदे हैन ॥ इसीस्थान तिना नरकां का भी वर्णन करतेहैं तामिस्र इसतें आदि लेकर कहे होए उसीग्रंथसे जाणणे सो २१ हैं ॥ और ग्रंथों विषे भी किहाहै कि विहिताकरणादि निमित्तवाळे प्रतिप्रेरणा होणेते नैमित्तिक है प्रायश्चित्त (प्रश्न) गौतमस्मृतिविषे उसको क्यों काम्यत्वकी प्रतीति हुंदीहै फलका होणा और नाहोणा इसको कारण रकूखकर पूर्वपक्ष और उत्तरपक्ष करके तिसकी कर्तव्यताकानिर्णय होणेतें तिसका बचन एहहै उक्त इति ॥ वर्णधर्म जो हैं ब्राह्मणादिकोंके धर्म और आश्रम धर्म जो हैं ब्रह्मचारीआदिकोंके धर्म सो सभ किहेहैं अथेति एहपुरुष

याज्ञवल्क्योपि प्रायश्चित्तमकुर्वाणाःपापेषुनिरतानराः अपश्चात्तापिनः कष्टान्नरकान्यांतिदारुणानिति नरकास्तु तामिस्रंलोहशंकुंचेत्यादिना तत एव बोध्याः ग्रंथांतरेऽपि तदेवं विहिताकरणादिनिमित्तयंतंप्रति चोदनान्नैमित्तिकंप्रायश्चित्तम्(ननु)गौतमस्मृतावस्य काम्यत्वं प्रतीयते फलभावाभावावुपजीव्यपूर्वोत्तरपक्षाभ्यां तस्य कर्त्तव्यतानिर्णयात् तद्वचनं चोक्तोवर्णधर्मश्चाश्रमधर्म्मश्च अथ खल्वयं पुरुषोयाप्येनकर्मणालिप्यते यथैतदयाज्ययाजनमभक्ष्यभक्षणमवंद्यवन्दनंशिष्टस्याक्रिया प्रतिषिद्धसेवनमिति ॥ तत्र प्रायश्चित्तंकुर्यान्नकुर्य्यादितिमीमांसंते न कुर्यादित्याहुः नहिकर्म्मक्षीयतइति कुर्यादित्यपरे

याप्यकर्म्म करके अर्थात् निंदित कर्म्म करके लिप्तहुंदाहै ऐसाकहकर कहतेहैं कि जैसा एह अयाज्ययाजन है ऐसाहि अभक्ष्यभक्षण और अवंद्यवंदन और शिष्टोंकीक्रियाका ना करणा और प्रतिषिद्ध जो हैं द्यूतादि तिनका सेवनकरणा एहसभ असत्कर्म्म हैं पूर्वोक्तरीतिसे इत्थेभी काम्यता और नैमित्तिकता जाणणी(उत्तर) अर्थात् फलकेअर्थहोआं तो काम्यहोआ और तिसविना नैमित्तिक होआ ॥ तत्रेति तिस विषे प्रायश्चित्त करे अथवा नाकरे इसका विचारकरेहैं केईओंका मत एह है कि प्रायश्चित्त ना करे क्योंकि कर्म्म जो कीता है सो नष्ट नहि हुंदा अर्थात् कीताहोआ पाप प्रायश्चित्त करके नहि दूर हुंदा ॥ और कहतेहैं कि प्रायश्चित्त अवश्य करणाचाहिए

जिसते ऐसा बेदमै देखयाहै कि यज्ञविषे विघ्नहोआं फेर स्तोम यज्ञकर्के अर्थात् प्रायश्चित्त कर्के सवन क्या यज्ञ विषे आउंदेहैं एह जाणीदा है अर्थात् जैसें प्रायश्चित्त कर्के यज्ञविघ्न दूर होआ ऐसे होर पाप भी दूर होवेगा व्रात्यस्तोमकर्के पूजन कर्के सभ पापको तरजांदाहै ब्रह्महत्याको तरदाहै जो अश्वमेध यज्ञ करदाहै इतनी स्मृति है ॥ अबइसका अर्थ कहतेहैं याप्यनाम निंदित कर्म्मका अयाज्ययाजनादिका है तिसके कीतेहोए लेपको दूरकरणेनुं नहि शक्य होणेते तिसके हटाणेवास्ते प्रायश्चित्त नहि करणा चाहिए जो कीता होआ कर्म्म है सो विनाभोगतेकर्दे भी नहि दूर हुंदा इसीवास्ते होर स्मृतिहै नेति नाहि भोगिया होयाकर्म्म किरोडांकल्पांदे व्यतीतहोया

पुनः स्तोमेनेष्ट्वा पुनः सवनमायान्तीति विज्ञायते व्रात्यस्तोमेनेष्ट्वातरतिसर्वैपाप्मानं तरतिब्रह्महत्यां योऽश्वमेधेन यजतइति अयमर्थः याप्यं गर्हितमयाज्ययाजनादि तत्कृतस्य लेपस्य निवर्त्तयितुमशक्यत्वात् तन्निवृत्तये प्रायश्चित्तं न कर्त्तव्यम् नहि कृतं कर्म्म भोगमन्तरेण क्षपयितुं शक्यते अतएव स्मृत्यन्तरम् नाऽभुक्तंक्षीयतेकर्म्म कल्पकोटिशतैरपि अवश्यमेवभोक्तव्यंकृतंकर्म्मशुभाशुभमिति १ शंखोपि यथापृथिव्यांबीजानि अन्नान्योषधयोयथा एवमात्मनिकर्म्माणितिष्ठन्तिप्रभवन्तिचेति १ यद्यन्तरेणापिभोगं दुरितलेपः क्षीयते तदा सुकृतलेपोपि क्षीयेतेत्यतिप्रसंगः तस्मात्प्रायश्चित्तन्नकर्त्तव्यमितिपूर्वपक्षिणआहुः कुर्यादेवप्रायश्चित्तमिति प्रामाणिकानांदर्शनम् तेहिश्रुतिमुदाहरन्ति पुनः स्तोमेनेष्ट्वापुनः सवनमायान्तीति

बी नाशको प्राप्त नहि हुंदाहै जो कीताहै शुभअशुभ कर्म सो अवश्य भोगणे योग्यहै १ शंखजी भी कहंदेहैं यथेति जैसे पृथिवीविषे बीजहै और अन्नहै औषधिहैं एह यद्यपि अये पर्यायआपसमें हैं तथापि थोडाभेद लईकरो किहाहै एह जिसतरहां उत्पन्नहुंदेहैं तैसेहि आत्मा विषे कर्म है जो बीज पृथिवी विच पिआहै सो अवश्यकर्के फलांनुदिंदाहै ऐसा जानणा १ यदीति कहतेहैं किजेकर कीतेहोए पाप भोगणेविना बी नष्ट होजाण तद पुण्यभी नष्टहोण तिसकारणते प्रायश्चित्त नहीं करणा एह पूर्वपक्षहोआ ॥ अब जिनका मत प्रमाणहै सो कहतेहैं कि प्रायश्चित्त अवश्यकर्के करणा एह श्रुतिका उदाहरण दिंदेहैं पुनरिति इसका अर्थ पिच्छे होचुकाहै

तृतीयप्रकरणेयत्रयत्रमंत्रप्रतीकानिकृतानितत्पूर्त्यर्थंमंत्रसंग्रहोलिख्यते

| पृ- | पं- | प्रतीक | |
|---|---|---|---|
| १६० | ५ | आयनेते | आयनेतेपरायणेदूर्वारोहतुपुष्पणी उत्सोवातत्रजायतांह्रदोवापुंडरीकवान् ११ । अथर्वणवेदसंहितायां पष्ठकाण्डे. अ. ११ ॥ |
| १६० | ६ | त्रातारमिन्द्रम् | त्रातारमिंद्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳशूरमिन्द्रं ह्वयामिशक्रंपुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः १२ ॥ यजुः ० सं- अ- २० |
| १६० | ६ | यमायमधु . | ॐयमायत्वामखायत्वासूर्य्यस्यत्वा तपसेदेवस्त्वा सवितामद्ध्वानक्तुपृथिव्याःसꣳस्पृशस्पाहिअर्चिरसिशोचिरसितपोसि १३यजुः सं- अ- ३७ |
| १६० | ७ | तत्वायामीति | ॐतत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिःअहेडमानोव्वरुणेहवोद्ध्युरुशꣳसमानऽआयुःप्रमोषीः १४ यजुः सं- अ- २१ |
| १६० | ७ | वयꣳसोमव्रते | ॐवयꣳसोमव्रतेतवमनस्तनूषुविभ्रतःप्रजावन्तः सचेमहि १५ षडंगपाठे. अ- ६ |
| १६० | ७ | तत्सूर्य्यम् | ॐतत्सूर्य्यस्यदेवत्वंतन्महित्वम्मद्ध्याकर्त्तोर्विततꣳसञ्जभार यदेदयुक्तहरितःसधस्थादाद्रात्रीव्वासस्तनुतेसिमस्मै १६ यजुः सं- अ- ३३ |
| १६० | ८ | अधःपश्यति | ॐअधःपश्यस्वमोपरिसंतरांपादकौहर मतेकशप्लकौदृशन्स्त्राहिब्रह्माबभूविथ १७ ऋग्वे० सं- पष्ठाष्टके अ- ३ ॥ |

तृतीयप्रकरणेयत्रयत्रमंत्रप्रतीकानि कृतानितत्पूर्त्त्यर्थंमंत्रसंग्रहोलिख्यते

| पृ० | पं० | प्रतीक० | |
| --- | --- | --- | --- |
| १६० | ८ | सहस्रशीर्षेति | सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् सभूमिꣳसर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् १८ रुद्रपाठे अ- २ |
| १६१ | ६ | सोमानꣳस्वरणम् | ॐसोमानꣳस्वरणङ्कृणुहि०ब्रह्मणस्प्पतेकक्षीवंतंय्यऽऔशिजः १९ यजुः० सं० अ० ३ |
| १६१ | ६ | यःकुक्षिः | यःकुक्षिःसोमपातमः ॥ समुद्रइवपिन्वते उर्वीरापोनकाकुदः एवाह्यस्यसूनृता विरप्शीगोमती महीपक्वाशाखानदाशुषे २० ऋग्वेदसंहितायाम्. अ- १॥ |
| १६१ | ७ | वह्व्वीनांपिता | वह्व्वीनांपितावहुरस्यपुत्रश्चिश्चाकृणोति समनावगत्यइपुधिः सङ्काःपृतनाश्चसर्व्वाः पृष्ठेनिनद्धोजयतिप्प्रसूतः २१ ॥ यजुः. सं- अ. १९ |
| १६१ | १० | आमाव्वाजस्येति | आमाव्वाजस्यप्प्रसवोजगम्म्यादेमेद्यावापृथिवीविश्वरूपे आमागन्तांपितरामातराचामासोमोऽअमृतत्त्वेनगम्म्यात् व्वाजिनोव्वाजजितोव्वाजꣳससृवाꣳसोवृहस्प्पतेर्भागमवजिघ्रतनिमृजानाः २२ यजुः - सं- अ. ९ ॥ |
| १६१ | १४ | अश्वक्रांते | अश्वक्रान्तेरथक्रान्तेविष्णुक्रान्तेवसुन्धरे ॥ मृत्तिके हरमेपापंयन्मयादुष्कृतंकृतम् २३ |

तृतीयप्रकरणेयत्रयत्रमंत्रप्रतीकानिकृतानितत्पूर्त्त्यर्थंमंत्रसंग्रहोलिख्यते

| पृ- पं- | प्रतीक | |
|---|---|---|
| १६३।३ | मधुवाताइति- | ओंमधुव्वाताऽऋतायतेमधुक्षरन्तिसिन्धवःमाध्वीर्न्नःसंत्वोषधीःमधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः मधुद्यौरस्तुनःपितामधुमान्नोवनस्पतिर्म्मधुमाँऽअस्तु सूर्य्यःमाध्वीर्गावोभवन्तुनः २४ यजुः० सं-अ- १३ |
| १६३।५ | याओषधीरिति | ओंयाओषधीःपूर्व्वाजातादेवेभ्यस्त्रियुगंपुरामनैनुवभ्रूणामहꣳशतन्धामानिसप्तच २५यजुः-सं-अ-१२ |
| १६३।९ | धान्यमसीति | ओंधान्न्यमसिधिनुहिदेवान्न्प्राणायत्त्वोदानायत्त्वाव्व्यानायत्त्वादीर्घामनुप्प्रसितिमायुषेधान्देवोवः सविताहिरण्यपाणिःप्प्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि २६ यजुः ०सं- अ० १ |
| १६४।८ | समुद्रस्येत्यादिमंत्राः | समुद्रस्यत्त्वाावकयाग्नेपरिव्व्ययामासि पावकोऽअस्म्मभ्यꣳशिवोभव ॥ २७ ॥ हिमस्यत्त्वाजरायुणाग्नेपरिव्वयामसि ॥ पावकोऽअस्म्मभ्यꣳशिवोभव ॥ २८ उपज्ज्मन्नुपवेतसेवतरन्नदीष्ष्वाअग्नेपित्तमपामसिमण्डूकिताभिरागहिसेमन्न्वोयज्ञम्पावकवर्णꣳशिवङ्कृधि । २९ ॥ अपामिदन्न्ययनꣳसमुद्रस्यनिवेशनम् ॥ अन्न्याँस्तेऽअस्म्मत्तपन्तुहेतयःपावकोऽअस्म्मभ्यꣳशिवोभव ३० अग्नेपावक रोचिषामन्द्रयादेवजिव्ह्वया आदेवान्न्वक्षियक्षिच ३१ सनःपावकदीदिवोग्नेदेवाँ२ ॥ ऽइहावह ॥ उपयज्ञꣳहविश्चनः ३२.॥. पावकयायाश्चितयन्त्याकृपाक्षामन्न्रुरुचऽउषसोनभानुना तूर्व्वन्नयामन्नेतशस्यनूरणऽआयोघृणेनततृषाणोऽअजरः ॥ ३३ ॥ |

तृतीयप्रकरणेयत्रयत्रमंत्रप्रतीकानि कृतानितत्पूर्त्त्यर्थंमंत्रसंग्रहोऽलिख्यते
पृ० पं० प्रतीक०

१६४।८ समुद्र- नमस्ते हरसेशोचिषे नमस्तेऽअस्त्वर्चिषे अन्न्यां स्तेऽअस्स्मत्तपन्तुहेतयः पावकोऽअस्स्मब्भ्यꣳशिवोभव ३४ नृषदेवेडप्सुषदेव्वेडबर्हिषदेव्वेड्वनसदेव्वेड्स्वर्व्विदेव्वेट् ३५ येदेवादेवानांय्यज्ञियायज्ञियानाꣳसंवत्सरीणमुपभागमासते अहुतादोहविषोयज्ञे अस्मिन्न्स्वयम्पिबन्तुमधुनोघृतस्य ३६ येदेवादेवेष्ष्वधिदेवत्त्वमायन्न्येव्ब्रह्मणःपुरऽएतारोऽअस्स्य येब्भ्योनऽऋतेपवतेधामकिंचननतेदिवोनपृथिव्व्याऽअधिस्न्नुषु ३७ प्राणदाऽअपानदाव्व्यानदावर्च्चोदाव्वरिवोदाः अन्न्यांस्तेऽअस्स्मत्तपन्तुहेतयःपावकोऽस्स्मब्भ्यꣳशिवोभव ३८ यजुः-सं०अ० १७

१६५।३ सहस्रशीर्षेति सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् सभूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् इत्यावाहनम् ३९

१६५।३ एतावानिति एतावानस्यमहिमातोज्यायांश्चपूरुषः पादोस्यव्विश्वाभूतानि त्रिपादस्यामृतन्दिवि इतिपाद्यम् ४०

१६५।३ पुरुषऽएवेति पुरुषऽएवेदꣳसर्व्वंयद्भूतंय्यच्चभाव्यम् उतामृतत्त्वस्येशानोयदन्नेनातिरोहति इत्यासनम् ४१

१६५।४ त्रिपादूर्ध्वइति त्रिपादूर्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रमत्साशनानशनेऽअभि इत्यर्घम् ४२

१६५।४ ततोविराडिति ततोव्विराडजायतव्विराजोऽअधिपूरुषः सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः इत्याचमनीयम् ४३

तृतीयप्रकरणयत्रयत्रमंत्रप्रतीकानिकृतानितत्पूर्त्यर्थंमंत्रसंग्रहोलिख्यते

| पृ- | पं- | प्रतीक |
|---|---|---|
| १६५ | ४ | तस्माद्यज्ञादिति तस्माद्यज्ञात्सर्व्वहुतःसम्भृतम्पृषदाज्यम् पशूँस्तांश्चक्रेव्वायव्यानारण्याग्राम्याश्चये इतिस्नानम्४४ |
| १६५ | ५ | तस्माद्यज्ञात् तस्माद्यज्ञात्सर्व्वहुतऽऋचःसामानिजज्ञिरे छन्दाᳬंसि जज्ञिरे तस्माद्यजुस्तस्मादजायत इतिवस्त्रम् ४५ |
| १६५ | ५ | तस्मादश्वाइति तस्मादश्वाऽअजायन्तयकेचोभयादतः गावोहयज्ञिरे तस्मात्तस्माज्जाताऽअजावयः इतियज्ञोपवीतम् ४६ |
| १६५ | ६ | तंयज्ञमिति तंयज्ञम्बर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाऽअयजन्तसाध्याऽऋषयश्चये ॥ इतिगंधम् ॥ ४७ |
| १६५ | ६ | यत्पुरुषमिति यत्पुरुषम्व्यदधुःकतिधाव्यकल्पयन् मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽ उच्येते इतिपुष्पम् ४८ |
| १६५ | ६ | ब्राह्मणोस्येति ब्राह्मणोस्यमुखमासीद्‌बाहूराजन्यःकृतःऊरूतदस्य यद्वैश्यःपद्भ्याᳬंशूद्रोऽअजायत ॥ इतिधूपम् ॥ ४९ |
| १६५ | ७ | चंद्रमामनसोजातः चंद्रमामनसोजातश्चक्षोःसूर्य्योऽअजायतश्रोत्राद्वायुश्चप्प्राणश्चमुखादग्निरजायत इतिदीपः ॥ ५० |
| १६५ | ७ | नाभ्याऽआसीत् नाभ्याऽआसीदन्तरिक्षᳬंशीर्ष्णोद्यौःसमवर्त्तत पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथालोकांर॥ ऽअकल्पयन् इतिनैवेद्यम् ॥ ५१ ॥ |
| १६५ | ७ | यत्पुरुषेणेति यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥वसन्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मःशरद्धविः इतिताम्बूलम् ॥ ५२ |
| १६५ | ८ | सप्तास्यासन् सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् इतिनमस्कारः५३ |

तृतीयप्रकरणेयत्रयत्रमंत्रप्रतीकानि कृतानितत्पूर्त्यर्थंमंत्रसंग्रहो।लिख्यते

| पृ० | पं० | प्रतीक० | |
|---|---|---|---|
| १६५ | ८ | यज्ञेनयज्ञम् | यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्न्यासन् तेहनाकम्महिमानःसचन्तयत्रपूर्व्वेसाध्याःसन्तिदेवाःइतिस्तुतिःप्रदक्षिणाच ५४ |
| १६५ | १० | नमोस्त्वनंतायेति | नमोस्त्वनंतायसस्त्रहमूर्त्तयेसहस्त्रपादाक्षिशिरोरुबाहवे सहस्त्रनाम्नेपुरुषायशाश्वतेसहस्त्रकोटीयुगधारिणेनमः नमःकमलनाभायनमस्तेजलशायिने नमस्तेकेशवानंतवासुदेवनमोस्तुते ५५ |
| १६७ | ४ | इरावती | इरावतीधेनुमतीहिभूतᳩंसूयवसिनीमनवेदशस्यव्यस्कभ्नारोदसीविष्णवेतदाधर्थपृथिवीमभितामयूखैःस्वाहा ५६ यजुः- सं- अ- ५ |
| १६७ | ५ | शन्नऽइन्द्राग्नी | अहानिशम्भवन्तुनःशᳩंरात्रीःप्रतिधीयतां शन्नऽइन्द्राव्वरुणारातहव्यापान्नऽइन्द्रापूषणाव्वाजसातौ शमिन्द्रासोमासुवितायशंय्योः ५७ यजुः-सं-अ- ३६ |

अस्तुसतांमुदेमंत्रसंग्रहोयम्



॥ स्वतोमीति इसका अर्थ पिछेहोचुकाहै में कविगंगारामने श्रीमहाराजाधिराज श्रीरणवीरसिंह जीकी आज्ञासें एह कर्मविपाक क्या कर्म्मोकाहै फल जिस विषे ऐसा प्रकरण प्रारंभकरीदाहै कैसाएहप्रकरणहै जिसके विचारणविषे गुणिपुरुषांको दोष क्या पापविषे प्रवृत्ति नहि होनी और पापांविषें जो प्रीतियुक्तहै तिसके हृदयविषे अतिशयकर्के कंप होताहै और दुष्टजनकावेष क्या काणत्व बधिरत्वादि जिसते प्रतीतहुंदाहै १ और तिसके आदविषें कर्म्मविपाकशब्दका अर्थ कहीदाहै कर्मेति शुभ और अशुभ कर्मोकाविपाक क्या फल परिणामिकाल सो कर्म विपाक कहीदाहै इसव्युत्पत्तिते यद्यपि शुभकर्म्मका फल विद्वत्ता आदि और पापकर्म्मकाफल क्षयरोगादि इनांविषें कर्मविपाक शब्दकी प्रवृत्ति कहीहै तथापि प्रसंगतें पापीपुरुषांके मनविषें पश्चात्तापके करणे वाला होनेसें अशुभकर्मोका

ॐश्रीगणेशायनमः ॥ स्वतोमित्वातत्त्वमित्यादि० यस्मिन्विमृष्टेगुणिनांन दोषः पापाभिसक्तस्यहृदिप्रदोषः प्रज्ञायतेदुष्टजनस्यवेषःप्रारभ्यतेकर्म्म विपाकएषः १ तत्रादौकर्म्मविपाकशब्दार्थः कर्म्मणांशुभाशुभानांविपाकः फलदानकालः सइतिव्युत्पत्त्या विद्वत्ता क्षयरोगादौ कर्म्मविपाकशब्दप्रवृत्तिः तथापि प्रकृतत्वात्पापिजनमनोऽनुतापापादकत्वाच्च दुष्कर्म्मजनित एवकर्म्मविपाकःप्रस्तूयते। अत्रमाधवः पतंजलिसूत्रानुमत्या विशेषेणपचनं विपाकः सच जन्मायुर्भोगभेदात्त्रिविधः तन्मूलं अविद्याऽस्मितारागद्वेषाभिनिवेशाःपंचक्लेशाः। अविद्या ममता अस्मिताअहंता रागद्वेषौप्रसिद्धौ अभिनिवेशस्तयोर्दार्ढ्यं एभिरेवज्ञानोपलब्धियावत् कर्म्माणिजायंते तानि चाऽत्र जन्मादिरूपेणविपच्यंते ॥ पतितंयाजयित्वातुकृमियोनौप्रजायतइत्यादिना जन्म १ तत्रजीवतिवर्षाणिदशपंचचवाद्विजत्यादिना आयुः २

परिणाम है जिसविषें ऐसा कर्मविपाक प्रसंगमे ल्याईदाहै इसविषे माधवजीका वाक्यहै पतंजलि सूत्रके अनुमतिकर्के विशेषकर्के जो पचनक्रियाहै सो विपाक कहाहै सो विपाक जन्म १ और आयु २ और भोग ३ इसभेदतें त्रयप्रकारकाहै तिसकामूल अविद्या क्या म्मता १ और अहंकारता २ और राग ३ और द्वेष ४ और रागद्वेषदृढता ५ एनांकर्के ज्ञान कीप्राप्तिके पर्य्यंत छे कर्म संपूर्ण जन्मादिरूपकर्के फलदेणवालेहोतेहै सो कहितेहां पतितमिति पतितको यज्ञकरवाणे कर्के कृमिजन्मको प्राप्तहोताहै इत्यादिकर्के जन्मकहाहै १ और तिसमे पंद्रावर्ष जीवताहै इसकर्के आयु २

यमेति सो पापी यमलोकविषे बहुतपीडाको प्राप्तहोतेहैं इसकर्के भोग कहाहै स्मृतिकर्के प्रसिद्ध ३ एह माधवजी कहतेभये इसमें होर विचार करतेहैं त्रयप्रकारकाभी विपाक कहाहै प्रेतत्वगति और नारकीयदेहत्वगति और अधमयोनित्वगति और कीटादियोनित्व इनां भेदांतें बहुत प्रकारकाहै ( प्रश्न ) प्रायश्चित्तके प्रसंगविषे इसको क्यों कहतेहो ( उत्तर ) प्रति इस पाप युक्त पुरुष विषे पापके विधान करणेको और पाप फलके दूरकरणेको असमर्थके होयां होयां भी अर्थवादकर्के प्रायश्चित्तकी उपयोगिता कर्म्मविपाककोंजानणी सो दिखाया जावेगा अब अर्थवादका अर्थ कहतेहैं विहित कर्म विषे प्रवर्त्तक होणेतें और निषिद्धकर्मसें निव र्त्तकहोणेतें विधि और प्रतिषेध विषे एह अर्थवाद एकवाक्यताको अंगीकार करतेहैं ऐसे न्यायवेत्ताके वचनतें ॥ तथाच क्लेशकर्के होणवाला जो प्राजापत्य आदिव्रत तिसके अनुष्ठान

यमलोकेतुतैर्घोरांल्लभंतेपरियातनामित्यादिना भोगः स्मृतिसिद्ध ३ इत्याद्य भिदधेत्रिविधोऽपिप्रेतत्वनारकीयदेहत्वाधमयोनित्वकीटादियोनित्वादिभे दाद्बहुविधःप्रायश्चित्तोपयोगित्वंचास्यविधातुंप्रतिषेद्धुमशक्यत्वेपि अर्थवा दत्वेन बोध्यम् अर्थवादास्तु विहिते प्रवर्त्तकत्वेन प्रतिषिद्धान्निवर्त्तकत्वे नच विधिप्रतिषेधैकवाक्यतांभजंतइतिन्यायविदुक्तेः तथाच क्लेशात्मक प्राजापत्याद्यनुष्ठानेप्ररोचनां विना प्रवृत्त्यभावात्तदर्थं काचित्प्ररोचनावि धेया साच यागादावनुकूलफलश्रवणेन क्षयरोगादिहेतुश्रवणादुद्वेजनद्वा रा प्राजापत्यादौ तन्निवृत्तिहेतुत्वेनच जायते उद्वेजनंतु इयंब्रह्महत्याऽ वश्यंमह्यंक्षयरोगंदास्यतीतिनिश्चयहेतुकम् ततश्चेदं प्राजापत्याद्यनुष्ठानं तन्निवृत्तिहेतुरतोऽवश्यमनुष्ठेयमितिप्ररोचना तत्तद्विपाकजन्येत्यवश्यं कर्म्मविपाकप्रस्तावना प्रायश्चित्तादौवक्तव्या

विषे रुचितें विना प्रवृत्तिके अभाव होणेतें तिसकारणतें रुचिकी प्रवृत्ति वास्तें कर्मविपाककहाहै तिसके अर्थ कोईक प्ररोचना विधानकरणेयोग्यहै सो प्ररोचना कहीदीहै यागेति यज्ञादिकांविषे अनुकूल फलके श्रवणकर्के और क्षयरोगआदिकांके हेतु जो पाप तिनके श्रवणतें होया जो हृदयकंप तिसद्वारा प्राजापत्यादिव्रतविषे पापके निवृत्तिहेतुहोणे कर्के प्ररोचना उत्पन्नहो तीहै ॥ उद्वेजनका अर्थ कहतेहां एह ब्रह्महत्या अवश्यहि मेरेतांई क्षयरोग आदिकांको देवेगी एहनिश्चय जानणा तिसकारणतें एह प्राजापत्यादिव्रतका अनुष्ठान अवश्यहि करणेयोग्यहै तिस क्षयरोगकी निवृत्तिहेतुतें ऐसें प्ररोचना तिसतिसविपाकफलतें उत्पन्नहोतीहै तातें कर्मविपा ककी प्रस्तावना प्रायश्चित्तके आदि विषे अवश्यहि कहणे योग्यहै

सेति फेर सो कर्मविपाक सामान्य और विशेष भेदतें दोप्रकारकाहै सामान्यतें जो कर्म विपाक
कारूपहै सो शिवधर्मोत्तर विषे कहाहै अथेति इसतें अनंतर पतित पुरुषांकों अधर्मकहाहै
पापशब्दका अर्थ कहतेहैं नरेति महाघोर नरकादि विषे पातन करणेतें पाप कहाहै १
विष्णुधर्मोत्तरविषेभीकहाहै हेभार्गव पुरुषांकों मृत्युके प्राप्त होयांहोयां आतिवाहिक संज्ञाकर्के देह
होताहै सो केवल मनुष्योंकाहिहै होरकानहि १ तिसका अर्थ कहतेहैं वाहमिति पापकेकरणे
वालै देहको छोडकर्के जो होवे सो कहिए आतिवाहक सोई यमपीडाके भोगका हेतुहै
याम्येरिति हेभृगूत्तम मनुष्यांका आतिवाहक देह यममार्गकर्के यमदूतांने लैजाईदाहै हेद्विज
अन्यजीवांका नहि २ तैसेहि और स्मृति विषे कहा है। मनुष्या इति ॥ एह जो मनुष्य हैं

सपुनःसामान्यविशेषभेदाद्द्विविधः॥सामन्यतःकर्मविपाकःशिवधर्मोत्तरे॥
अथातःपततांपुंसामधर्म्मःपरिकीर्त्तितः नरकादौमहाघोरपातनात्पापमु
च्यते १ विष्णुधर्मोत्तरेऽपि॥आतिवाहकसंज्ञस्तुदेहोभवतिभार्गव केवलं
तन्मनुष्याणांमृत्युकालउपस्थिते १ वाहं पापोपार्ज्जकंदेहमतिक्रम्यजायते
आतिवाहकोयमयातनाभोगहेतुः ॥ याम्यैर्नरैर्मनुष्याणांतच्छरीरंभृगूत्तम
नीयतेयाम्यमार्गेणनान्येषांप्राणिनांद्विज २ तथा मनुष्याः प्रतिपद्यंतस्वर्गं
नरकमेववा नैवान्येप्राणिनःकेचित्सर्वेतेफलभोगिनः१ शुभानामशुभानांच
कर्म्मणांभृगुनंदन संचयःक्रियतेलोकेमनुष्यैरेवकेवलम् २ तस्मान्मनु
ष्यश्चमृतोयमलोकंप्रपद्यते नान्यःप्राणीमहाभागफलयोनौव्यवस्थितः ३

सोई स्वर्ग और नरक मे जातेहैं और, जो पशु पक्षी आदिक प्राणी हैं तिनको स्वर्गा
दिगति नहिहै किंतु पूर्वजन्ममें मनुष्य देह करके कीते होए जो कर्म तिनके फल
को भोगतेहैं इस जन्मके कर्मोंका फल उनको आगे नहि होता १ इसीको स्पष्ट
करके कहते हैं शुभेति हे भृगुनंदन शुभ और अशुभ जो कर्म, तिनका संचय इस
लोकविषे केवल मनुष्योंने करीदाहै औरोंने नहि २ तस्मेति तिस कारणसे मृतहोया २
मनुष्य यमलोकको जाताहै और प्राणी नहि जाता हेमहाभाग जिस करके होर पशुपक्षी
आदि प्राणी फलयोनिविषे व्यवस्थित है इसका अर्थ स्पष्ट पिच्छेहोचुका ॥ ३ ॥

याम्येति यमलोकको प्राप्त होया जो पुरुष तिसकों राजा धर्म नरकादियोनिमें पापके अनुसार प्राप्त करताहै ४ ब्रह्मपुराणविषे कहाहै कर्मेति कर्म करके और मनकर्के और वाणी कर्के जो पुरुष धर्मतें रहितहैं सो यमलोक विषे बहुत पीडाकों प्राप्तहोतेहैं १ इहेति इसदेहविषे पुरुष अल्पभी अशुभकर्म करे तां यमलोकविषे जो नरक तिसविषे जो घोरपीडा तिसकों प्राप्तहोताहै २ विष्णुपुराणविषे भी किहाहै पापेति जो पापके करणेवाला पुरुष जेकर प्रायश्चित्तसें पराङ्मुखहोवे अर्थात् प्रायश्चित्तकों न करे तां नरककों प्राप्तहोताहै और पापोंके दूरकरणेवास्ते जो जैसे प्रायश्चित्तहैं तैसे तैसे स्मरण कर्के परमऋषियोंनें कहेहैं १ तैसेंभविष्योत्तरपुराणविषे कहाहै देवेति । देवता और तिर्यङ् जो पशुआदि और जो मनुष्य अधर्मविषे निरंतरयुक्तहैं तिनांकोंघोर

याम्यलोकंप्रपन्नस्यपुरुषस्यतथायमः ॥ योनीश्चनरकांश्चैवनिरूपयति कर्म्मणेति ॥ ४ ॥ ब्रह्मपुराणे कर्म्मणामनसावाचायेधर्म्मविमुखानराः यमलोकेतुतेघोरांलभंतेपरियातनाम् ॥ १ ॥ इहाल्पमपिकृत्वातुनरः ॥ कर्म्माशुभात्मकं प्राप्नोतिनरकेघोरांयमलोकेषुयातनाम् २ विष्णुपुराणेऽपि ॐ पापकृत्यातिनरकान् प्रायश्चित्तपराङ्मुखः पापानामनुरूपाणि प्रायश्चित्तानियद्यथा १ तथातथैवसंस्मृत्यप्रोक्तानिपरमर्षिभिरितितथा भविष्योत्तरे ॥ देवतिर्यङ्मनुष्याणामधर्म्मनिरतात्मनाम् ॥ धर्म्मराजः स्मृतःशास्तासुघोरैर्विविधैर्वधैः १ नियमाचारसक्तानांप्रमादात्स्खालितात्मनाम् प्रायश्चित्तैर्गुरुःशास्तानतुतैरिष्यतेयमः २ पारदारिकचोराणामन्यायव्यवहारिणाम् नृपतिःशासकःप्रोक्तःप्रच्छन्नानांचधर्म्मराट् । ३ तस्मात्कृतस्यपापस्यप्रायश्चित्तंसमाचरेदिति ब्रह्मपुराणे ततश्चयातनादेहंक्लेशनप्रतिपद्यते तत्कर्म्मजंयातनार्थममातापितृसंभवम् १

विविधवधोंकर्के धर्मराजहि शिक्षादेणेवालाकिहाहै १ नियमेति जो नियम और आचरविषे युक्त हैं और प्रमादतें नियम और आचारतेंरहितहोयेहैं तिनोंकों प्रायश्चित्तांकर्के शिक्षादेणेवाला गुरु किहाहै और यम नहि तिनांकोंदंडदेणवालाकहा २ पारेति जो पुरुष परस्त्रीकों चुरातेहैं और नीतिसें विना जो व्यवहारकर्तेहैं तिनोंका शास्ता क्या शिक्षादेणेवालाराजाकहाहै और गुप्तपाप केकरणेवालेजो पुरुष तिनांकाशास्ता धर्मराज कहाहै ३ तस्मादिति तिसकारणतेंकीताजो पाप तिसके प्रायश्चित्तकोंकरे ॥ और ब्रह्मपुराणविषेकहाहै ततश्चेति तिसकारणतें यातनादेहकों क्लेशकर्के प्राप्तहोताहै सो अतिवाहकदेह पीडाके वास्ते माता पितातेंविना कर्म्मातें उत्पन्न होवाहै १

पुरुष पूर्व जो आकृति और आयु और अवस्थासंस्थान क्या बाल्यादिस्थिति इनाकर्के युक्त और सौंदर्यनाकर्के युक्तबहुत यत्नकर्के रक्षित जो प्राचीन पांच भौतिकदेह तिसकोंत्यागके २ औरजो अपणे कर्मोंते उत्पन्नहोया पीडाकेंवास्ते तन्मात्रागुणांकर्केयुक्त नानास्वरूपकर्मोंतें शरीर तिसकोंग्रहण कर्ताहै ३ पापांकें करणेवालासुखदुखांके भोगणेवास्ते दृढशरीरकों प्राप्तहोताहै अतिशयकर्के तिसदेहकर्केस्वकर्म्मांकेफलकोंभोगताहै और धर्मीपुरुषयमलोकसेस्वर्गमें जाकर सुखकोंभोगताहै ४ किंचेति इसमें होर विचारहै कि कर्म्मांका फल कर्म्म विपाक है इसजगा कर्म केवल देहव्यापारतें उत्पन्नहोये विषे नहि जानणे किंतु देह और वाणी और मनके व्यापारसें उत्पन्न होयेहोयेजानणे सो मनुजी कहतेहैं शुभेति शुभ और अशुभहै फल जिसका ऐसाजो कर्म उसकोंमन औरवाणी और देहसें उत्पन्नहोयाहोया जानणा और कर्मांकी

तत्प्रमाणवयोऽवस्थासंस्थानैःप्राक्तनंतथा विहायसुमहद्गुप्तंशरीरंपांचभौतिकम् २ सुमहत्गुप्तम् सौंदर्य्यापादनपूर्वकं महता प्रयासेनरक्षितम् ॥ अन्यच्छरीरमादत्तेयातनार्थंस्वकर्म्मजम् तन्मात्रगुणसंपन्ननानात्मीयंस्वकर्म्मजम् ३ दृढंशरीरमाप्नोतिसुखदुःखोपभुक्तये तेनभुक्त्वास्वकर्म्माणि पापकर्त्तानरोभृशम् सुखानिधार्म्मिकोदृष्टरतदानीतोयमक्षयादिति ४ किंच कर्म्मणांविपाकइत्यत्र कर्म्माणिनकेवलंकायव्यापारमात्रपराणि किन्तुकायवाङ्मनोव्यापारपराणि तदाह मनुः। शुभाशुभफलंकर्म्ममनोवाग्देहसंभवम् कर्म्मजागतयोन्दृणामुत्तमाधममध्यमाः १ उत्तमाधममध्यमागतयोहि देवमनुष्यतिर्य्यगादिरूपाजन्मांतरप्राप्तयो मानसवाचिककायिककर्म्मभिः प्रत्येकंयोज्याःएषांयागादिविषयत्वेउत्तमाः स्तेयादिनिवृत्तिविषयत्वेमध्यमाः स्तेयादिविषयत्वेऽधमाः ॥ प्रकृतत्वान्निकृष्टकर्म्मणोदशविधत्वकथनपूर्वकंमनसस्तन्नियंतृत्वमाह तस्येहत्रिविधस्यापित्र्यधिष्ठानस्यदेहिनः दशलक्षणयुक्तस्यमनोविद्यात्प्रवर्त्तकम् १

यांगतियां पुरुषांकों उत्तम मध्यम अधमकर्केहोयांहैं १ सो उत्तम मध्यम अधमगतियां देवता और मनुष्य और तिर्यगादि क्या पशुपक्ष्यादिरूप जाननीयां और इसजगा उत्तमाधममध्यमा एहछेदकर्केहै और वास्तवपाठ उत्तममध्यमाधमा एहहै और अन्यजन्मकों प्राप्तकरणे वालियां जानणीयां एक एक क्रमकर्केमानस वाचिक कायिककर्मांकर्के कहीयांहैं और इनाकर्मांकों यागादि विषयमें उत्तम और स्तेयादिकांकी निवृत्तिविषयमेंमध्यम स्तेयादिजो चोरीआदिकहै उसके करणे विषे अधमजानणीयां॥ अब मंदकर्मांकों प्रसंगविषेहोणेसें दशप्रकारके कथनपूर्वकमनके नियंतृत्व कों कहतेहैं॥ तस्येति तीनगुणहैं अधिष्ठानजिसके ऐसा जो दशलक्षणकर्के युक्त देहिसंबंधीक मेंहै तिसका प्रवर्त्तकमनकोंजाने १

जो दस लक्षणकहेहें सो तीनश्लोककर्के दखातेहैं परद्रव्येति पराए धनोविषे चारओरसें खोटा ध्यान करणा अर्थात् किसीके धनस्त्रीआदिविषें अभिलाषाकरणी और मनकर्केदुष्टकामोकाक्यामै इसकेघरविषेकुछविघ्नकरांऐसा चिंतनकरणा और झूठा हठकरणाक्यापरलोकनहिदेहहि आत्माहै ऐसाकहणा यहत्रयप्रकारकामानसकर्मकहाहै १ पारुष्यमिति कठोरवाक्य और असत्यवाक्यकहना और सर्वथा चुगलीकरणी और परोक्षविषे दूसरेके दोषकहणे एहचार प्रकारका वाङ्मय कर्महै अर्थात्एहकर्म्मवाणीसे होताहै २ और स्वामिकर्के नहि दिते जो द्रव्यतिनोकाग्रहण करणा और अशास्त्रविधिकर्केपशुआदिकोंको हिंसाकरणी और परस्त्रियोंकेसाथ विषयभोगणा यहत्रयप्रकारका शारीरिककर्म किहाहै ३ अबइसमैकुछ और विशेषहै कि जिस मनआदिकर्के पापइकठाकर्तेहैं

परद्रव्येष्वभिध्यानंमनसानिष्टचिंतनम् ॥ वितथाभिनिवेशश्चत्रिविधंकर्म्म मानसम् १ पारुष्यमनृतंचैवपैशुन्यंचापिसर्वशः असंबद्धप्रलापश्चवाङ्मयंस्याच्चतुर्विधम् २ अदत्तानामुपादानंहिंसाचैवाविधानतःपरदारोपसेवाच शारीरंत्रिविधंस्मृतम् ३ अभिनिवेशःपरलोकोनास्तिदेहएवात्माएवमित्याद्यसदाग्रहःत्रिविधंत्रिप्रकारंमानसमशुभमित्यर्थः एवमग्रेपि असंबद्धप्रलापः परोक्षपरदूषणकथनम् अदत्तानांस्वामिनाऽदत्तानामपिद्रव्यादीनांग्रहणम् अविधानतःअशास्त्रविधिना पश्वादिहिंसनम् येनोपार्ज्यतेतेनैवोपभोग्यं दर्शयति। मानसंमनसैवायमुपभुंक्तेशुभाशुभम् वाचावाचाकृतंकर्म्मकायेनैवतुकायिकम् १ मनसाऽऽध्याश्रयेणमानसं मनःकृतंपापमुपभुंक्ते एवमन्यदपिबोध्यम्। इदंचत्रिविधस्यैवसमत्वेतत्तद्भोगपरम् एकैकस्यप्राधान्येनाह ॥ शरीरजैःकर्म्मदोषैर्यातिस्थावरतांनरः

तिसी मनआदियोंकर्के हिभोगनूं दिखातेहैं मानसमिति मनकर्केकीते जो पापउनकोंमनकर्के ही पुरुषभोगताहै और वाणीकर्केकीते जोपाप तिनानू वाणीकर्केहीभोगताहै और देहकर्केकीते जो पाप तिनांकोंदेहकर्केहि भोगताहै १ इसीकाअर्थस्पष्टकर्के कहतेहैं मनसेति आधीका आश्रय जो मन तिसकर्के कीते जोपापतिनाकों मनकर्केहीं पुरुषभोगताहै आधिःमानसीपीडाहै परंतु एह जो पापहैं तिसको तीनोंपापोंके बराबरहोनेसें तिनांपापोंके भोगोंको भोगताहै और तीनोपापों केमध्यमेएक पापकर्मकोप्राधान्यताहोवे तो तिनोंकेफलकोंपृथक् पृथक् कर्के कहतेहैं शरीरजैरिति शरीरकर्के कीतिजोपाप तिनोंकर्के पुरुष वृक्षयोनिकों प्राप्तहोताहै

श्रौर वाणीकर्के कीते जो पाप तिनोंकर्के पक्षियोनिकों श्रौर मृगयोनिकों प्राप्तहोताहै श्रौर मन कर्के कीते जो पाप तिनोकर्के चांडालजातिकों प्राप्तहोताहै १ इसका अभिप्राय कहतेहैं शरीरकर्के कीते जो पापतिनाके बहुतहोनें कर्के वृक्षयोनिकों प्राप्तहोताहै श्रैसे होरभी जाणो इस विषयमे विशेषकर्के अर्थकथनकरणे वास्ते श्रौर स्मृति कथन करतेहैं सामान्येति सामान्य श्रौर विशेष भेदकर्के कर्मोंकाफल दोप्रकारकाभीहै तथापि शरी रकर्के श्रौर वाणीकर्के श्रौर मनकर्के तीन प्रकारकाकर्मोंकाफल है अब आत्माको ईश्वररूपप्रतिपादनकर्के याज्ञवल्क्यजी कहतेहै यद्येवमिति हेब्रह्मन् यदवो ईश्वरऐसाहै तव कैसे पापयोनियों विषे उत्पन्न होताहै श्रौर फेर खोटे जो भाव स्त्रीसंयोगादि उनोके साथकर्केसंयुक्तहो ताहै १ करणैरिति फेर वो ईश्वर इंद्रियोंकर्केयुक्तभीहै परंतु पूर्वज्ञानकों क्योंनहि जानताहै श्रौरवो

वाचिकैःपक्षिमृगतांमानसैरंत्यजातिताम् १ शारीरिकपापबाहुल्येन स्थाव रत्वं प्राप्नोतीति अत्रैवविशेषाभिधानार्थंस्मृत्यन्तरमुपन्यस्यते सामान्य विशेषभेदेनाद्विविधोऽपिकायिकवाचिकमानसभेदात्त्रिविधः कर्म्मविपाकः आत्मनईश्वरस्वरूपत्वंप्रतिपाद्याहयाज्ञवल्क्यः॥यद्येवंसकथंब्रह्मन्पापयो निषुजायते ईश्वरःसकथंभावैरनिष्टैःसंप्रयुज्यते १ करणैरन्वितस्यापिपूर्वं ज्ञानंकथंचन वेत्तिसर्वगतांकस्मात्सर्वगोऽपिनवेदनाम् २ अन्त्यपक्षिस्था वरतांमनोवाक्कायकर्मजैः दोषैःप्रयातिजीवोऽयं भवयोनिशतेषुच ३ अन न्ताश्चतथाभावाः शरीरेषुशरीरिणाम् रूपाण्यपितथैवेहसर्वयोनिषुदेहि नाम् ४ विपाकःकर्मणांप्रेत्यकेषांचिदिहजायते इहवामुत्रवैकेषांभव स्तत्रप्रयोजनम् ५

ईश्वर संपूर्ण लोकोंके हृदयविषे स्थितभीहै परंतु संपूर्ण पुरुषोंकीपीडाकों क्योंनहि जानताहै२ अन्त्येति श्रौर मन कर्के कीते जो पापकर्म्म, उनोंके फलकर्के संसारविषे शतजातियोंके मध्यविषे एह जीव चांडाल जातिकों प्राप्तहोताहै श्रौर इसीप्रकार वाणीकर्के कीते जो पापकर्म्म तिनो कर्के पक्षियोनिकों प्राप्तहोताहै श्रौर शरीरकर्के कीते जो पापकर्म तिनो कर्के स्थावर क्या वृक्षादियोनिकों प्राप्तहोताहै ३ अनन्ताइति ऐसेहि बहुततरोंके जन्मादिक शरीरोंविषे शरी रियोंकोंहोतेहै श्रौर इसी प्रकार संपूर्ण योनियोंविषे देहियोंके स्वरूपभी बहुतप्रकारके होतेहैं ४ विपाकइति श्रौर कैयों कर्म्मोंकाफल इसलोकमे श्रौर कैयोंका मरकर्के परलोकमे प्राप्तहोताहै इसलोकविषे अथवा परलोकविषे कैयोंजीवोंका उत्पन्नहोणा एही केवल प्रयोजनहै ५

इसीकारस्पष्टार्थहै परद्रव्याणीति और जो पुरुष परपुरुषोंके धनकों लैणेवास्ते ध्यानकरताहै और दुःखहेतुका चिंतनकरताहै और जो झूठकहकर उसीकों सत्यप्रतिपादनकरताहै सो पुरुष चांडालयोनियोंकों प्राप्तहोताहै ६ पुरुष इति जोपुरुष झूठबोलताहै और चुगलीकरताहै और अनुचितवार्ताकाकथनकरताहै सो मरकर्के पक्षियोंकीयोनिकोंप्राप्तहोताहै ७ अदत्तादानेति आपहि किसीको वस्तुके उठालैणेविषे प्रीतिवाला और परस्त्रीयोंमे संगकरणे वाला और विधिकेविना हिंसाकरणे वाला जोपुरुषहै सो मरकर्के वृक्षयोनिकों प्राप्तहोताहै ८ और सत्व और रज और तम यह तीनोगुणजबविशेषहोवेंतो तिनोंका जोफल सोपृथक् पृथक्कर्के याज्ञवल्क्यजी कथन करतेंहैं आत्मज्ञइतिआत्माके जानणेवाला और पवित्ररहिणेवाला और मनकेरोकणेवाला और तप क्या चान्द्रायणादि व्रत तिसकेकरणेवाला बाह्येंद्रियके रोकणे वाला और धर्म करणे वाला और वेदकेजानने वाला ऐसा जो सत्वगुण विशिष्ट पुरुष सो मरकर्केदेवयोनिकोंप्राप्तहोताहै १

परद्रव्याण्यभिध्यायंस्तथानिष्टानिचिंतयन् वितथाभिनिवेशीचजायतेन्त्यासुयोनिषु ६ पुरुषोऽनृतवादीचपिशुनःपुरुषस्तथा अनिबद्धप्रलापीचमृतः पक्षिषुजायते ७ अदत्तादाननिरतःपरदारोपसेवकः हिंसकश्चाविधानेनस्थावरेष्वभिजायते ८ सत्वादिगुणविशेषेणविपाकविशेषंसएवाह । आत्मज्ञः शौचवान्दान्तस्तपस्वीनिर्जितेन्द्रियः धर्मकृद्वेदविद्यातिसात्विकोदेवयोनिताम् १ असत्कार्य्यरतोऽधीरआरम्भीविषयीचयः सराजसोमनुष्येषुमृतोजन्माधिगच्छति २ निद्रालुःक्रूरकृल्लुब्धो नास्तिकोयाचकस्तथा प्रमादवान् भिन्नवृत्तोभवेत्तिर्यक्षुतामसः ३ रजसातमसाचैवसमाविष्टोभ्रमन्निह भावैरनिष्टैःसंयुक्तःसंसारंप्रतिपद्यते ४ मनुरपि सत्वंरजस्तमश्चेतित्रीन्विद्यादात्मनोगुणान् यैर्व्याप्येतान्स्थितोभावान्महान्सर्वानशेषतः १

असत्कार्य्येति जोअसत्कार्य्योंकेकरणेवालाहै औरधैर्यतासे रहितहै और कार्य्योंकेआरंभविषे युक्त है और विषयोंकभोगनेवालाहै ऐसा जो रजोगुणकर्के युक्त पुरुषहै सो मरकर्केमनुष्योंविषे जन्म कों प्राप्तहोताहै २ निद्रालुरिति निद्राहै प्यारीजिसकों और क्रूरकर्म्मोंके करणेवाला और जीवोंके फगड़ने वाला और ईश्वरकी निंदाकरणेवाला और याचनाकरणेवाला और प्रमादकर्के युक्त और दुष्टस्वभाव वाला ऐसा जो तमोगुणकर्के युक्त पुरुष सो मरकर्के तिर्यग्योनियोंविषें उत्पन्न होताहै ३ रजसेति रजोगुणकर्के और तमोगुणकर्के बद्धाहुया जो पुरुष सो इस संसार विषे भ्रमताहुया और खोटेभावोंकर्के युक्त हुया हुया अर्थात् रोगादि विपत्तिकर्केयुक्त होया होया फेर संसारकोंही प्राप्तहोताहै ४ मनुजीभीकहतेहैं सत्वमिति सत्व और रज और तम यह तीनगुण आत्माकेहैं जो महान् आत्मा इनाभावों विषे संपूर्णता कर्के स्थितहै १

यइति जिसके देहविषे जो गुण सत्व अथवा रज अथवातम अधिकहोजावे तद तिस देहीको पूर्वोक्तव्यवस्थाकर्के तिसीसात्विकादि नामवालेकोंकर्ताहै २ इसीको कहतेहैं सत्वमिति सत्वगुण ज्ञानकोंकहतेहै और तमोगुणअज्ञानकोकहतेहैं राग और द्वेष रजोगुणकोंकहतेहैं और इनातीनो गुणोका जो वपु सो संपूर्ण भूतोंका अर्थात् पृथिव्यादियोंकाआश्रयहै ३ तत्रेति जो चित्तवृत्त प्रीति कर्के युक्तहै और आत्मामे कुछक शांतिवालाहै और शुद्ध शोभा वाल्हाहै उसकों सत्वगुण जान ४ यत्त्विति जो दुःखकर्के युक्त और आत्माको अप्रसन्न करणेवालाहै उसकों रजो गुण जान जो रजोगुण निरंतर क्रियाकों करवाताहै और देहि योंकों उद्यमदेताहै ५ यत्त्विति जो मोहकर्के संयुक्त और अव्यक्त विषयों कर्के युक्तहै और

योयदेषांगुणोदेहेसाकल्येनातिरिच्यते सतदातद्गुणप्रायंतंकरोतिशरीरिणम् २ सत्वंज्ञानंतमोऽज्ञानं रागद्वेषौरजःस्मृतम् एतद्व्यापितदेतेषांसर्वभूताश्रितंवपुः३ तत्रयत्प्रीतिसंयुक्तंकिंचिदात्मनिलक्षयेत् प्रशांतमिवशुद्धाभंसत्त्वंतदुपधारयेत् ४ यत्तुदुःखसमायुक्तमप्रीतिकरमात्मनः तद्रजोऽप्रतिघंविद्यात्सततोंहर्तिदेहिनाम् ५ यत्तुस्यान्मोहसंयुक्तमव्यक्तंविषयात्मकम् अप्रतर्क्यमविज्ञेयंतमस्तदुपधारयेत् ६ त्रयाणामपिचैतेषांगुणानांयःफलोदयः अग्र्योमध्योजघन्यश्चतंप्रवक्ष्याम्यशेषतः ७ वेदाभ्यासस्तपोज्ञानं शौचमिंद्रियनिग्रहः धर्मक्रियात्मचिन्ताचसात्त्विकंगुणलक्षणम् ८ आरम्भरुचिताऽधैर्यमसत्कार्यपरिग्रहः विषयोपसेवाचाजस्त्रंराजसंगुणलक्षणम् ९

तर्कसें रहितहै और पदार्थोंके जाननेमे असमर्थहैं तिसकों तमोगुण जान ६ त्रयाणामिति सत्व और रज और तम यह जो तीन गुणहैं इनोंका जो फल उत्तम और मध्यम और अधम है उसकों विशेषकर्के कहतेहैं ७ वेदाभ्यासइति वेदकाअभ्यासकरणा और पूर्वोक्ततपकरणा और ज्ञान और पवित्रता और इंद्रियोंका रोकना और धर्मोंका करणा और आत्मविचार करणी एह सत्वगुणका फलहै ८ आरंभेति कार्योंके आरंभविषे रुचिकरणी और धैर्यता नहोणी और चोरीआदि खोटेकार्योंका करणा और निरंतर विषयोंकीसेवाकरणी एह रजो गुणकेफलहैं ९

लोभइति बहुतलोभकरणा औरसोणा और धैर्यतासें रहितहोणा और क्रूरताकरणी और ईश्वरकी निंदाकरणी और अपणीजीविकाछोडकरदूसरेकीजीवकाकर्के जीविकाकरणी और बहुतयाचना करणी और प्रमादकरणा एहपुरुषाकोंतमोगुणकेलक्षणहैं १० अबइनकी स्थितिमे व्यवस्थाकहतेहैं त्रयेति यह जो पीछे तीनगुणकहेहैं सो तीनोंमेहि स्थितहैं अर्थात् जिसजगा एकहै उसजगा दो भीहैं और यहजो तीनोके लक्षणकहेहैं सोभी क्रमकर्के एकमे हि होणवालेहैं कभी सात्विक कभीराजसादि ११ अब जिसजगा दोनोंगुणोंको दबाकर एक बढगयाहै उसकालक्षणकहतेहैं यत्कर्मेति जिसकर्मकोंकर्केअथवाकर्ता हुआ और करणेकीइच्छावाला हुआ हुआ लज्जाकोंनहि प्राप्तहोताहै सो विद्वानने संपूर्णतमोगुणकेलक्षणजानने १२ येनेति जिसकर्म कर्के पुरुष इसलोक विषे दृढतरप्रसिद्धीकी इच्छाकरताहै और असंपत्तिकेविषे शोककर्ताहै सो रजोगुणकालक्षणजाण

लोभःस्वप्नोऽधृतिःक्रौर्यंनास्तिक्यंभिन्नवृत्तिता । याचिष्णुताप्रमादश्चता मसंगुणलक्षणम् १० त्रयाणामपिचैतेषांगुणानांत्रिषुतिष्ठताम् इदंसामा सिकंज्ञेयंक्रमशोगुणलक्षणम् ११ यत्कर्मकृत्वाकुर्वंश्चकरिष्यंश्चनलज्जते तद्ज्ञेयंविदुषासर्वंतामसंगुणलक्षणम् १२ येनास्मिन्कर्मणालोकेख्याति मिच्छतिपुष्कलाम् यस्तुशोचत्यसंपत्तौतद्विज्ञेयंतुराजसम् १३ यत्सर्वेणे च्छतिज्ञातुंयन्नलज्जतिचाचरन् येनतुष्यतिचास्यात्मातत्सत्त्वगुणलक्षणम् १४ तमसोलक्षणंकामोरजसस्त्वर्थउच्यते सत्वस्यलक्षणंधर्मःश्रैष्ठ्यमेषांयथाक्र मम् १५ येनयांस्तुगुणेनैषांसंसारान्प्रतिपद्यते तत्समासेनवक्ष्यामिसर्व स्यास्ययथाक्रमम् १६ देवत्वंसात्विकायान्तिमनुष्यत्वंचराजसाः तिर्यक्त्वं तामसानित्यमित्येषात्रिविधागतिः १७

१३ यत्सेति जो पुरुष संपूर्णपदार्थोंके जाननेकी इच्छाकर्ताहै और आचरण करताहुआलज्जाकों प्राप्तहोताहै और जिसकर्केइसकाआत्माप्रसन्नहोताहै सो सत्वगुणकालक्षणहै १४ तमोगुणकालक्ष णएहहै क्या काम बहुतहोणा और रजोगुणकाएहलक्षणहै क्याअर्थमे इच्छाहोणी और सत्वगु णका एहलक्षणहै क्या धर्महोणाऔर इनोगुणोंका एहयथाक्रम श्रेष्ठ्यकथनकिआहै अर्थात् तमो गुणसें रजोगुण और रजोगुणतेसत्वगुणश्रेष्ठहै १५ येनेति इन्हीगुणाविषेजिसगुणकर्केजो २ जन्म प्राप्त होताहै सोसंक्षेपकर्के संपूर्णकोयथाक्रमकर्केकहताहुं १६ देवत्वमिति सत्वगुणवालेपुरुष देव योनिको प्राप्तहोतेहे और रजोगुणवालेपुरुष मनुष्ययोनिको प्राप्तहोतेहैं और तमोगुणवाले पुरुष तिर्यग्योनिको प्राप्तहोतेहैं इह तीन प्रकारकी तिनोकी गति है १७

त्रिविधेति इनोंतीनोगुणोंकी तीन तीनप्रकारकी कर्मविद्याविशेष कर्के गौणगतिहै एक अधम और दूसरीमध्यम और तीसरीउत्तम १८ स्थावराइति वृक्ष और क्रिमि और कीट और मत्स्य और सर्प और कच्छप और पशु और गिदड एहतमोगुणकी अधमगतिहै अर्थात् तमोगुणबाले इनजन्मों को प्राप्तहोतेहें १९ हस्तिनइति हस्ती और तुरंग क्या घोडेऔरशूद्र और म्लेछ जो निंदितऔर सिंह व्याघ्र और शूकर इहतमोगुणकीमध्यमगतिहै २० चारणाइति चारण और पक्षि और दंभकेकरणेवाले पुरुष औरराक्षस और पिशाच इहतमोगुणकीउत्तमगतिहै २१ झल्लाइति झल्लजाति और पहलवान और नट और शस्त्रकर्के जीविकाकरणे वालेपुरुष और जूआखेलनेवाले और मदिरापानकरणेवाले इह अधम रजोगुणकीगतिहै इस जगा प्रथम शब्द श्लोकके क्रमकर्के अधम अर्थका

त्रिविधात्रिविधैषांतुविज्ञेयागौणिकीगतिः अधमामध्यमाग्र्याचकर्मविद्याविशेषतः १८ स्थावराः क्रिमिकीटाश्चमत्स्याःसर्पाःसकच्छपाः पशवश्च सृगालाश्चजघन्यातामसीगतिः १९ हस्तिनश्चतुरङ्गाश्चशूद्राम्लेछाश्चगर्हिताः सिंहव्याघ्रवराहाश्चमध्यमातामसीगतिः २० चारणाश्चसुपर्णाश्च पुरुषाश्चैवदाम्भिकाःरक्षांसिचपिशाचाश्चतामसीषूत्तमागतिः २१ झल्लामल्लानटाश्चैवपुरुषाःशस्त्रवृत्तयःद्यूतपानप्रसक्ताश्चप्रथमाराजसीगतिः २२ राजानः क्षत्रियाश्चैवराज्ञांचैवपुरोहिताः वादयुद्धप्रसक्ताश्चमध्यमाराजसीगतिः २३ गंधर्वागुह्यकायक्षाविबुधानुचराश्चये तथैवाप्सरसःसर्वाराजसीषूत्तमागतिः २४ तापसायतयोविप्रायेचवैमानिकागणाः नक्षत्राणिचदेवाश्चप्रथमासात्विकीगतिः २५ यज्वानऋषयोदेवावेदाज्योतींषिवत्सराः पितरश्चैवसाध्याश्चमध्यमासात्विकीगतिः २६ ब्रह्माविश्वसृजोधर्मोमहानव्यक्तमेवच उत्तमांसात्विकीमेतांगतिमाहुर्मनीषिणः २७ ॥

वाचीहै ऐसे अगेभी जाणो २२ राजानइति राजा और क्षत्री और राजोंकेपुरोहित और वाद कर्केयुद्धकरणेवाले इहमध्यम रजो गुणकीगतिहै २३ गंधर्वाइति गंधर्वऔरगुह्यक और यक्ष और देवतोंकेअनुचर और संपूर्णअप्सरांइहरजोगुणकीउत्तमगतिहै २४ तापसाइति तपकेकरणेवाले और यतिक्या जितेंद्रियो और ब्राह्मण और विमानोंके उपरगमिनहोकरविचरणेवाले जो देवतयांकेगण और नक्षत्र एह अधम सत्वगुणकी गति है २५ यज्वानइति यज्ञके करणेवाले और ऋषि और देवता और वेद और ग्रहगण और वरसोंके देवता और पितर औरसाध्य एह मध्यम सत्वगुणकीगतिहै २६ ब्रह्मेति ब्रह्माऔर जो दक्षसे आद लेकर्के विश्वकेरचने वाले प्रजापति और धर्म और महत्तत्व और माया इह उत्तम सत्वगुणकीगतिकोंमनीषीकहतेहैं २७

एषइति तीनहैं प्रकाराजिसके ऐसा जो कर्म उसका संपूर्णताकर्के तीन प्रकारका सार्वभौतिक संसार कथन कियाहै २८ तैसें हारीतजीकहतेहै सर्वेति संपूर्ण जो लशुनादि अभक्ष्यचीजांउनो काभक्षणकरणा और जो नहिभोजनके योग्य चांडालस्पृष्ठछोलिआदि उनकाभोजनकरणा और जोगमनकेयोग्य नहिहैं गुरुपत्नीआदिक उनोकेसाथ गमन करणा और जो नहि यज्ञ कराणके योग्य शूद्रादि उनकायज्ञकरवाणा और असत्पुरुषोंसें दानलेणा और परस्त्रीकेसाथगमन करणा और अपणे संबधियोंके और परपुरुषोंके धनका हरणा और प्राणियोंकी हिंसाकरणी इह शरीरकृत कर्महैं और कठोरहोणा और झूठकहिना और विवाद करणा और वेदनिंदा करणी इह वाणीकृतकर्महैं और दूसरेको दुःखदेणा और दूसरेके साथ द्रोहकरणा और क्रोधकरणा और लोभकरणा और मोहकरणा और अहंकारकरणा इहमानसकर्महै इहअठारां कर्म

एषसर्वःसमुद्दिष्टस्त्रिप्रकारस्यकर्मणः त्रिविधस्त्रिविधःकृत्स्नःसंसारःसार्वभौतिकः२८तथाचहारीतः। सर्वाभक्ष्यभक्षणमभोज्यभोजनमगम्यागमनमयज्ययाजनमसत्प्रतिग्रहणम् परदाराभिगमनम् स्वपरद्रव्यापहरणम् प्राणिहिंसाचेतिशारीराणि। पारुष्यमनृतंविवादःश्रुतिनिंदाचेतिवाचिकानि परोपतापनम् पराभिद्रोहः क्रोधोलोभोमोहोऽहंकारश्चेतिमानसानि। तदेतान्यष्टादशनैरयाणिकर्म्माणि यस्मिन्यस्मिन्करोतियः सतस्मिंस्तस्मिन्वयसि शारीरवाचिकमानसंप्राप्नोति तथाच सएव यस्यांयस्यामवस्थायांयत्करोतिशुभाशुभम् तस्यांतस्यामवस्थायांतत्तत्फलमवाप्नुयात् १ शरीरेणैवशारीरंवाङ्मयेनतुवाचिकम् मानसंमनसैवायमुपभुंक्तेशुभाशुभम् २ अथविशेषतःकर्म्मविपाकस्तत्रप्रेतत्वहेतुर्कोविष्णुधर्मोत्तरे ॥ असहिष्णुतयाऽन्यस्यगुणानांकारणंविना महत्पापंसमुत्पन्नं तदस्यप्रेतकारणम् १ प्रेतकारणभावप्रधानत्वात्प्रेतत्वकारणमित्यर्थः ॥

पुरुषांकों नरककेदेणेवाल्हेहैं । यस्मिन्निति । जिस जिस अवस्था विषे पुरुष शरीरकर्के और वाणी कर्के और मन कर्के कर्मांकों कर्ताहै उसीउसी अवस्थाविषे शारीर और वाचिक और मानसकर्मांके फलकों प्राप्तहोताहै ॥ तैसेहि हारीतजी कहतेहैं यस्यामिति इस श्लोककी टीका पूर्वकहीहै १ शरीरेति शरीरकर्के कीते जो शुभ और अशुभ कर्म उनाकों शरीर कर्के भोगता है और वाणी कर्के कीते जो शुभ और अशुभ कर्म उनाकों वाणी कर्के भोक्ताहैं और मन कर्के कीते जो शुभ और अशुभकर्म उनाकोंमनकर्केभोक्ताहै २ अब पुरुषांकों प्रेतयोनियोंविषे प्राप्तकरणेवाल्या जो कर्मफल सोभीकथनकियाहै विष्णुधर्मोत्तरपुराणविषे असेति कारणकेबिनाजो दूसरेके गुणोंको न सहारणा क्या निंदाकरणी उसकर्के उत्पन्नहोया जो महापाप सो पुरुषांकों प्रेतयोनिमें प्राप्तकर्दाहै १

ब्रह्मस्वेति जो पापी पुरुष ब्राह्मणके धनकों हरलेतेहैं सोभी प्रेतयोनिकों प्राप्त होतेहैं तैसेहि पर स्त्रियोंविषे रत और अपणेस्वामीकेसाथ द्रोहकरणेवाले २ और मित्रोंके साथद्रोहकरणेवाले और अपणे कर्मसें पतित अर्थात् विमुख जो पुरुषहैं सो निर्जलदेशविषे प्रेतयोनिकोंप्राप्त होतेहैं ३ सो कहाहै अग्निपुराणविषे मातरमिति ॥ माता और पिता और वृद्ध औरअपनेकुटुंबी और साधु इनों कों लोभकरके जो पुरुषत्यागताहै सो प्रेतयोनिकोंप्राप्तहोताहै १ कुज्योतिरिति कुत्सितज्योतिषी और कुत्सितवैद्य और कुत्सितज्ञानी और कुत्सितदेशमे रहिणे वाला अर्थात् जिसमें वेदाचार नहि उसजगा रहिणे वाला अथवा कुबुद्धिदेणे वाले कानामकुदेशकहै और शूद्रोंके ऊपरकृपाकरणे वाला इसमें एहअभिप्रायहै कि शूद्रपरकृपाकरणेका कोई दोष नहि परंतु सज्जनके समीप उसको त्याग कर शूद्रपर अनुग्रह करे तद दोषहै इह संपूर्ण प्रेतयोनिकों प्राप्तहोतेहैं २

ब्रह्मस्वहारिणश्चैतेपापाःप्रेतत्वमागताः परदाररताःकेचित्स्वामिद्रोहरताः परे २ मित्रद्रोहरताःकेचिद्देशेऽस्मिन्भृशदारुणे स्वकर्म्मविच्युताःसर्वेजायं तेप्रेतयोनिषु ३ अग्निपुराणे मातरंपितरंवृद्धंज्ञातिंसाधुजनंतथा लोभात्त्य जतियस्त्वेतान्सप्रेतोजायतेनरः १ कुज्योतिःकुत्सितोवैद्यः कुज्ञानीचकुदे शिकः शूद्रानुग्रहकर्ताचसप्रेतो- २ निंदकोद्विजदेवानांगीतवाद्यरतःसदा वृद्धबालगुरुविप्रान्योवमन्यभुनक्तिवै कन्यांददातिशुल्केनस० ३ न्यासा पहर्तामित्रध्रुकपरपाकरतःसदा निर्दोषांसुहृदांभार्यामृतुकालेनयातियः नवहेतयदातेषांसप्रेतो० ४ हस्त्यश्वरथयानानिमृतशय्यासनानिच मृगाजिनंतुगृह्णाति अनापदितुयोद्विजः ५

निंदकइति जो पुरुष ब्राह्मण और देवताकों निंदा कर्ताहै और गीतोंके गानेमें और बाजेयोंकि बजानेमें सदा युक्तहै और वृद्ध और बालक और गुरु और ब्राह्मण इनका अपमानकरके अर्थात् इनकों न देकर भोजन कर्ताहै और मोल लेकरके कन्याकोंदेताहै सोभी प्रेतयोनिकों प्राप्तहोताहै ३ न्यासेति जो पुरुष अमानको हर्ताहै और मित्रोंकेसाथ द्रोह कर्ताहै और जो सर्वदाकाल परपाकविषेयुक्तहै अर्थात् दूसरेकोपकीहुई रोटीकों खाताहै और दो षरहित जो सुंदर अपनी स्त्रीउसकों जो ऋतुकाल विषे नहि प्राप्तहोताहै जो यह पूर्वोक्तचारहैं अोकर इनका पालनपोषणादि नकरे तोभी प्रेतयोनिकों प्राप्तहोताहै ४ हस्तीति हस्ती और घोड़ा और रथ और जो वाहनहै और मृतपुरुषकी शय्या और आसन और मृगचर्म इनाकों आप दाके विना जो ब्राह्मण लेताहै ५

नयेति तैसेंहि अद्धावलावाहरनिकसेआहै जिसका ऐसीगोकों और सहितवनपर्वतोंके पृथिवीकों लेताहैं और कुरुक्षेत्रविषे और चांडालसें और पतितपुरुषसेंदानलेताहैं ६ और मासिकश्राद्धविषे और नवश्राद्धविषे भोजनकर्ताहै सो प्रेतहोताहै और भूमि पृथ्वी और कन्या और अन्न इनको जोहरताहैं सोभी प्रेतयोनिकों प्राप्तहोताहै ७ अब पिशाच योनिमे प्राप्तकरणेवाला जो कर्म सो पार्वती और शिवजीके संवादकर्केकहतेहैं अपहृत्येति और जो पुरुष किसीकेसंपूर्णधनकों और तैसेंहि देवतयोंके धनकों हरलेताहै और तैसेंहि दानकों देकर हरलेताहै और फेरदेताहै सोभी पिशाचयोनिकों प्राप्तहोताहै १ योनीति हेदेवि जो पुरुष जिसजगाकन्या नहि देणे योग्य उसजगा कन्या दानकों करवाताहैं और अपणे स्वामीके साथ द्रोहकर्ताहै सो

तथोभयमुखींदोगर्ग्रासशैलांमेदिनींद्विज कुरुक्षेत्रेचयद्दानंचांडालात्पतितात्तथा६ मासिकेपिनवश्राद्धेभुजन्प्रेतोनरोभृशम् भूमिकन्यान्नहर्त्ताचसप्रेतोजायतेभृशम् ७ पिशाचयोनिहेतुकमुमामहेश्वरसंवादे ॥ अपहृत्यचसर्वस्वंदेवस्वंचतथापरम् दत्तापहारदानाच्चपैशाच्यंयातिवैनरः १ योनिकार्येचयोदेविअहितेनतुकारयेत् सोऽपियातिपिशाचत्वंस्वामिद्रोहेणमानवः २ योनिकार्य्ये कन्यादानादि योवृत्तीश्वरःअहितेन स्वाम्यनिष्टनकारयेदित्यर्थः॥ स्वामिद्रव्यंगृहीत्वातुनचयोऽन्नंददातिच आत्मनःपोषकोमूढःपिशाचत्वंसगच्छति ३ ब्रह्मराक्षसत्वहेतुर्कगारुडादौ ॥ माठाधिपत्यंयोदेविकुरुतेमदमोहितः विनाशयेन्मठद्रव्यंनिर्माल्यंयश्चभक्षति १ परस्ययोषितंहृत्वाब्रह्मस्वमपहृत्यच अरण्येनिर्जलेदेशेभवतिब्रह्मराक्षसः २ ॥

भी पिशाचयोनिकों प्राप्तहोताहै २ स्वामीति जो पुरुष अपणे स्वामीसें धर्मार्थके वास्ते धनलेकर अभ्यागतोंकों अन्न नहिदेताहैं और अपणे आपकोंहिपालताहै सोभी पिशाच योनिकों प्राप्तहोताहै ३ अब ब्रह्मराक्षसयोनिकों प्राप्तकरणेवाला जो कर्म गरुडपुराण आदिविषे कहाहै सोकहतेहैं माठेति ॥ जोपुरुष मदकर्के मोहकोंप्राप्तहुआहुआ देवताके मंदिरकी महंती अंगीकार कर्त्ताहै और तिस देवताके धनका नाशकर्त्ताहैं और तिसीका नैवेद्य आपहि भक्षण कर्ताहैं १ परस्येति और परस्त्री और ब्राह्मणके धनकों चुरालेताहै सो वनविषे जलसेरहित जो देशउस विषे ब्रह्मराक्षसयोनिकों प्राप्तहोताहै इसमें यहव्यवस्थाहै कि इनपांचोंदोषोंसें एक दोषवाला अथवा दो अथवा तीनवालाहै तोभी ब्रह्मराक्षसयोनिकों प्राप्तहोताहै २

अधर्ममिति जो पुरुष मोहकर्के युक्त हुएहुए अधर्मकोधर्मकहतेहैं और परस्त्रियोंकोचोरीकर्के अथवा बलकर्के हरलेतेहैं सोभी वनविषे जलसें रहित जो देश उसविषे ब्रह्मराक्षस योनिको प्राप्तहोतेहैं ३ और कहतेहैं मनुजी संयोगमिति और जो पुरुष पतित पुरुषोंके साथ संयोग कर्त्तेहैं और परस्त्री कों हरलेतेहैं और ब्राह्मणके धनकोंहरलेतेहैं सोभी ब्रह्मराक्षसयोनिको प्राप्तहोतेहैं १ गुरुमिति जो पुरुष गुरुयोंकोंतुंकर्के और हुंकर्केबोलतेहैं और विवादकर्केब्राह्मणकोंजीततेहैं सोभी वनविषेजल से रहित जो देश उसविषे ब्रह्मराक्षसहोतेहैं २ आचार्यमिति आचार्य्य और ऋत्विक् और तपस्वी और मुनि इनोंका जो पुरुष अवमानकर्तेहैं सोभी राक्षसयोनिकोंप्राप्तहोतेहैं जो संस्कार करावे सो आचार्य्य और जो यजमानकेअर्थ हवनकरे सो ऋत्विक्है ३ अबनरकविषे होनेवाला जो देह

अधर्मंधर्ममित्याहुर्येतुमोहवशंगताः हर्त्तारःपरदाराणांचौर्येणबलतोपिवा ३ अरण्येनिर्जलेदेशेभवन्तिब्रह्मराक्षसाइतिमनुः संयोगंपतितैःकृत्वापरस्यैव चयोषितम् अपहृत्यचविप्रस्वंभवंतिब्रह्मराक्षसाः १ गुरुंतुंकृत्यहुंकृत्यवि प्रंनिर्जित्यवादतः अरण्येनिर्जलेदेशेभवंति- २ आचार्यमृत्विजश्चैवगुरुंचै वतपस्विनम् मुनीनप्यवमन्यंतेतेभवंतीहराक्षसाः ३ नारकीयदेहहेतुकं ब्रह्मपुराणे। कृतघ्नस्तुमृतोविप्रोयमस्याविषयंगतः यमस्यविनयैःक्रूरैर्वधंप्रा प्नोतिदारुणम् १ यातनाःप्राप्यतत्रस्थास्ततोबह्वीश्चसद्विजः ततागतःकृत घ्नश्चसंसारंप्रतिपद्यते२ अथाधमयोनित्वहेतुकंवामनपुराणे। बुभुक्षितेषुदेवे ष्वयएकोऽश्नातिमानवः श्वयोनिंससमासाद्यचंडालोजायतेनरः १ वेदोक्तंयः परित्यज्यधर्ममन्यंसमाचरत् दशवर्षसहस्राणिश्वयोनौजायतेध्रुवम् २

उसकोप्राप्तकरणेवालाजो कर्महै सो ब्रह्मपुराणविषे कहाहै कृतघ्नइति जो ब्राह्मणकृतघ्नहै सो म कर्के यमके मंदिरकों प्राप्तहोताहै फेर सो यमकेजो दूत बडेभयकेदेणवाले उनोंकरके दारुणजो वध उसकों प्राप्तहोताहै विनयनाम सेवककाभीहै १ येतिफेरउसजगाविषे बहुत जो यातनाउनकोंभोगताहै फेर उसजगासे निकलकर्के इस संसारविषे उत्पन्नहोताहै २ अबअधमयोनियोंकोंप्राप्तकरणेवाला जो कर्म वामनपुराणविषेहै सोकहतेहैं बुभुक्षिति जो पुरुष देवताको अन्नअर्पणनाकर्के आपही भक्षणकर्ताहै सो प्रथम श्वानयोनिकों भोगकर फेर चांडालयोनिकों प्राप्तहोताहै १ वेदोक्तमिति जो पुरुष वेदोक्तधर्मकोंत्यागकरविरुद्धधर्मकों कर्ताहै सो दशहजारवर्षकुत्तेकीयोनिकोंप्राप्तहोताहै २

वेदेति जो पुरुष वेदोंको और ब्राह्मणोंकी निंदाकर्तेहैं सो इसजन्ममें शूद्रहोतेहैं और मरकर्के श्वानयोनिकोंप्राप्तहोतेहैं ३ पद्मपुराणविषे कहाहै लभेदिति हेराजन् जो ब्राह्मण द्रव्यलेकर मंदिरको पूजाकर्ताहै सोचांडाल संज्ञकयोनिको प्राप्तहोताहै और जो मुएहोए पुरुषोंके एकादश दिनविषे भोजनकर्ताहै सोभी श्वानयोनिकों प्राप्तहोताहै १ यदीति जो गुरु पुत्रके तुल्य जो शिष्य उसको कारणके विना अपनी इच्छाकर्के त्यागताहै सोभी हिंस्रअर्थात् व्याघ्रादियोनिकों प्राप्तहोताहै २ पितरमिति जो पुत्र पिता और माताका अपमानकर्ताहै सो मरकर्के पहिले गर्दभयोनिको प्राप्तहोताहै उसको भोगकर फेर मनुष्ययोनिकों प्राप्त होताहै इत्थं मनुष्ययोनिभी नीचादिजानणी ३ ज्येष्ठमिति जो पुरुष ज्येष्ठभ्राताको पिताके समाननहि मानताहै वेदमे लिखाहै ( ज्येष्ठभ्रातापितृसमइति ) सो मरकर्के क्रौंचयोनिकों

वेदार्थनिंदकायेचयेचब्राह्मणनिंदकाः इहजन्मनिशूद्रास्तेमृताःश्वानोभवंतिहीति ३ ब्रह्मपुराणे लभेद्देवलकोराजन्योनिंचांडालसंज्ञिताम् मृतस्यैकादशाहेतुभुंजन्श्वानोभिजायते १ यदिपुत्रसमंशिष्यंगुरुर्जह्यादकारणम् आत्मनःकामचारेणसोऽपिहिंस्रःप्रजायते हिंस्रोवृकादिः २ पितरंमातरंचैवयस्तुपुत्रोऽवमन्यते ॥ सोऽपिविप्रोमृतोजंतुःपूर्वंजायेतगर्दभः गर्दभत्वंतुसंप्राप्यततोजायेतमानवः ३ ज्येष्ठंपितृसमंवापिभ्रातरंयोऽवमन्यते सोऽपिमृत्युवशंप्राप्यक्रौंचयोनौप्रजायते ४ पद्मपुराणे ॥ अयाज्ययाजकश्चैवयाज्यानांचविवर्जकः विरक्तोविष्णुविद्यासुसप्रेतोजायतेनरः १ ॥ विष्णुविद्या भगवद्गीताभागवताद्याः ॥ सामान्यदक्षिणांलब्ध्वा ग्रहणात्स्येकोविमोहितः नास्तिक्यभावनिरतःसप्रेतोजायतेनरः ॥ २ ॥ स्कान्देयचमत्कारखण्डे योमवेन्मानवःक्षुद्रस्तथापैशुन्यकारकः ब्राह्मणान्यसंसनोकृथामांसाशकश्चयः प्राणिनांहिंसकोनित्यं सप्रेतोजायतेनरः१

प्राप्तहोताहै ४ और पद्मपुराणविषेकहाहै अयाज्येति जो नहि यज्ञकराणेकेलायक उनको यज्ञ करवाणे वाला और जो यज्ञके अधिकारीहैं उनोकात्यागकरणेवाला और जो विष्णुविद्याविषे अर्थात् भगवद्गीतादिम विरक्तहै सो पुरुषप्रेतयोनिकों प्राप्तहोताहै १ सामान्येति जो ब्राह्मण मोहकरिके हुया २ सभको साझी दक्षिणाकोएकलाहि ग्रहण करताहै अर्थात् औरोंको नहिदेता और जो नास्तिकहै अर्थात् ईश्वरकी निंदाकरताहै सोभी प्रेतयोनिकोंप्राप्तहोताहै २ और कहाहै स्कन्दपुराणके चमत्कार खण्डविषे। योमेति जो पुरुषं खोटे काम क्याचोरीआदिकर्ताहै और चुगली कर्ताहै और ब्राह्मणोंके धनविषे उपद्रवोंकर्के वृथाहिक्या देवताकेनिमित्तनहि अपने स्वादवास्ते मांसभक्षणकर्ताहै और नित्यहि प्राणियोंकी हिंसाकर्ताहै सोभी प्रेतयोनिकों प्राप्तहोताहै १

अकृत्वेति और देवकार्य जो बलिवैश्वविधि उसकों और तैसेंहि पितरोंका जो तर्पण उसकोंनहि करके और अपणे संबंधि और नौकरोंकोंनहि देकर जो पुरुष भोजनकर्त्ताहै सोभी प्रेतयोनिकों प्राप्तहोताहै २ परेति जो पुरुषपरस्त्रियोंविषे प्रीतिकर्त्ताहै और दूसरेके धनकोंहरलेताहै और दूसरे की निंदाकर्के प्रसन्नहोताहै सोभी प्रेतयोनिकोंप्राप्तहोताहै ३ कन्यामिति जो पुरुषधनकेलोभकर्के वृद्धकों और नीचकों और खोटाहै रूप जिसका और खोटाहै स्वभाव जिसका उसकों कन्या देताहै सोभी प्रेतयोनिकों प्राप्तहोताहै ४ देवेति जो पुरुष देवता और स्त्री और गुरु इनोंके धनकों और ब्राह्मणों विषे जो श्रेष्ठ उनके धनको लेकर नहि देताहै सोभी प्रेतयोनिकों प्राप्तहो

अकृत्वा देवकार्यं च बलिवैश्वादिकार्यं तथा च पितृतर्पणम् योऽश्नाति भृत्यवर्गेभ्यो दत्वा प्रेतः स जायते २ परदाररतश्चैव परवित्तापहारकः परापवादसंतुष्टः स प्रेतो- ३ कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया कुरूपाय कुशीलाय स प्रेतो- ४ देवस्त्रीगुरुवित्तानि गृहीत्वा यो न यच्छति विशेषाद्ब्राह्मणेन्द्राणां स प्रेतो- ५ शास्त्रकर्ताग्रन्थकर्ता यश्चापि स्यात्षडंगवित् कुलदेशोचितं कर्म्म यस्त्यक्त्वान्यत्समाचरेत् कामाल्लोभादिवा मोहात् स प्रेतो- ६ उच्छिष्टस्य विशेषेण भोजनं च करोति यः अंतरिक्षे मृतो यस्तु स प्रेतो- ७ विषाग्निजलमृत्यूनां तथा चैवात्मघातिनाम् प्रेतत्वं जायते तेन सत्यमेव न संशय इति ८

ताहै ५ शास्त्रेति जो पुरुष शास्त्रोंके करणे वालाहै और ग्रंथोंके करणे वालाहै और षडंगवेदके जानणे वालाभीहै परंतु कामकर्के अथवा लोभकर्के कुल और देशके उचित कर्मकों त्यागकर्के औरों कार्योंकों कर्त्ताहै सोभी प्रेतयोनिकों प्राप्तहोताहै ६ उच्छिष्टेति उच्छिष्ट पदार्थकों जो पुरुष विशेषकर्के भक्षण कर्त्ताहै और जो छतके ऊपर मृत्युकों प्राप्तहोताहै सोभी प्रेतयोनिकों प्राप्तहोताहै ७ विषेति और जो पुरुष विषकर्के मरताहै और जो अग्निविषे मरताहै और जो जलविषे डूबकर मरताहै और जो अपने आपकाहि घात कर्त्ताहै सोभी प्रेतयोनिकों प्राप्तहोताहै इसमें संशय नहिहै ८

और कहाहै गरुडपुराणविषें चंद्रार्केति चंद्र और सूर्यके ग्रहणविषें जो पुरुष भोजन करताहै सो हाथीकी योनिकों प्राप्त होताहै इसमे एहअभिप्रायहै कि ग्रहण विषे गजच्छायाका योगहै इ. सतें तैसाहि फलहोआ १ और जो ब्राह्मण नित्य पंचमहायज्ञोंको नाकरके अन्नकों भक्षणकरताहै सो ग्राम शूकरकी योनिकों प्राप्तहोताहै और कच्चेमांसके भक्षणकरणेवाले व्याघ्रयोनिकों प्राप्त होताहै २ और किहाहै वायु संहिताविषें खरइति और वहुत यज्ञकराणेसें अर्थात् विचारके बिना यज्ञकराणेसें खरयोनिकों प्राप्त होताहै और विना निमंत्रणके भोजनकरणेवाला ब्राह्मण काक योनिकोंप्राप्तहोताहै और जो पुरुष विनापरीक्षाकीते भोजनकरताहै सो निर्जन वनविषें वानरयो निकोंप्राप्तहोताहै १ अविद्यामिति और जो अविद्यापढाताहै अर्थात् जिसके पड़ेसें पुरुष विष

गरुडपुराणे चंद्रार्कग्रहणेभोक्ताजायतेकुंजरोनरः विप्रःपंचमहायज्ञानकृत्वा योऽन्नमश्नुते विड्वराहोभवेन्नित्यंक्रव्याशीव्याघ्रएवच २ वायुसंहितायाम् खरोयैवहुयाजित्वात्काकोनिमंत्रभोजनात् अपरीक्षितभोजीस्यात्वानरोवि जनेवने १ अविद्यांयःप्रयच्छेत्वलीवर्दोभवेत्तुसः२ उमामहेश्वरसंवादे। अग्नि होत्रंभवेद्यस्यनकुर्यात्तस्यरक्षणम् पर्वातिक्रमकारीतुमृगत्वंयातिब्राह्मणः १ वेदोपजीविकाःपापाःस्त्रीलोलास्सततंचये भवंतिचेहकाकाःस्युश्चिरंवि ड्भुजएवच २ पायसंकृसरंचैवहवींषिमधुराणिच अदत्वाचाग्निविप्रेभ्यः प्राशनाद्भुजगोभवेत् ३

यांमें सक होवे सोवलीवर्द अर्थात् वैल वनताहै १ अब और कर्मविपाककहतेहैं जो किहाहै पार्व्वती और शिवजीके संवाद विषें अग्निहोत्रमिति जिसब्राह्मणके गृहाविषें अग्निहोत्र होताहै उसअग्निकी रक्षा न करे और पर्वोविषें न हवनकरे सो ब्राह्मण मृगयोनिकोंप्राप्तहोताहै १ वेदेति और जो वेदकरके जीवका करणे वाले पापीहैं और जो निरंतर स्त्रीयोंविषें आसक्तहैं सो इस संसारविषें चिरकाल विष्टाभक्षणकरणे वाली काकयोनिकों प्राप्तहोतेहैं २ पायसमिति और जो तस्मै और खिचड़ी और हवनवस्तु घृतादि और मिठा इनोंकाभक्षण ब्राह्मण और अग्निकों ना देकर करताहै सो सर्प योनिकों प्राप्तहोताहै ३

नेति और जो पुरुष स्वामीके कार्य्यनुं नहि करतेहैं और खोटेहैं चित्तजिनके और जो वेतन अर्थात् तलबलेतेहैं सो पृथिवीके उपरविचरणे वालियां जो लतां अर्थात् जो वृक्षोंपर नहि चडसकदीयां उनकीयोनिकों प्राप्तहोंतेहैं अथवा भूलता नाम वृक्षविशेषकाहै ४ ॥ अब और कर्म विपाक कहतेहैं जो किहाहै वृद्धगौतमजीने मौल्यादिति जो पुरुष वेदको मूलकरकेवेचताहै ,सो व्याघ्रयोनिकों प्राप्तहोताहै और जो पुरुष विनापढे वेद पढाताहै सोगिद्दडयोनिकों प्राप्तहोताहै १ और जोपुरुषशूद्रतेंविद्यापडताहै सोचांडालयोनिकों प्राप्तहोताहै इसमें असाअभिप्रायहै किजिसस्थानविषें ब्राह्मण वा क्षत्रीपाठकहोवे उसजगाशूद्रसे नहिपढना

---

नसाधयंतिकार्याणिप्रभूणांयेविचेतसः भृत्यावेतनभोक्तारोजायन्तेभूलताहि तेइति ४ अथवृद्धगौतमः । मौल्याद्वेदोपदेष्टाचव्याघ्रोभवतिमानवः जंबुको जायतेजन्तुरननुज्ञातपाठकः १ शूद्रात्पठतिचांडालोब्रह्मद्रव्योपजीविकः अथकीटादियोनिहेतुकोवामनपुराणे ॥ चांडालादंत्यजाद्वापिप्रतिगृह्णा तिदक्षिणाम् याचकोयाजमानस्तुसःस्याद्दुःस्थलकीटकः ॥ १ ॥

चाहिए तिनां विनाशूद्रसेभी पढनेका दोषनाहि और जोब्राह्मणांके द्रव्यकरके ( अर्थात्तिसकें पुछेविना ) जीविकाकरताहै सोभीचांडालयोनिकों प्राप्तहोताहै ॥ अबकीटयोनिमें प्राप्तकरणे वालाजोकर्म्मविपाकसो कहतेहैं जोकहाहै वामनपुराणविषे चांडालादिति जो पुरुष चांडालसें और म्लेच्छसें दक्षिणांको लेताहै और जो तिनसे द्विजहोकर याचनाकरताहै उसजगा याचना नाम दानयाचनाकाहै किसे और निमित्त क्या उपकारार्थ स्थानादिबनानेमें तिनसे भी लैणेकादोष नहि और जो तिनसें यज्ञकरवाताहै सोखोटेस्थलकेविषें अर्थात् मलविषे कीट योनिकों प्राप्तहोताहै १

और किहाहै ब्रह्मपुराणविषे आशेति जोपुरुष किसेकी लगीहोई आशाकोदूरकरताहै सो कृमि योनिको प्राप्तहोताहै और जो पुरुष विश्वासहर्ताहै क्यामै केवल तुम्हाराहिहां ऐसा कहकर जो किसीका धन लेलेताहै सोदुर्मति मीन क्या मछयोनिको प्राप्तहोताहै इसमे ऐसाअभिप्रायहै कि जैसे विश्वासकर्के उसने परधनकोग्रहणकीताहै तैसेहितिसको विश्वासदेकर मत्स्यवेधीमारेगा १ उपेति और जोपुरुष विवाहकेविषे और यज्ञकेविषे और दानकेविषे और, उत्सवोंकेविषे मोह करके विघ्नकोकरताहै सो मृतहुया २ कोडयोंकी योनिकोप्राप्तहोताहै २ और किहाहै गरुड पुराणविषे कूटेति जोपुरुष झूठीउगाहीदेनेवालेपापीहैंसो और विष्टाकेकीडेहोकर फेरसर्पहोतेहैं फेरउसकेपिच्छेपिशाचयोनिको प्राप्तहोतेहैं १ और जोपुरुष गुरुयोंके साथ और मित्रोंकेसाथद्रो

ब्रह्मपुराणे आशाच्छेत्ता तु नरः कृमियोनौ प्रजायते विश्वासहर्ता तु नरो मीनो जायेत दुर्मतिः १ उपस्थितविवाहे तु यज्ञदाने महोत्सवे मोहात्करोति यो विघ्नं स मृतो जायते कृमिः २ गरुडपुराणे । कूटसाक्ष्यप्रदाः पापा अमेध्यकृमय श्चिरं भूत्वा भवंति सर्पास्ते पिशाचास्तदनंतरम् १ गुरुमित्रद्रुह पापाये च स्वामिद्रुहो जनाः द्विजशिष्यद्रुहश्चैव कृतघ्ना नास्तिकास्तथा २ त्यागिनो वां धवानां च त्यागिनः शरणार्थिनाम् अमेध्यकृमयः सर्वे मृगव्याधा भवन्ति च ३ द्विजस्तिकन्याविक्रयाज्जायते मृगः मत्सरी विट्कृमिश्चैव अवज्ञाका र्यथ कृमिरिति ४

हकरतेहैं और अपनेस्वामीकेसाथ और ब्राह्मणोंकेसाथ और शिष्योंकेसाथ द्रोहकरतेहैं और कीतेहोए उपकारको नहि जानतेहैं और ईश्वरकीनिंदाकर्तेहैं २ त्यागिनइति और जो बान्धवों कात्यागकरतेहैं और जोशरणागतहोएहोएपुरुषकोत्यागतेहैं सो अमेध्य क्याविष्टाविषे कृमिहोतेहैं फेरमृगोंके मारणेवाले व्याधहोतेहैं अथवा जो मृगोंके मारणेवालेहैं सो विष्टाके कीडेहोतेहैं ३ द्विजइति और जो ब्राह्मण और क्षत्रीघोडयोंको वेचताहै सो मृगयोनिको प्राप्तहोताहै और जो पुरुष किसेके ऐश्वर्यको देखकर मनमें क्रोधकर्ताहै सो विष्टाका कीडाहोताहै और जो पुरुष अवज्ञा क्या भले पुरुषका अपराधकरताहै सो सामान्यकीडाहोताहै ४

अब जो और कर्म्मविपाक गौतमजीनेकिहाहै तिसकों कहतेहैं अनृतेति और जो पुरुष झूठकहणे वालाहै सो उल्वण क्या खोटेरूपवाला होताहै फेर संलग्नवाक्होताहै अर्थात् थथला होताहै ॥ और स्त्रीकों त्यागणेवाला जलोदररोगकर्केयुक्तहोताहै ॥ इसमें एहअभिप्रायहै कि दुष्ट स्त्रीके त्यागका दोषनहि जेकरनिर्दोषकोत्यागे उसका एहकर्म्मविपाकहै ॥ और झूठीरगाहीदेणे वाला पादरोगकर्के युक्तहोताहै इसीकाअर्थकहतेहैं उच्छेति शिथिलहैं जंघा और चरण जिसके ऐसाहोताहै ॥ और जो पुरुष विवाह विषे विघ्नकरताहै सो कटे गएहैं ओठ जिसके ऐसाहोताहै इसमें एह अभिप्रायहै कि विवाहमे उपहासकरतेहैं और छिन्नोष्ठको उपहासकीहानिहै॥ और जो पुरुष गुरुआदिकोंमुष्टिकर्के प्रहारकीइच्छाकरताहै अर्थात् मुक्कामारणेकों उद्यतहोताहै सोकटेगयेहैं

कर्म्मविपाकविशेषोगौतमीयेयथा ॥ अनृतवागुल्वणोमुहुर्मुहुः संलग्नवाक् ॥ दारत्यागीजलोदरी ॥ कूटसाक्षीश्लीपदीः० उच्छूनजंघाचरणः ॥ विवाहविघ्नकर्त्ताछिन्नोष्ठः० अवगूरणः छिन्नहस्तः० अनृतवाक्पुरुषः उल्वणोविकृतरूपः मुहुरितिसागिलजिव्हश्चभवतीति फलद्वयनिर्देशः ॥ श्लीपदं पादशोफस्तद्वान्कूटसाक्षीभवति उच्छूनेति शिथिलजंघादिकश्चेत्यपिफलद्वयम् अवगूरणः गुर्वादिभ्योमुष्ट्यादिप्रहारायसमुद्यतइत्यर्थः ॥ मातृघ्नोऽन्धः० स्नुषागामीवालवृकणः० क्वचित्तुवातवृकणइतिपाठःतत्रवातेनवृकणंलिंगंयस्यसइत्यर्थः अंतपदलोपीसमासःयद्वावलवृकणःवलंवृकणंयस्यसइत्यर्थः

हाथजिसके ऐसाहोताहै ॥ पूर्वोक्त काहि अर्थमूलविषे स्पष्टकीताहै अनृतेति इहांपाप निर्देशएकहै और फल निर्देश दोहैं और तैसेंहि कूटसाक्षीके स्थानविषे जानणा अव गूरणका अर्थकहतेहैं गुर्वेति और जो पुरुष माताकों हत करताहै सो अन्धाहोताहै इहां माताने पुत्रकाप्रकाश कीया सो तिसके मारणे वाला प्रकाशहीनहोआ एह अभिप्रायहै और पुत्रकीस्त्रीके साथ भोगकर्त्ताहै सोवालवृकणक्या छिन्नलिङ्ग होताहै और किसेजगा वातवृकणा ऐसापाठहै तिसजगावात कर्के कटयागयाहै लिंगजिसका एह अर्थहै इहां अंतपदलोपीसमासहै अथवा वलवृकण ऐसापाठहै कटयागयाहै वलजिसका असाहोताहै क्या नपुंसकहोताहै

चेति और जो पुरुष चुरस्तेमें विष्टा और मूत्रसुटताहै सो मूत्रकृच्छ्रीक्या दखोंतरेरोगकर्के युक्तहोताहै ॥ और जो कन्याके साथभोगकर्त्ताहै सो व्यंडक्या छिन्नवृषणहोताहै ॥ और जो दूसरे पुरुषकी ईर्ष्या क्या द्वेषकर्त्ताहै सो मछरहोताहै ॥ और जो मातापिताके साथ विवादकरताहै सो मिरगी रोगकर्के युक्तहोताहै ॥ और जो अमानतकोचुगताहै सो संततिसें रहित होताहै ॥ और जो रत्नोंको चुगताहै सो अत्यंत दरिद्रीहोताहै ॥ और जो विद्याकोंवेचताहै सो मूर्खहोताहै ॥ और जोवेदकोंवेचताहै सोगेंडाक्यामृगविशेषहोताहै इसमैएहअभिप्रायहै किजैसेवेदकेअंगोकोतिसने आपत्यागियाहैतेसेतिसके अंगोकोंअवश्यकरकेलोकत्यागकरावेंगे और जो वहुतमांगनेवालाहै सो जलविषेंरहणेवाला पक्षीहोताहै ॥ और जो यज्ञकरवाणेके योग्यनाहिहै उसको यज्ञकराताहै सो सूकरहोताहै ॥ और जो पुरुष विनाकहनेसें भोजनखानेंको चलाजाताहै सो काकहोताहै ॥ एह

चतुष्पथेविण्मूत्रविसर्जनेमूत्रकृच्छ्री०कन्यादूषकोव्यण्डः०ईर्ष्यालुर्मशकः०
पित्रोर्विवदमानोऽपस्मारी ० न्यासापहार्यनपत्यः ० रत्नापहार्य्यत्यन्त
दरिद्रः० विद्याविक्रयीपुरुषमृगः पुरुषाकारोमृगः मूढइत्यर्थः ॥ वेदाविक्र
यीद्वीपी ० वहुयाचकोजलप्लवः ० अयाज्ययाजकोवराहः ० अनिमंत्रित
भोजीवायसः ० मिष्टैकभोजीवानरः ० यतस्ततोऽश्नन्मार्जारः० कक्षवन
दहनात् खद्योतः० दारकाचार्य्योमुखविगंधिः०दारकाचार्य्यः कन्यापाठकः
पर्युषितभोजीक्रिमिः ० अदत्तादायीवलीवर्द्दः ० मत्सरीभ्रमरः ०

नारदपुराणका वाक्यहै और पीछे जो कहचुकेहैं सो वायु संहिताकावचनथा इसवास्ते पुनरुक्तिनाहिजाननी ॥ और जोपुरुष मिष्टान्न इकल्लाहि भक्षणकरताहै सो वानर होताहै ॥ और जो सभजगामें भोजनकरताहै सोविल्लाहोताहै ॥ और जो पुरुषकक्षवनकोंजालणेवालाहै सोटिटाणा होताहै ॥ और जोकन्याकों अथवा वालकांकोंविद्यासखालताहै सोदुर्गंधियुक्तमुखवालाहोताहै ॥ इसमैएहअभिप्रायहै कि परमार्थवुद्धिसें वालकोंको न भढावे तददोषहै अन्यथानहि और जो पुरुष वेहाभोजनकरताहै सोजन्मांतरविषें कीडाहोताहै ॥ और जो विनादिते वलादिकरके धनको उठालेताहै सो जन्मांतरविषें वैलहोताहै ॥ और जो दूसरेकी उत्कृष्टताकोनाहि सहारता सो भ्रमरहोताहै ॥

कनीति और छोटे भ्राताका वडे भ्राताके विवाहतें पहिले विवाह होवे तो वडे भ्राताकी परिवित्ति संज्ञा कहीहै ११ और छोटेका नाम परिवेत्ताहै १२ और सो जो है दोनों तिनांको कन्या देणी १३ और तिनांदोओंको विवाह होमादि कर्म्म विषे आर्त्विज्य करणा अर्थात् तिनांते विवाहादि करवाणे १५ और कन्याकी योनि विषे मैथुन के विना अंगुली करके दूषण करणा एह अर्थ इस करके कीनाहै कि मैथुन करके जो कन्या दूषणहै तिसको महापातकमें गणनाहै सो मैथुनभी ( रेतःसेकः ) इत्यादि वचन तें वीर्य्यपात पर्य्यंत जाणना अव कन्यादूषणका और निमित्त कहतेहैं । कि तूं नहिं कन्या तूं मैथुन करणे योग्यहै ऐसे वचनकर्के भी कन्या दूषण होताहै एह पापभी सोम विक्रय और कृतघ्नतादि काभी उपलक्षण है सो प्रायश्चित्त निरूपण विषे कहेंगे १६ वार्द्धुष्य कया प्रतिषिद्ध वृद्धि करके

कनीयसआदौविवाहेज्येष्ठस्यपरिवित्तित्वंभवति ॥ ११ ॥ कनिष्ठस्यपरिवेत्तृत्वंभवति ॥ १२ ॥ तयोः परिवित्तिपरिवेत्रोः कन्यायादानम् ॥ १४ तयोरेवविवाहहोमादियागेष्वार्त्विज्यम् १५ कन्यायामैथुनंविनांगुल्यादिनादूषणं रेतःसेकपर्य्यंतं मैथुनेपुरेतःसेकःकुमारीपुस्वयोनिष्वित्यादिनामहापातकेषुगणनात् त्वंनकन्याकिंतुमैथुनार्हेत्युक्तिर्वाइदंचसोमविक्रयकृतघ्नताद्युपलक्षणं तच्चतत्प्रायश्चित्तनिरूपणावसरेनिरूपयिष्यते १६ वार्द्धुष्यंप्रतिषिद्धवृद्धिजीवनम् मुद्रिकाशतएदानेसवंधकावंधकविभागशः सपादमुद्रिकाधिकंद्विकाधिकंवाप्रतिषिद्धवृद्धिः १७ व्रतलोपनम् ॥ ब्रह्मचारिणःस्त्रीसंगः १८ तडागोद्यानभार्य्यापत्यानांविक्रयः २२ यथाकालमनुपनयनंव्रात्यता तथाचोक्तम् ॥ अतऊर्ध्वंत्रयोप्येतेयथाकालमसंस्कृता इति व्रात्यता असोमयाजित्वमित्यपिकेचित् २३

जीविका करणी प्रतिषिद्ध वृद्धि उसको कहतेहैं कि जो गहणा रक्षणें वालेतें १ । ) सवा रुपैया सैकडेतें अधिक होवें और विना गहणेतें २ ) दोरुपैए सैकडेतें अधिक होवे । जेकर इतनी होवे तद दोष नहिंहै १७ व्रतेति व्रत लोपन उसको कहतेहैं कि ब्रह्मचारीने स्त्रीसंग करणा १८ और तलाओ और वाग और स्त्री और पुत्र इनांका वेचणा २२ यथाकाल कया ब्राह्मणको गर्भस्थितितें अष्टमें ८ वर्षतें लेके सोलमें १६ वर्ष तक और क्षत्रीकोंगर्भतें यारमें ११ वर्ष तें वाईस २२ वर्ष तक और वैश्यको गर्भस्थितितें वारमे १२ वर्षतें लय के चौवी २४ वर्ष पर्य्यंत यज्ञोपवीतका धारण कहाहै । एनां समयां विषे जो ना धारणकरे उस की व्रात्यता कहीहै कि उना समयां तो पीछे ब्राह्मण और क्षत्री और वैश्य तीनांवर्ण संस्कार रहितव्रात्यकहेहैं और कोईकऋषिकहतेहैं किजो सोमयज्ञ नहिंकरणा तिसकानामव्रात्यताहै २३

वान्धवेति वान्धवत्याग क्या पिताका भ्राता और माता का भ्राता इनांते लेकर्के जो संबंधि. यांका त्याग करणा धनके होयां२ भी ना रखणा २४ भृत्येति भृत्याध्यापन क्या मजूरी ले कर्के नौकर होकर शिष्यकों पडाणा २५ और पंडितकों नौकर रखकें पडना इसमें एहवि चारहै कि पडन वाला ऐसा अपने चित्तमें जानताहै कि में मजूरी देकें पडताहां और पंडित जानताहै कि मैं मजूरी लेके पडाताहां इनां दोआं के पठनमें कोई परमार्थ बुद्धि नहिं इसक र्के दोषहै २६ अपेति और अपण्य क्या नहिंवेचणेके योग्य लूण और तिलांते लेकर अन्न वा रस तिनांका वेचणा परंतु इसमें यथायोग्यता कर्के दोष है जैसें ब्राह्मणको रसविक्रय है ऐसे और भी जानणे २७ सर्वेति सुवर्णते आदलेके जो धातु तिनांकीयां जा खाणा उत्प त्तिस्थान तिनां विषे राजा की आज्ञा लेके जो अधिकार होणा २८ महेति महायंत्र जो हैं इ

वान्धवत्यागःवान्धवानांपितृव्यमातुलादीनांत्यागःसतिविभवेऽपरिरक्षणम् २४ भृत्या- प्रतिनियतवेतनग्रहणपूर्वकमध्यापनम् २५ प्रतिनियतवेतन दानपूर्वकमध्ययनम् २६ अपण्यानांलवणतिलादीनांविक्रयः २७ सर्वा करेषुसुवर्णाद्युत्पत्तिस्थानेषुराजाज्ञयाअधिकारःस्वामित्वं २८ महेतिमहतां यंत्राणांतिलेक्षुपीडाकराणांप्रवर्त्तनं हिंस्रयंत्रप्रवर्त्तनमितियाज्ञवल्कयीयपा ठःप्रवाहप्रतिवन्धहेतूनांसेतुवंधादीनांप्रवर्त्तनम् २९ ओपधीनांजातिमात्रा दीनांहिंसाहिंसनंज्ञानपूर्वकाभ्यासविषयमेतत्प्रायश्चित्तगौरवात्। यत्तूक्त ष्टजानामोषधीनामित्यादिनावक्ष्यतितत्सकृद्धिंसायांवेदितव्यं प्रायश्चित्त लाघवात् ३० स्त्रीतिभार्य्यादिस्त्रीणांवेश्यात्वंकृत्वातल्लब्धधनेनोपजीवनम्। स्त्रीधनेनोपजीवनंवा ३१

क्षुयंत्र और तिलयंत्र इनमें आदलेकरपीडाके स्थान तिनांका स्थापन करणा ॥ इसी कर्के याज्ञ वल्क्य जीने (हिंस्रयंत्र प्रवर्त्तनं) ऐसा पाठ किहाहै इसमें भी ओहि अर्थहै २९ ओषधीनामि ति जो जातिमात्र ओषधिआदि क्या जो अपणे स्थानपर स्थित हैं तिनांका मूलतों लयके पुट्ट णा परंतु जाणकर्के और बहुतवार कर्के एह इनांका प्रायश्चित्तहै क्योंकि वडा होणें तें॥ और इनांका प्रायश्चित आगेभी आवेगा सो थोडाहै उह एकवार हिंसा करणेमें जाणणा ॥ इस वि षें याज्ञवाल्क्य जीने (स्त्रीहिंसौषधिजीवनं) ऐसापाठकिहाहै इसका अर्थ एहहै कि स्त्रीकर्के और हिंसाकर्के और ओषधिकर्के क्या वशीकरण कर्के जीवनहै सो उपपातक जानणा ३० स्त्रीति अपणी स्त्रीकों वेश्या वनायके जो धनका ग्रहण करणा तिसकर्के जीविका करणी वा स्त्रीके धन कर्के जीविका करणी ३१

अभीति और बाजके यज्ञकर्के अपराधतें विनामारणा ३२ मूलेति मंत्र वा औषधी कर्के वश करणा ३३ इन्धनेति गिल्लयां वृक्षांका छेदणा तिसकाप्रयोजन कहतेहैं पाकेति भोजन का जो पकाणा एहहीहै प्रयोजन जिसका प्रयोजन दो प्रकारका है दृष्ट और श्रुत केवल देहके ही सुख वास्ते जो प्रयोजनहै सो दृष्टहै जोपरलोकके सुख वास्तेहै सोश्रुतहै ३४ आत्मेति देवता पितरांके निमित्तों विना जो आपणे वास्तेही अन्नसिद्ध करणा ३५ निन्दीति निंदित जो अन्नहै वा थोम इसतें आद लेकर्के इनांका एकवार इच्छातें विना भक्षण करणा सो उपपात कर्म किहाहै जो इच्छाकर्के इनांका वहुतवार भक्षण करणाहै सो ( गर्हितान्नाद्ययोर्जग्धिः ) इसवचनते सुरापानके बराबरहोणे कर्के अनुपातकमे किहाहै इसमेविशेष कहतेहैं कि जो योगीश्वरनें किहाहै (निन्दितार्थोपजीवनमिति ) इसका अर्थ एहहै राजाकर्के दूरकीती जो उपजी

अभीति श्येनयज्ञेनानपराद्धस्यमारणम् ३२ मूलेतिमंत्रौषधिनावशीकरणम् ३३ इन्धेति अशुष्काणामार्द्राणांवृक्षाणांपाकादिदृष्टप्रयोजनार्थमात्रमवपातनंछेदनम् ३४ आत्मेति स्वस्थस्यदेवपित्राद्युद्देशंविना पाकाद्यनुष्ठानम् ३५ निंदितेति निन्दितान्नस्यलशुनादेःसकृदनिच्छयाभक्षणम् इच्छापूर्वकाभ्यासभक्षणेतुगर्हितान्नाद्ययोर्जग्धिरित्यादिनासुरापानसमीयम् निन्दितार्थोपजीवनमितियोगीश्वरोक्तेऽराजस्थापितार्थोपजीवनमित्यर्थः३६अनेति सत्यधिकारेऽग्न्यनाधानम्। अत्रमिताक्षरा ननुज्योतिष्टोमादिकामश्रुतयः स्वांगभूताग्निनिष्पत्त्यर्थमाधानंप्रयुंजतइतिमीमांसकप्रसिद्धिः अतश्चयस्याग्निभिःप्रयोजनंतस्यतदुपायभूताधानेप्रवृत्तिर्व्रीह्यार्थिनइवधनार्जने यस्यपुनरग्निभिःप्रयोजनंनास्तितस्याप्रवृत्तिरितिकथमनाहिताग्निताद्रोषउच्यते

विका तिसोकर्के जो उपजीविकाकरताहै सो निंदितधनोपजीवीहै जैसें राजानें हटाया जो जूआ और तिसते ही जो उपजीविकाकरताहै सो उपपातकीहै ३६ अनेति अग्निके अधिकार के होयां होयां जो अग्निका ना स्थापन करणा इस विषे मिताक्षराका वाक्यहै ( प्रश्ण ) नन्विति ज्योतिष्टोमादियज्ञके विधान करणे वालीयां जो कामश्रुतियां हैं सो अपणे अधिकार युक्त अग्निकी सिद्धिवास्ते अग्निके आधाननूं कहतीयांहैं एह मीमांसकांके मतविषे प्रसिद्धहै इसकारणें जिसकों अग्नियां कर्के प्रयोजनहै तिसकों तिनां अग्नियांके उपायभूत स्थापनविषे प्रवृत्ति कहीहै जैसें चांवलांके इकठेकरणे वालेकों धनके इकठे करण विषे प्रयोजनहै और जिसकों अग्नियां कर्के प्रयोजन कुछ नहीं तिसकी अग्निके आधानविषे प्रवृत्ति नहिहै एहप्रसिद्ध लोकवाणीभी है कैसे अनाहिताग्नि दोष किहाहै(उत्तर)

अस्मेति इसीवचनतें अग्निस्थापनको आवश्यक प्रतीतहुंदाहै क्योंकि नित्य कर्मकोयां कहण वालियांजो श्रुतियां सो प्रयोजन कोलयके स्थितहैन विशेषतें रहित अग्नि आधानकीयां प्रयो जकहैन एहस्मृतिकारांका अभिप्रायहै इसकर्के अनाहिताग्नि उपपातकयथार्थहै ॥ इसमै बचन भीहै( वसंतेऽग्नीनाधीत ) इस बाक्य कर्के सब पुरुष अग्निकाआधान करण ऐसीआज्ञाहै ३७ स्तेयमिति सुवर्णतेंविना होर सारधनका चुराणा उपपातकहै असारधनका चुराणा अगे कहांगेंधान्यकुप्यइत्यादिकर्के ३८ ऋणेति देवता औरपितर और ऋषिइनांके त्रय जो ऋणहैं तिनांकर्के ऋणवालापुरुषहै तिनां ऋणोंका ना दूरकरणा उपपातकहै चपुनःग्रहणकीतेहोए सुवर्णा दीका नादेणा उपपातकहै ऋणदूरकरणे वास्ते श्रुतिप्रमाणदेतेहैं ऋणैस्त्रिभिरिति ३९ असदिति श्रुति स्मृतितें विरुद्धशास्त्र जो आधुनिक रचेहोए विरुद्धमतवालयोंकेशास्त्र तिनोकापडना अथवा खोटा शास्त्र जो चार्वाकादि क्या प्रत्यक्ष प्रमाणादिबोधक तिसका पडना ४० कौशीति नृत्य

अस्मादेवाधानस्यावश्यकत्ववचनान्नित्यश्रुतयोपिसाधिकाराश्चाविशेषादा धानस्यप्रयोजकाइतिस्मृतिकाराणामभिप्रायोलक्ष्यतइत्यदोषः ३७ स्तेयम् सुवर्णादन्यस्यसारद्रव्यस्यापहरणम् असारापहरणंवक्ष्यते ३८ ऋणानामिति ऋणैस्त्रिभिर्ऋणवान्नरोजायतेतदनपकरणम् गृहीतस्यसुवर्णादेरप्रदानंच ३९ असदिति श्रुतिस्मृतिविरुद्धशास्त्राशिक्षणम्असच्छास्त्रस्यचार्वाकादेरधिगमोवा ४० कौशीति नृत्यगीतवादित्रादेरुपसेवनम् याज्ञवल्क्येतुव्यसनान्यात्मविक्रयइत्यनेनकौशील्व्यंसंगृहीतम् ४१ धान्येति धान्यंव्रीह्यादिकुप्यमसारंत्रपुसीसादिपशवोगवादयःतेषामपहरणम् ४४ मद्येतिद्विजातीनांपीतमद्यायाःस्त्रियागमनम् ४५ स्त्रीतिस्त्रिशूद्रवैश्यक्षत्रियहननम् ४९ नास्तीतिअदृष्टार्थकर्म्माभावबुद्धिः नास्तिपरलोक इत्याद्यभिनिवेशोवा ५०इमानिमनूक्तानियोगीश्वरेणविमानिस्वीकृत्यषड धिकान्यपिपठितानियथाशूद्रप्रेष्यंहीनसख्यंहीनयोनिनिषेवणम् तथैवाना श्रमेवासःपरान्नपरिपुष्टता ॥ शूद्रसेवनम् १ हीनेपुमैत्रीकरणम् २ अनूढ सवर्णदारस्यकेवलंहीनवर्णदारोपसेवनम् साधारणस्त्रीसंभोगश्चेति ॥ ३

और गीत और वादित्रआदिकोंका ग्रहण करणा जो वीणादि और मुरजादि और वंशादि आर कांस्यतालादिहें इनांका इकठा नाम वादित्रहै ॥ याज्ञवल्क्यजीने(व्यसनान्यात्मविक्रयः) इस कर्के कौशीलव्यकाग्रहणकीताहै ४१ धान्येति व्रीहिआदि और कुप्य क्या असारवस्तुलाषसिका आदि पशु गोआदि इनांकाचुराणा ४४ मद्येति ब्राह्मण क्षत्रिय वैश्यइनांनेजिसने मदिरा पीताहो आहै तिसस्त्रीकेसाथ मैथुन करणा ४५ और स्त्री शूद्र वैश्य क्षत्रीका मारणा ४९ नास्तीति क र्मोंका जो फल परलोक विषे होणा तिसविषे अभावबुद्धि क्या कोई फल नहि एहबुद्धि वा स्व र्गादि कोई नहि एह निश्चय होणा ५० एह पंजाहउपपातक मनुजीने कहेहैं योगीश्वरनें इ नांको अंगीकार कर्के छेअधिककहेहैं शूद्रप्रेष्यमित्यादि इनांकाअर्थ किहा जाताहै शूद्रकीसे वाकरणी १ हीनजाति विषे मैत्री करणी २ अपने तुल्य जाति वाली स्त्रीतों विना केवल ही नजाति वाली स्त्रीके साथ विवाह करणा चपुनः साधारण स्त्रीविषे संभोग करणा ३

सत्येति अधिकारके होयां २ गृहस्थादि आश्रमका ना ग्रहण करणा अथवा ब्रह्मचारि गृहस्थादि क्रम कर्के आश्रमका नहिग्रहणकरणा ४ परेति दूसरेके पकाए होए अन्न विषे प्रीति करणी ३ इसमें एह अभिप्रायहै कि जो कोई अन्न पकावे तिसका विना विवेकके भोजन करणा ५ व्रतेति व्रतलोपभी इसविषे अधिकहै इसके समाधानमें तिसजगा दूसरे वार जो व्रतलोपका ग्रहणहै उसमें मिताक्षराकारजी ऐसा कहतेहैं कि किसेने ऐसी प्रतिज्ञा कीत्ती कि ठाकुरजी के दर्शनविना मै भोजन नहीं करांगा एह भी इक व्रत होया सो जद नाहीं कीता तद व्रतलोप होया इसके अर्थ दूसरा व्रतलोपहै ६ इनां कर्के छपुंजा ५६ इपपातकांकेभेद दखाएहैं और

सत्यधिकारेऽगृहीताश्रमत्वम् ४ परपाकरतित्वम् ५ व्रतलोपोऽप्यन्यो धिकस्तत्र मिताक्षरा पुनर्व्रतलोपग्रहणमशिष्टाप्रतिषिद्धेष्वपि श्रीहरिचर णकमलप्रेक्षणात्प्राक्तांबूलादिकं न भक्षयामीत्येवंरूपेषुप्राप्त्यर्थंनतुस्नातक व्रतप्राप्त्यर्थम् तत्रस्नातकव्रतलोपे प्रायश्चित्तंचाभोजनमिति मनुना लघु प्रायश्चित्तत्वस्यप्रतिपादितत्वात् ६ एभिः षट्पंचाशद्भेदाउपपातकाना मितिप्रदर्शितंभवति । प्रायश्चित्तेंदुशेखरे । भार्य्यात्यागःअसत्प्रतिग्रहोपि पठितोऽत्र शूलपाणिनाऽयाज्यसंयाज्येत्यनेनवासत्प्रतिग्रहाध्यापने उ पलक्षणविधया संगृहीते सुतस्यचेत्यत्र चकाराद्भार्य्यात्यागोपिसंगृहीतः किञ्च याज्ञवल्क्येन मिथ्याभिशंसी मिथ्याभिशस्तश्च प्रायश्चित्तेन शो धितोततश्चमतांतरे षष्टिभेदाअवगंतव्याः ६० अथैषांक्रमेणप्रायश्चित्तानि तत्रादौगोवधप्रायश्चित्तम । मनुः। उपपातकसंयुक्तोगोघ्नोमासंयवान्पिवेत् कृतवापोवसेद्गोष्ठेचर्मणातेनसंवृतः १ चतुर्थकालमश्नीयादक्षारलवणंमि तम् गोमूत्रेणचरेत्स्नानंद्वौमासौनियतेंद्रियः २ दिवानुगच्छेद्गास्तास्तुति ष्ठन्नूर्ध्वंरजःपिवेत् शुश्रूषित्वानमस्कृत्यरात्रौवीरासनंवसेत् ३ तिष्ठंतीष्वनु तिष्ठेत्तुव्रजंतीष्वप्यनुव्रजेत् आसीनासुतथासीनोनियतोवीतमत्सरः ४

प्रायश्चित्तेंदुशेखर विषे भार्य्यात्याग और असत्प्रतिग्रहभी किहाहै और शूलपाणिजीने अयाज्य संयाज्यविषे उपलक्षणविधिकर्के असत्प्रतिग्रह और असत्कोंक्या शूद्रादिकों पढानाभीसंग्रह कीताहै और सुतस्यच इस चकारते भार्य्यात्यागभी संग्रहकीताहै किञ्चेति याज्ञवल्क्यजीने मिथ्या भिशंसी क्या तैनें मेरी वस्तु चुराई है ऐसे झूठ कहने वाला उसकोभीप्रायश्चित्तहै और जिसको किहाहै उसकोभी जन्मांतरके दोषकी संभावना तें प्रायश्चित्त दखायाहै ॥ इस कर्के इनां दोआं कोमिलाकर सठ ६० भेद उपपातकां दे निर्णय होएहैं ॥

पीछे कहे जो उपपातक अब उनोंका क्रमकर्के प्रायश्चित्त कथन करतेहां तिसके पहिले गोवधका प्रायश्चित्तहै इसमें मूलकी व्याख्याकोहि व्याख्याहै श्लोकोंकीनहि तिस विषे मनुजीका वाक्यहै ॥ उपेति इसश्लोकतें लेकर अष्ठां ८ श्लोकांतक कुलकहै अनेन विधिना इसश्लोकपर्य्यंत उपपातक एह पद संज्ञाके दखाणे वास्तेहैं जिसने गो घात कीताहै सो पुरुष शिथिल क्या पतला जो यवांदा काढा तिसको प्रथम एक मास क्या महीनापीवे इसमें गोघ्न शब्दका अर्थ शूलपाणिजीने दखायाहै ( प्रश्न ) गोघाती पदसे उपपातकीपदका अर्थ सिद्धहै फेर ( उपपातक संयुक्तः ) ऐसा क्यों किहा(उत्तर)जो यज्ञविषे स्थितगोहै तिसके वधकरणे वाला उपपातकी नहिंहै किंतु अनुपातकीहै इसकर्के उपपातकपद किहाहै एहि स्पष्टकर्के मूलमें लिखयाहै ॥ ऐसा गोघाती दाढी और शिरको मुनायके तिसगौके

आतुरामभिशस्तांवाचौरव्याघ्रादिभिर्भयैःपतितांपंकलग्नांवासर्वोपायैर्विमोचयेत् ५ उष्णेवर्षतिशीतेवामारुतेवातिवाभृशम् नकुर्वीतात्मनस्त्राणंगोरकृत्वातुशक्तितः ६ आत्मनोयदिवान्येषांगृहेक्षेत्रेथवाखले भक्षयंतींनकथयेत्पिबंतंचैववत्सकम् ७ अनेनविधिनायस्तुगोघ्नोगामनुगच्छति सगोहत्याकृतंपापंत्रिभिर्मासैर्व्यपोहति ८ उपेत्यष्टभिःकुलकम् । अनेनविधिनायस्त्वितियावत् । गोघ्नोगोघातीशिथिलयवागूरूपेण प्रथममासं यवान्पिबेत् उपपातकेतिसंज्ञाप्रदर्शनार्थम् उपपातकसंयुक्तोगोघ्नोनतुयागादिविहितगोवधकर्त्तापीतिशूलपाणिः । कृतवापःसशिखंमुंडितशिराःलूनश्मश्रुःतेनहतगोचर्मणाछादितदेहोमासत्रयंयावद्गोष्ठेवसेत् १ किंच । नियतेंद्रियः सन्गोमूत्रेणस्नानमाचरेत् अक्षारलवणंकृत्रिमलवणवर्जितं हविष्यान्नंचतुर्थकालं एकाहंभुक्त्वाद्वितीयेहानिसायंद्वितीयतृतीयमासंयावदश्नीयात् २ दिवाप्रातस्तागाअनुगच्छेत् खुरप्रहारादूर्ध्वमुत्थितंरजस्तिष्ठन्सन्नास्वादयेत् शुश्रूषित्वाकंडूयनादिनातागाःपरिचर्य्यप्रणम्यच रात्रौभित्त्यादिकमनुवेष्ट्यउपविष्ट आसीत अहर्निशिष्ठेद्रात्रावासीतेतिस्मृत्यंतरात् । उत्थितस्तुदिवातिष्ठेदुपविष्टस्तथानिशि एतद्वीरासनंनामसर्वकल्मषनाशनमिति १

चर्मको ऊपर लयके त्रय ३ महीनें तकगौवांकीशालाविषे निवासकरे १ किंचेति इन्द्रियांको रोकके स्थितरहे औरगौके मूत्रकर्के स्नानकरे और कृत्रिम लूणतें रहित हविष्यान्नको चौथे पहर एकदिन भक्षणकरे और दूसरे दिन संध्याकाल विषे भक्षणकरे इसीतरां दूसरा तीसरा महीना व्यतीत करे २ दिवेति दिने प्रातः काल विषे गौवांको चारदा होया पीछे जावे और खुरां कर्के उठी जो धूड तिसको स्थित होके स्वाद लेवे और गौवांके खुरका पूजन करे और नमस्कारकरे और रात्रि विषे गौवांकी शालाविषे भित्तको चढाकर स्थित होवे ॥ दिनविषे खडारहे और रात्रिविषे बैठ कर निवास करे एह और स्मृतिविषे किहाहै ॥ उत्थितइति उठकर दिनें स्थित होवे रात्रिविषे बैठ जावे इसका नाम वीरासनहै जो संपूर्ण पापां के नाश करणेवालाहै १

तथेति गौवांके उठयां होयां पीछे उठे और जद वनविषें फिरें तां पीछे पीछे वनविषें फिरे तिनां गौवांके बैठयां होयां पीछे आप बैठे और इन्द्रियोंकों जितकर्के स्थित होवे इसमेंभी छलतें रहित और क्रोधतें रहित होया होया ४ किंचेति और जो रोग कर्के युक्त गौ है अथवा चौर कर्के और व्याघ्रादिभयकर्के युक्त है और जो डिगीहै और जो चिकड विषें खुब्बी है तिनां दुःखां तेंगौवांकी जैसें समर्थाहोवे तैसें हि उपायकर्के रक्षा करे ५ और गौवोंकीसेवाका प्रकार कहतेहें तथेति तिस प्रकार सूर्य के तप्तहोयां होयां और वर्षा विषें और शीतविषें और अतिशयकर्के चलती जो वायुहै तिस विषें प्रथम गौवांकी रक्षा कर्के पीछे अपणी रक्षा करे ६ तैसेंहि अ पणे तें होरणांके घरविषें वा क्षेत्रविषें वा खलवाडे विषें क्षेत्र आदिकों भक्षणकरतीकों किसें ताईं

तथा उत्थितासुगोषुपश्चादुत्तिष्ठेत् वनादौपरिभ्रमंतीषुपश्चात्परिभ्रमेत् तासूपविष्टासूपविशेत् नियतोजितेंद्रियः वीतमत्सरोविगतक्रोधः ४ किंच आतुरांव्याधितांवाचौरव्याघ्रादिभयहेतुभिरभिशस्तामाक्रांतांपतितांकर्दम मग्नांवा यथाशक्तिसर्वोपायैर्विमोचयेत् ५ तथाउष्णेसूर्य्येतपति मेघेच वर्षति वाशीतेजातेसतिवाऽत्यर्थंवायौवातिसति यथाशक्ति गोरक्षामकृत्वा त्मरक्षांनकुर्यात् ६ तथाआत्मनोऽन्येषांवागृहेक्षेत्रे खलेसस्यादिभक्षयन्तींन कथयेत् क्षीरंपिबंतंवत्सकंच अनेनविधिना पूर्वोक्तप्रकारेण यो गोघ्नो गाः परि चरति सगोहत्याकृतं पापंत्रिभिर्मासैर्व्यपोहति अपनुदति ७।८ व्रतांतरद्वयमाहसएव वृषभैकादशकागाश्चदद्यात्सुचरितव्रतः अविद्यमा नेसर्वस्वंवेदविद्भ्योनिवेदयेत् १ वृषभएकादशोयासांतागाःसुचरितव्रतः सम्यक्कृत पूर्वमासोक्तप्रायश्चित्तोदद्यादितिद्वितीयम्

न कहे और दुग्ध पींदा जो वच्छाहै तांभी किसेको न कहे और नआप हटाए ७ इस विधि कर्के पिछले प्रकार कर्के गौवांकी सेवा करता होया सो पुरुष गोहत्याकरणेसें प्राप्त होया जो पाप तिस कों तीन ३ महीनें कर्के दूर कर्ताहै ८ एह गोघ्न इत्यादि कर्के कहे होए श्लोकांकाहीअर्थ कीताहै अब मनुजी और दो व्रत कहतेहैं वृषेति सो उपपातकी वृषहै यारवां ११ जिनां विषें ऐसीयां दश १० गौवां को दान करे कैसा है उपपातकी भलीप्रकार प्रथमकीताहै पूर्वमासोक्त प्रायश्चित्त जिसनें एह दूसरा व्रत किहाहै ॥ १॥

अब होर व्रतकहतेहैं तावेति तितने धनकें ना होयांहोयां जितना अपणे पास धन है सो संपूर्ण, वेदके जानणे वाले जो ब्राह्मण हैं तिनके ताई दे देवे इस विषे भी पूर्वमासोक व्रतकों पहिलेकरलेवे असाजानणा एह तीसरा व्रत किहाहै ३ एह जो त्रय व्रत कहेहैं सो याज्ञवल्क्य कर्के कहे होए जो व्रत मास प्राजापत्य १ और मासपंचगव्याशन २ और वृषहै यारवां जिनां विषे ऐसीयां दस्सां गौवांका दान और साथ त्रिरात्रोपवासरूप व्रत त्रय १ इनां कर्के बराबर हैं एह मिताक्षराकार का वाक्य हैजिसकाएहव्याख्यानहै तिसको अब कथन करतेहैं पंचेति जो पुरुष गोहत्या करणेवाला है सो एक महीना इंद्रियांको रोकके स्थिर होवे

तावतिधनेऽविद्यमानेवेदविद्भ्यः सर्वस्वंदद्यादितितृतीयम्अत्रापिपूर्वमासोक्तव्रतानुवृत्तिः ३ एतच्चव्रतत्रितयंयाज्ञवल्कयीयमासप्राजापत्यमासपंचगव्याशनं ऋषभैकादशगोदानयुक्तत्रिरात्रोपवासरूपव्रतत्रितयेनसमानामितिमिताक्षरा तद्यथा पंचगव्यंपिवेद्गोघ्नोमासमासीतसंयतः गोष्ठेशयोगोनुगामी गोप्रदानेनशुद्ध्यति १ कृच्छ्रंचैवातिकृच्छ्रंचचरेद्वापिसमाहितः दद्यात्त्रिरात्रंचोपोष्यवृषभैकादशास्तुगाः २ गांहंतीतिगोघ्नःअसौसमाहितआसीत किंकुर्वन्पंचतानिगव्यानिगोमूत्रगोमयक्षीरदधिघृतानि यथाविधिमिलितानि मिश्रितानिपिवन् आहारांतरपरित्यागेन भोजनकार्यंतस्यविधानात् तथा गोष्ठेशयः प्राप्तशयनानुवादेन गोष्ठविधानेनदिनेशयननिषेधाद्रात्रौ गोघ्नो गोशालायांशयानः गोनुगामीगवानुगमनव्रतीव्रतेणिनिः अत्रयासांगवांसन्निधौगोष्ठेशेते वनमनुगच्छंतीःप्रातस्ताएवानुगच्छेत् अनुगमनवचनात्

और गो मूत्र और गोमय क्या गोआ और दुग्ध और दधि और घृत एह जो पंचगव्य है इसकोविधिके साथ रलाकर पीवे और कुछ ना भक्षण करे इसतरां एक महीना स्थित रहे जद और तिसीप्रकार गोष्ठेशयः इसवाक्य कर्के एह अभिप्राय हैं कि दिनविषे शयन का निषेध होणेतें रात्रिको गौशाला विषे शयन करे और गोनुगामी क्या गौआंके पीछे वन विषे जावे व्रत कर्के युक्त होया इसमेंभी असाजानणा कि जिनांगौवांके समीप विषे शयन करे सोगौआं वन विषे जाण तां प्रातः काल विषे पीछे जावै जो किहाहै अनुगच्छेत् इस वाक्य कर्के

असी प्रतीति होइहै कि गौआं आपणी इच्छा करके वनकों जाण तां पीछे जावे जद गौआं स्थित होण तां आपवी स्थित होवें क्योंकि तिसमें अनुगमनका संभव नहिहे १ और जद सायं काल विषे गौआं शयन करण वाले स्थान कों प्राप्त होण तां आपभी प्रात होवे और जेकर पीछे गौशाला विषे प्राप्त होणेकी सामर्थ्य न होवे तां वाहर स्थित होवे दरवाजे कों वंदकर्के एह भी इसमें अभिप्राय जानणा ऐसें हो महीने पर्यंन्त करे और महीने के पीछे एक गोदानकरे ऐसें अनुष्ठान करणे कर्के गौ हत्या पापतें शुद्धिको प्राप्त होताहै इह इक व्रत किहाहै यद्वा एक महीना गौशाला विषे शयनकों करता होया और गौआं के पीछे वनविषे फिरता

यदातागच्छंतितदाऽनुगच्छेत् यदात्वनुतिष्ठंत्यासतेवा तदास्वयमपि तिष्ठेदासीतवातत्रानुगमनस्याशक्यत्वादित्यर्थः १ तस्मादेवयदासायंगोष्ठेप्रविशेयुस्तदा ताभिःसह स्वयमपितदनुप्रविशेदित्यपिज्ञायते मासांते गोप्रदानेनएकांगांदत्वाऽनुष्ठानेनगोहत्यायाः शुद्ध्यतीत्येकंव्रतम मासंगोष्ठेशयोगोऽनुगामीतिपदत्रयमनुवर्त्त्य यद्वा मासंगोष्ठेशयोगोनुगामीसन् कृच्छ्रप्राजापत्यंनिरंतरंसमाहितमनोवृत्तिश्चरेदित्यपरम् ॐ जावालेनापि मासंप्राजापत्यस्यपृथक्प्रायश्चित्तत्वमुक्तम् यथाप्राजापत्यंचरेन्मासंगोहंताचेदकामतः गोहितोगोनुगामीस्याद्गोप्रदानेनशुद्ध्यतीद्वितीयम् एवमेवातिकृच्छ्रंचरेदितितृतीयम् अथवात्रिरात्रमुपोष्य

होया और मनकीयां वासनाकों जित कर्के कृच्छ्र नाम जो प्राजापत्य व्रत है तिसकों निरंतरकरें एह और प्रायश्चित्त किहाहै मतांतरदिखातेहैं जावालि ऋषिनें भी एक महीना प्राजापत्यकों करे एह पृथक् प्रायश्चित्त किहाहै तिसका वचन दिखाईदाहै यथेति एक महीना प्राजापत्यकों करे जेकर इच्छातें विना गौको मारे और गौंआं की सेवाकों करदा होया और गौआं के अनुसार पीछे वन विषे जांदा होया नित्य काल ऐसें ही स्थित होकर गौका दानकरे तां गो हत्या पापतें शुद्धिकों प्राप्तहोताहै एहदूसरा व्रत किहाहै और इसी प्रकार अतिकृच्छ्र व्रतकों करे एह तीसरा व्रत है अथवा त्रय दिनरात्र उपवास व्रतकों कर्के

वृषहै याग्वा जिनांविषैऐसीयां गौआंको देवे अर्थात् दश गोआं एक वैल साथदान करे एह चौथा व्रत किहाहै ४ इसविषैजो चौथाव्रत किहाहै सो मनुजीके वाक्य कर्के किहा जो पीछे सर्वस्वदान अर्थात् संपूर्ण धनकादेणा तिसके तुल्य है तिसका विषय दिखातेहैं अकामेति जो जातिमात्र ब्राह्मणहै संध्यावंदनादि कर्म तों रहित तिसकी जो सौशील्यादि गुणोंते रहित गौ तिसके इच्छातें विना वध विषेएह प्रायश्चित्त देखणे योग्यहै और जोब्राह्मण संध्यावन्दनादिकर्मोंकर्केयुक्त है तिसकी जो गुणों कर्के युक्त गौं तिसके वध विषे द्विगुण क्या दूणा प्रायश्चित्त किहाहै और क्षत्रिय संवन्धीजो गुणों कर्के युक्त गौहै तिसके वध विषे पाप के दूरकरणवास्ते महीना पर्यंत पंचगव्यकों भक्षण करे इस मनुजीके वाक्यकर्के किहा होआ जो द्वितीय प्रायश्चित्त तिसके समहै और वैश्यसंबंधी जो गुणों कर्के युक्त गौहै तिसके मारणे विषे एक महीना अतिकृच्छ्र व्रतके करणे सें शुद्ध होताहै

वृषभएकादशोयासांतागादद्यादितिचतुर्थम् अत्रचतुर्थंमानवीयसर्वस्वदानात्मकतुल्यम् अकामकृतेज्ञातिमात्रब्राह्मणस्वामिकगोमात्रवधेद्रष्टव्यं विशिष्टस्वामिकायाविशिष्टगुणवत्याश्चवधेद्विगुणंकल्प्यम् क्षत्रियसंबंधिन्यास्तादृशायागोर्वधेमासपंचगव्याशित्वरूपं मानवीयद्वितीयसमम् वैश्यसंबंधिन्यास्तुताहग्विधेव्यापादने मासातिकृच्छ्रंकुर्यात् शूद्रस्वामिकगोहत्यायांमासप्राजापत्यरूपंमानवीयप्रथमसमम् अत्रपूर्वपूर्वतउत्तरोत्तरस्यलघीयस्त्वंप्रत्याम्नायविधया विज्ञानेश्वरेणोक्तं ततएवावधार्य्यम् ब्राह्मणसंबन्धिद्रव्यस्यगुरुत्वम् देवब्राह्मणराज्ञांतुविज्ञेयंद्रव्यमुत्तममिति नारदोक्तवचनाद्बोध्यम् एतदेवव्रतचतुष्टयम् साक्षात्कर्त्रनुग्राहकप्रयोजकानुमंतृपुगुरुलघुभावतारतम्यापेक्षयापूर्वविषयेप्रयोजनीयम्

और शूद्रकी गौके मारणें विषे एकमहीना प्राजापत्य व्रत कों करे एह मनुजीने किहा जो प्रथम व्रत तिसके तुल्यहै इस विषे ब्राह्मण क्षत्री वैश्य शूद्र इनांको प्रायश्चित्त क्रम कर्के थोडा थोडा किहाहै एह निर्णय पीछे भी आयाहै फेर प्रसंगते किहा है प्रत्याम्नाय क्या परंपरासंप्रदायविधि कर्के अथवा विज्ञानेश्वरजीने कहा है इसकाविशेष उसी जगाते धारणें योग्यहै इसमे बीज एह हैकि ब्राह्मण संबंधि वस्तु सबतें श्रेष्ठ कहीहै सो नारदजीके वाक्य कर्के जानणे योग्य हैं तिसवचनकोंदिखातेहैं देवेति क्या देवता ब्राह्मण राजा एनांका द्रव्य जो है सोउत्तम किहाहै परंतु एह जो गोवधके चार व्रतहं सोंजोंसाक्षात् वधकरणेवालाहै और जोवधकर्के आपा पुरुष तिसका रक्षाकरणवालाऔर जों प्रेरणाकरणवाला और जोवधकरणे विषे युक्तहै तिसको प्रेरणेवाला इनांको गुरुलघुभावकर्के प्रायश्चित्त देणेयोग्यहै पाहिले को संपूर्ण दूसरे को पाद तीसरेको आधा चौथेको एकपाद इस क्रम कर्के जानणा

इसविषे धर्म्मराज जपणे योग्य जो गोमती विद्या तिसको कहताहै गोमतीमिति जोमें धर्म्मरा ज गोमती विद्याको कहताहां तिसको मेरेतें श्रवण करो हेब्राह्मणो मनको एकाग्र करके १ गौआं नित्य सुरभिआं हैं अर्थात् यशवालियांहैण और गुग्गुल धूपकी गंधवालियांहैं अर्थात् तिनके दुग्धादिसें देवताके प्रसन्न करणे वाला गुग्गुलगन्धके तुल्य गंधआउताहै और जीवांकी प्रतिष्ठारूप हैं क्याजिसके घर गौआं होण उसकी अभ्यागतादिके सत्कारसे लोक प्रतिष्ठा कर तेहैं इसीकरके स्वस्त्ययनरूप क्या स्वस्त्ययनसे प्रारब्धकार्य्योंकीयां सहायकहैं २ और देवतयांका उत्तमहवि अन्नरूपभी गौआंहि हयण और सबजीवां को पवित्रकरण वालीयां और रक्षाकरण वालीयां और दुग्धको देणवालीयां और वस्तुओंके पुचाणवालिआंहैन ३ और मंत्रांकरके पवि

अत्रजप्यांगोमतींविद्यांयमआह गोमतींकीर्त्तयिष्यामिसर्वपापप्रणाशिनीं तांतुमेवदतोविप्राः शृणुध्वमुसमाहिताः १ गावःसुरभयोनित्यंगावोगुग्गुल गंधिकाः गावःप्रतिष्ठाभूतानांगावःस्वस्त्ययनंमहत् २ अन्नमेवपरंगावोदे वानांहविरुत्तमम् पावनंसर्वभूतानांरक्षंतिचवहंतिच ३ हविषामंत्रपूतेनत र्पयंत्यमरान्दिवि ऋषीणामग्निहोत्रेषुगावोहोमप्रयोजिकाः ४ सर्वेषामेव भूतानांगावःशरणमुत्तमम् गावःपवित्रंपरमंगावोमंगलमुत्तमम् ५ गावःस्व र्गस्यसोपानंगावोधन्याःसनातनाः नमोगोभ्यःश्रीमतीभ्यः सौरभेयीभ्य एवच नमोब्रह्मसुताभ्यश्चपवित्राभ्योनमोनमइति ६ अपरार्केवहुकर्तृकेतुह नने संवर्त्तापस्तंवौ विशेषमाहतुः

त्र जो हवि तिसकरके देवतयांकी स्वर्ग विषे तृप्तिकरण वालीयां और ऋषियां को अग्निहोत्र वि षे होमकी प्रवृत्ति कराण वालीयांहैं ४ और संपूर्ण जीवांकी शरण क्या रक्षारूपहैं और परम पवि त्रहयण और मंगलरूप हयण अर्थात् दर्शनसेंभी पुण्यजनकहैं ५ और स्वर्गकी पौडी रूप हय ण सो ऐसीयां गौआं धन्य हयण और सनातनहैं तिनां गौआं ताई नमस्कार होवे जो शोभा करके युक्तहैं और सुरभीकीयां कन्याहैं तिनांताई नमस्कार होवे और जो ब्रह्माकीयां कन्यासर्व या पवित्रहैं तिनाताई नमस्कार होवे नमस्कार होवे एह अधिकआदरविषे पुनरुक्तिहै ६ अपरार्कवि षे जो किहाहै वहुतयां करके गौके मृत होयां होयां तिसविषे संवर्त्त और आपस्तंवऋषि विशेषकहतेहैं

एकेति जिसतरांकर्के गोहत्या होईहै तिसके अनुसार जो व्रत कहाहै जेकर वहुत पुरुष एकगौंकों मारण तां तिसव्रतकें एकएकपादको सब भिन्न २ करण १ परन्तु ऐसाभी विचारहै कि चार व्रतों विचों जिसको जो व्रत व्यवस्था सें आवे तिसीका पाद जानणा एकेति एह जो पद है सो औरके दखाने मात्रहै इसकारणतें वहुतयां पुरुषां कर्के एक गौ वा दो गौआं वा वहुत गौआं मृतहोण तां इक इक पुरुषनें त्राय त्रय पाद अथवा दो दो पाद गोहत्या पापकें दूर करणे वास्ते व्रत करणे योग्य है १ अथ इसीका प्रतिद्वंद्वि अर्थ कहतेहैं एकेनेति जद इकपुरुषसें वंधनादि कर्के अथवा रोकणे कर्के वहुत गौआं मृत होण तिसविषें ८ संवर्त्तऋषि

एकाचेद्बहुभिःकाचिद्दैवाद्व्यापादिताक्वचित् पादंपादंतुहत्यायाश्चरेयुस्तेपृथक्पृथगिति १ यादृग्विधगोहत्यायांयद्व्रतमुपदिष्टंप्रत्येकंतत्पादंपादंकुर्य्युः एकाचेदित्युपलक्षणम् अतोबहुभिर्द्वयोर्बहूनांचव्यापादनेप्रतिपुरुषंपादद्वयं पादोनंवा कल्पनीयम् यदातु एकेनैवरोधनादिव्यापारेणवहवोगावोव्यापादितास्तत्रसंवर्त्तापस्तंबौविशेषमाहतुः व्यापन्नानांवहूनांतुरोधनेवंधनेपिवा भिषङ्मिथ्योपचारेचद्विगुणंगोव्रतंचरेत् १ बहुष्वपिव्यापन्नासु न प्रतिनिमित्तनैमित्तकानुष्ठानं नापितंत्रेण किंतुवचनाद्द्विगुणमेवेत्यर्थः यत्तुपराशरवचनम् ग्रामघातेशरौघेणवेश्मभंगनिपातने अतिवृष्टिहतानांचप्रायश्चित्तंनविद्यते १

और आपस्तंवऋषि विशेष कहतेहैं व्यापन्नानामिति रोकणे कर्के वन्नणे कर्के और औषधिआं के मिथ्या प्रचार कर्के क्या देणी थी होर औषधी और होर दित्तीजावे अथवा और विधिसे देणीथी और होर विधिसें दित्तीगई तिसकर्के जद वहुत गौआं मृत होण तो दूणा गोव्रत करे १ इसमें ऐसा विचारहै कि वहुतियां गौयांके मारयां होयां एक एकके निमित्ततें वहुताहि व्रत करणे चाहिए अथवा सबके निमित्त एकहि व्रतकरणाचाहिए एहदोनो पक्ष नहि स्वीकार करणे किंतु दूणा व्रत करणे योग्यहै क्योंकि वचनके वलसे एह विचार दूसरे प्रकरणाविषेंभी आचुकाहै १ पहलेंतें विशेष कहतेहैंयत्त्विति जोपराशरजीका वचनहै ग्रामके नष्टहोयां २ और वाणकेंसमूहकर्के औरघरदे डिगयां होयां जकरऔर वडीवर्षादे होयां वहुत गौयां मृतहोण तां तिसविषेंप्रायश्चित्तनहिंकरणा १

कूपइति और किसे धर्म्मके अर्थ कर्के बनाए होए खूये विषे और गृहके दाह विषे और ग्रामके दाह विषे और किसेस्थानके दाहके होयां २ गौ मृत होवे तां प्रायश्चित्त नहिं करणा२ एह वाक्य जिस पशुको वन्धन नहिहै तिसविषे जाणणे योग्यहै जिसको बंधनहै तिसके अर्थ आपस्तंबजीने भिन्नकर्के किहाहै ॥ कांतारेष्विति कांतार क्या वनादि और गृह क्या घर तिनके दाहविषे और खलवाडेकेदाहविषे जेकर गौ मृत होवे तां एकपाद व्रत करणेसें शुद्ध होजाताहै १ और विशेषवास्ते वृहस्पति का वचनहै गर्भीति गर्भवाली और कपिला और दुग्धदेणे वाली और होमधेनु और सुंदर स्वभाव वाली गौ इनांकों मोहआदि कर्के मारे तां दूणा व्रत करे १ इसमें भी विशेष कहतेहैं यदीति और जेकर दंडके मारणे कर्के गौ जीवती रहे और

कूपेखातेचधर्म्मार्थेगृहदाहेचयामृताः ग्रामदाहेतथागारेप्रायश्चित्तंनविद्यतइति२ इदंतुबंधनरहितेपशौबोध्यम् इतरथातुआपस्तंबेनोक्तम् कान्तारेष्वथसर्वेषुगृहदाहेखलेषुच यदितत्रविपत्तिःस्यात्पादएकोविधीयतइति १ वृहस्पतिः गर्भिणींकपिलांदोग्ध्रींहोमधेनुंचसुव्रताम् मोहादिनाघातयित्वा द्विगुणंगोव्रतंचरेत् १ यदिलगुडादिघातेनगौर्जीवतिगर्भमात्रघातोभवति तदाविशेषमाहयमः पादमापन्नमात्रेतुद्वौपादौगात्रसंमिते पादोनंव्रतमाचष्टेहत्वागर्भमचेतनम् १ चेतनगर्भघातेतु कृत्स्नमेवप्रायश्चित्तमितिकेचित् पराशरस्तु निष्पन्नसर्वगात्रस्तुदृश्यतेवासचेतनः अंगप्रत्यंगसंपूर्णोद्विगुणंगोव्रतंचरेत् १ पादेंगरोमवपनंद्विपादेश्मश्रुणोपिच त्रिपादेतुशिखावर्जंसशिखंतुनिपातने २

गर्भ छणजावे तिसविषे धर्म्मराज कहताहै पादमिति अंगातें रहित गर्भके पातविषे एकपाद व्रतकरें और अंगउत्पत्तिके होयां२ गर्भके पातविषे दोपाद व्रतकरे और अचेतन गर्भके पातविषे तीनपाद व्रतकरे १ और सचेतन गर्भके पातविषे संपूर्ण प्रायश्चित्त करे एह केकहतेहैं पराशरजी और कहतेहैं निष्पन्नेति जेकरगर्भ निष्पन्नगात्रहोवे क्यासव अंगां वाला होवे और सचेतन प्रतीत होवे क्याजिसवेले बाहरहोवे उसवेले थोडा चिर जीवित रहकर मृतहोवे और अंगोकेसाथ प्रत्यंगअंगुल्यादिभी स्पष्टकर्के होण ऐसी गौ के हतहोयां २ गौवधका प्रायश्चित्त करे १ इसमेंमुंडनकी विधि कहतेहैं पादइति एकपाद व्रतविषे अंगां उप्पर जो रोम तिनांका मुण्डन करावे और दोपाद व्रतमे श्मश्रु क्या दाडीकाभीसाथ मुंडन करावे और त्रिपाद व्रत विषे शिखातें विना मुण्डन करावे और संपूर्ण प्रायश्चित्त विषे सहित शिखाके मुण्डन करावे २

अब इसमें दानविशेष भीकहतेहैं पाद इति और पाद व्रत विषे दोवस्त्र देवे और दोपाद व्रत विषे कांस्यपात्र देवे और त्रिपादव्रतविषे एकगौ और वृषदेवे और संपूर्ण व्रतविषे दो गौआंदा नकरे तदशुद्धहोताहै२ अववृहस्पतिजीकावचनहै नेकर पुरुष वहुत वृद्धगौ और वहुवलिस्सी और वहुत छोटी और रोगवाली ऐसीआंगौयांकों मारे तां पूर्व विधिकर्केअर्द्ध व्रतकोंकरे१ इसकातात्पर्य कहतेहैं नेति जितना प्रायश्चित्त नीरोगगौकाहै एह प्रायश्चित्त साक्षात् गौवधकेविषे कहाहै साक्षात् गौवधके प्रकार आपस्तंब ऋषिनें दखाए हयण पाषाणेरिति पत्थरकर्के और दंडकर्के और शस्त्र कर्के वा और किसे साधन कर्के वा वलतें मोहतें गौ को जो पुरुष मारते हयण तिनां कों

पादेवस्त्रयुगंचैवद्विपादेकांस्यभाजनम् त्रिपादेगोवृषंदद्याच्चतुर्थेगोद्वयंस्मृतम् ३वृहस्पतिः अतिवृद्धामतिकृशामतिबालांचरोगिणीम् हत्वापूर्वविधानेनचरेद र्द्धव्रतंनरःनीरोगादिवधेयत्प्रोक्तंतस्यार्द्धम्एतत्प्रायश्चित्तंसाक्षाद्गोवधविषयम् साक्षाद्गोवधप्रकारास्त्वापस्तम्बेनदर्शिताः पाषाणैर्लगुडैर्वापिशस्त्रेणान्येनवा वलात् निपातयंतियेमोहात्तेषांसर्वंविधीयते १वृहत्प्रचेतसाप्यत्रविशेषउक्तः एकवर्षेहतेवत्सेकृच्छ्रपादोविधीयते अबुद्धिपूर्वंपुंसःस्याद्द्विपादस्तुद्विहायने त्रिहायनेत्रिपादःस्यात्प्राजापत्यमतःपरमिति १ वैर्य्यादिद्वेषेणकामकृतगो वधे निमित्तविशेषे प्रायश्चित्तमाह वृहत्पराशरः काष्ठलोष्टकपाषाणैःशस्त्रे णैवोद्धतावलात् व्यापादयतियोगांतुतस्यशुद्धिंविनिर्द्दिशेत् १ चरेत्सांतप नंकाष्ठेप्राजापत्यंतुलोष्टके तप्तकृच्छ्रंतुपाषाणेशस्त्रेणैवातिकृच्छ्रकमिति २

संपूर्णव्रतकिहाहै१ इसविषे वृहत्प्रचेतस ऋषिनें विशेष किहाहै एकेति न जानकर्के एक वर्षके वच्छे केमृतहोयां २ कृच्छ्र व्रतके पादकों करे और दोवर्षके वच्छेके मृतहोयां २ दोपादव्रत करे और त्रयवर्षके वच्छेके मृतहोयां २ त्रयपादव्रतकरे इसते उपरंतहोवेतां प्राजापत्य व्रतकरेतो शुद्धहोताहै१ और वैर कर्के इच्छा पूर्वक गौके वध विषे प्रायश्चित्तकों वृहत्पराशरजी कहतेहैं काष्ठेति काष्ठकर्के मृत होवे तां सांतपन व्रत करे लोष्ट कर्के मृत होवे तां प्राजापत्य व्रत करे पत्थर कर्के मृतहोवें तां तप्तकृच्छ्र व्रत कों करे शस्त्र कर्के मृत होवे तां अति कृच्छ्र व्रत कों करे तां शुद्धहोताहै २

मुष्टीति और मुक्कोके मारणे कर्के और किल्ले कर्के और शृंगादिके पुट्टणे कर्के और दंडेके मारण कर्के जिस पुरुषसें गौ मृत होवे तिसकों गोवध कहे और तिसकोंभी अतिकृच्छ्रका निर्दे शहै ॥ ३ ॥ इसीकाविशेष कहतेहैं हलइति हल विषे और गड्डे विषे जो पुरुष निर्बल बैलकोंजोड ताहै सो पुरुष तिसप्रत्यवायके होयां होयां गोवध पापकों प्राप्त होताहै तिसकोंभी पूर्वोक्तप्रायश्चित्त है ॥ ४ ॥ इसमें और विशेषवास्ते नारदजीका वचनहै दमनइति खरसी करणे कर्के और किसें पा सॉकरवाणे कर्के और रोकणे कर्के और बलवालीआं गौयांके साथ निर्बल गौयां के जुटणे कर्के स्तंभके साथ संगल पाणे कर्के और फाही कर्के गौके मृत होयां होयां त्रयपाद व्रतकों कर्के शुद्ध होताहै १ अतिदाहेति अतिशयकर्के अग्निके दाह कर्के औरबहुत वाहणे कर्के और नासि का विषें रस्सी पाणे कर्के और नदीपर्वतविषें रोकणे कर्के गौ मृत होवे तां त्रिपाद व्रतकरें २

मुष्टिघातेनकीलिनतथाशृंगादिमोटनैः लगुडादिप्रहारेणगोवधस्तस्यनिर्दिशे
त् ३ तस्याप्यतिकृच्छ्रकं प्रायश्चित्तंनिर्दिशेदित्यर्थः हलेचशकटेचैवदुर्बलंयोभि
योजयेत् प्रत्यवायेसमुत्पन्नेतत्रप्राप्नोतिगोवधम् ४ अत्रापि पूर्वोक्तमेव प्राय
श्चित्तम् विशेषमाहनारदः दमनेदामनेचैवरोधेसंघातयोजने स्तंभशृंखलपा
शैश्चमृतेपादोनमाचरेत् १ बलवतीभिःसहनिर्बलायायोजनंसंघातयोजनम्
अतिदाहातिवाहाभ्यांनासिकाछेदनेतथा नदीपर्वतसंरोधेमृतेपादोनमाचरेत् २
दीर्घरज्वाकृतेचैवप्रग्रहेयुग्मयोजिते लग्नयुग्यमृतेचैवद्विपादंतत्रनिर्दिशेत् ॥ ३

इसमे भी विशेष कहतेहैं दीर्घेति बडीरस्सी कर्के गौंके ग्रहण विषे इसमे एह अभिप्रायहै किं लम्मी रस्सी कर्के किसे जगां घासके अर्थ गौ बद्धी औरपीछे व्याघ्रादिनें मारी तद एह अद्धा व्रतहै और एक वाहकों दूसरेके साथ वाहणे कर्के सो वाह इसजगा दोप्रकारकाहै एक पंजा ली पाणे कर्के और दूसरा लादे कर्के दोनों विषे एह विचार जानणाकि इसमें जुंगलेका लागा लगणे पिछे कीडे आदिक रोगकी मृत्यु विषे एह है और किसें जगा लग्नयुग्ममृते ऐसाभी पा ठहै तिसजगा दोरस्सेदी गंड कर्के अथवा दो गंडी कर्के मृत होवे ऐसा अर्थहै और जुंगले के जुट्टणे कर्के मृत्यु विषें दोपाद व्रत करे३

घंटेति और घंटा भूषण के दोष कर्के गौकी मृत्यु होवे तां अर्द्ध व्रतकोंकरे क्योंकि सो घंटा भूषण वास्ते पायाहै इस कारणतें अर्द्ध व्रत किहाहै ४ अब पराशरजीका वचन कृच्छ्र पूर्वोक्तसें विलक्षण दखाईदाहै अतीति बहुत दाह विषे और बहुत वाहणे विषे और नासिकाके छिद्र करणे विषे और नदी और पर्वत के उप्पर रोकणे कर्के गौकी मृत्यु होवे तां प्रायश्चित्तकों करे अर्थात् उपकारके अर्थभी एह अतिदाहादि होण तथापि प्रायश्चित्त करणा चाहिए एहअभिप्रायहै परंतु इसमें भी पूरा प्रायश्चित्त करणा चाहिए॥ १ ॥ इसकाविवेक पराशरजी कहतेहैं अतीति बहुत अग्निके दाह कर्के मृत्यु होवेतां एक पाद व्रत करे और बहुत वाहणे विषे मृत्यु होवे तां दोपाद व्रत करे और नासिका के छिद्र करणे विषे त्रयपाद व्रत करे इसजगा नासिका पद कर्के नासिकाका छेदन जानणा अंतपदलोपी समास होणेतें ॥ और नदी और पर्वत विषे डिगे तां

घंटाभरणदोषेणविपत्तिर्यत्रगोर्भवेत् गोघ्नोर्द्धंतुचरेत्तत्रभूषणार्थंहितत्स्मृतम् ४
पराशरःअतिदाहेतिवाहेचनासिकाभेदनेतथा नदीपर्वतसंचारेप्रायश्चित्तंवि
निर्दिशेत् १ अतिदाहेचरेत्पादंद्वौपादौवंधनेचरेत् नासिकापादहीनंस्याच्चरे
त्सर्वंनिपातने २ काष्ठलोष्टाश्मभिर्गावःशस्त्रैर्वानिहतायदि प्रायश्चित्तंकथंत
त्रशास्त्रेणात्रविधीयते ३ काष्ठेसांतपनंकुर्यात्प्राजापत्यंतुलोष्टके तप्तकृच्छ्रं
तुपाषाणेशस्त्रेवाप्यतिकृच्छ्रकम् ४ प्रत्याम्नायोपितेनैवदर्शितः पंचसांत
पनेगावःप्राजापत्येतथात्रयः तप्तकृच्छ्रेभवंत्यष्टावतिकृच्छ्रेत्रयोदश ५ ॥

संपूर्ण व्रत करे इसमें ऐसा जानणा कि आप धक्का देकर्के जेकर गौकों गिडावें तद एह प्रायश्चित्त है ॥ २ ॥ काष्ठेति और काष्ठ और मृत्तिका की जिल और पत्थर और शस्त्र इनां कर्के जद गौको मृत होवे तां शास्त्रकी विधि कर्के प्रायश्चित्त कों करे तद शुद्ध होताहै ॥ ३ ॥ पूर्वोक्त निमित्त विषे कहतेहैं काष्ठेति काष्ठ कर्के गौ मृत होवे तां सांतपन व्रत करे और लोष्ट कर्के मृत होवे तां प्राजापत्य करे और पत्थर कर्के मृत्युहोवेतां तप्त कृच्छ्र व्रतकों करे और शस्त्र कर्के मृत होवे तां अति कृच्छ्रव्रतकों करे ॥ ४ ॥ इसी विषे पराशरजीने प्रत्याम्नाय दिखायाहै प्रत्याम्नाय नाम उसकाहै कि उक्त विधिके करणे को असमर्थ देखकर तिसके तुल्य दूसरी विधि करणी जिस पुरुषसें सांतपन व्रत नहोवे तां पञ्च गौआं दान करे और प्राजापत्य विषे त्रय गौआंदान करे और तप्त कृच्छ्र विषे अष्ट ८ गौआं और अतिकृच्छ्र विषे तेरां १३ गौआं देवे ॥ ५

अब और विशेषकहतेहैं प्रमेति प्राणधारी और जीवांकी हिंसा विषे जिसका उह प्राणी होवे तिसके ताईं मारेहोए जीवके तुल्य वस्तुदेवे अथवा तिसका मुल्ल देवे और पिच्छे प्रायश्चित्त करे अथवा तिसके तुल्यदानकरे तद शुद्ध होताहै ॥ जैसे अश्वके मारणेविषे अश्वदानकरे वा तिसके तुल्यमुल्लकोंदेवे एह मनुजीका वाक्यहै ॥६॥ अस्थीति और गौआं की हड्डीकों भन्ने वा पुछ को कटे वा कर्ण वा शृंगकोकटेतो अर्द्ध महीनाजवांको पीवे तां शुद्धहोताहै ॥ ७ ॥ भवदेवजीके व नायें होए ग्रंथाविषे किहाहै किगौके स्वामीके ताईं जो गौ मृत्यु होई है तिसीके तुल्यगौ देकर्के एह प्रायश्चित्तकरे अब इसमें और स्मृतिके वचनसे गोघात प्रायश्चित्तका विशेष अर्थ कहतेहैं

प्रमापणेप्राणभृतांदद्यात्तत्प्रतिरूपकम् तस्यानुरूपंमूल्यंवादद्यादित्यब्रवी
न्मनुरिति ६ अस्थिभंगंगवांकृत्वालांगूलस्यचभेदनम् पाटनेकर्णशृंगाणां
मासार्द्धंतुयवान्पिबेत् ७।भवदेवीये।इदंचप्रायश्चित्तं गोस्वामिने व्यापन्नस
दृशींगांदत्त्वैवकार्य्यम्। पाषाणेनैवदंडेनगावोयेनाभिघातिताः शृंगभंगेचरे
त्पादंद्वौपादौनेत्रघातने १ लांगूलेपादकृच्छ्रंतुद्वौपादावस्थिभंजने त्रिपा
दंचैवकर्णेतुचरेत्सर्वंनिपातने २ शृंगभंगेस्थिभंगेचकटिभंगेतथैवच यदिजी
वतिषण्मासान्प्रायश्चित्तंनविद्यते ३

पाषाणेनेति पत्थर कर्के और दंडकर्के गौआंको जिसनें मारयाहै सो पुरुष शृंगकेभज्जयां होयां पाद व्रत करे और नेत्रके घात होयां होयां दो पाद व्रत करे ॥ १ ॥ और पूछल के दूर होयां २ पाद व्रत करे और अस्थि के भज्जयां होयां दोपाद व्रत करे और कर्णाके दूर होयां त्रिपाद व्रत करे और मृत्युके होयां २ संपूर्ण व्रत करे ॥ २ ॥ अब इसमें और विशेषकहतेहैं शृंगेति शृंगकेभंगाविषे और अस्थिकेक्या हड्डीकेभंगाविषे और कटिके भंगाविषे अर्थात् मध्यभागके भंगाविषे जेकर गौ छे ६ महीनें जीवती रहे फेर मृत होजावे तां पीछे प्रायश्चित्त नाहिं करणा परन्तु शृंगादि भंग करणे वाला गौयांकीसेवापरायण रहे तद दोष नहिंहै ॥ ३ ॥

अब इसीवात कों कथन करतेहैं व्रणेति व्रण भंग उसको कहतेहैं जो शृंगादिकांदे भंग कीत्ते होयां अधिक व्रण हो जावे तिसके होयां होयां अपणे हत्थ कर्के घृत आदि मले और घासभक्षणकरवाए जितनापर्यंत गौवलसंयुक्त न होवे इसमें कोईक ( अंग भंगेचकर्त्तव्यः ) ऐसा पाठभी कहतेहैं ॥ ४ ॥ यावदिति जितना पर्यंत संपूर्ण अंगां कर्के वल संयुक्त नहि होवे तितना काल पर्यंत तिसकी पालना करे फेर गौका रूप सुवर्ण वा चांदीदावणाकर ब्राह्मणकों नमस्कार कर्के देवे इतना प्रायश्चित्तभीकरे ॥ ५ ॥ यदीति जेकर गौकी चिकित्साकर्के संपूर्ण अंग न होण तद तिसका नाम हीनदेहहै तां सो अंगभंग करणे वाला गोहत्याका जो अर्द्ध प्रायश्चित्तहै तिसकोंकरे

व्रणभंगेचकर्त्तव्यःस्नेहाभ्यंगस्तुपाणिना यवसश्चोपहर्त्तव्योयावद्दृढवलो भवेत् ४ यावत्संपूर्णसर्वांगस्तावत्तंपोषयेन्नरः गोरूपंब्राह्मणस्याग्रेनमस्कृत्वाविसर्जयेत् ५ यद्यसंपूर्णसर्वांगोहीनदेहोभवेत्तदा गोघातकस्यतस्यार्द्धं प्रायश्चित्तंविनिर्दिशेत् ६ इतिपराशरकथनात्। तथाचमनुः। योयस्याहिंस्याद्द्रव्याणिज्ञानतोऽज्ञानतोपिवा सतस्योत्पादयेत्तुष्टिंराज्ञेदद्याच्चतत्सममिति १ एतच्च प्रायश्चित्तं ब्राह्मणस्यैवहन्तुर्वेदितव्यम्। क्षत्रियादेस्तुहंतुर्विशेषमाह वृहद्विष्णुः ॥ विप्रेतुसकलंदेयंपादोनंक्षत्रियेस्मृतम् वैश्येर्द्धंपादएकस्तुशूद्रजातिपुशस्यतइति ॥ १ ॥

इस पराशरजीके कथनतें ६ तथेति तैसेंहि मनुजीकहतेहैं यइति जो पुरुष जिसके पशु आदि पदार्थका जाण कर्के वा नजानकर्के नाशकरें सो जिसका द्रव्य नाश कीताहै तिसकी प्रसन्नताकरे और तिसीके तुल्य धन राजाकेतांई देवे तदशुद्धहोताहै ॥ १ ॥ एह पूर्वोक्त प्रायश्चित्त गोहत्याकरण वाले ब्राह्मणकों किहाहै और क्षत्रियादि मारण वाला होवेतां तिस विषें बृहद्विष्णुजी कहतेहैं विप्रइति ब्राह्मण विषें संपूर्ण प्रायश्चित्त देवे और क्षत्री विषे त्रिपाद देवे और वैश्यविषें दो पाद व्रतदेवे और शूद्रविषें एकपाद व्रत किहाहै ॥ १ ॥

और स्मृतियों मैभी किहाहै प्रायइति जो प्रायश्चित्त ऋषियोंनें ब्राह्मणकों किहाहै तिस प्रायश्चि त्तकों क्षत्री पादऊन करे और वैश्य दोपाद करे और शूद्र एकपाद करे संपूर्ण पापां विषें एही विधिहै परंतु एह प्रायश्चित्त प्रातिलोम्यानुष्ठितसाहसतें भिन्नजानणा अर्थात् शूद्र तिन्नां ३ वर्णोंका अपराध करे और वैश्य दो २ का और क्षत्री एक १ ब्राह्मण का अपराध करे तद प्रातिलोम्या परावहै इसविषें ऐसीव्यवस्थाहै कि ब्राह्मणको क्षत्रियादिके अपराध विषें जितना दंडहै तिसतें दूणा क्षत्रीको ब्राह्मणके तिसी अपराध विषें जानणा ऐसे औरभी जाणो १ अब चार प्रकारका साहस कहतेहैं मनुष्येति मनुष्यका मारणा और वस्तुकाचुराणा और परस्त्रीका सेवणा और दोप्रकारका पारुष्यहैं एक कठोरवचन और दूसरा दंडमारणा एह चारप्रकारका साहसहै २ अब

स्मृत्यंतरेतु प्रायश्चित्तंयदाम्नातंब्राह्मणस्यमहर्षिभिः । पादोनंक्षात्रियःकुर्याद्द्वैवैश्यःसमाचरेत्शूद्रःसमाचरेत्पादमशेषेष्वपिपाप्मस्विति ॥ १ ॥ इदंच प्रातिलोम्यानुष्ठितचतुर्विधसाहसव्यतिरिक्तविषयम् मनुष्यमारणंचौर्यंपरदाराभिमर्शनम् पारुष्यमुभयंचेतिसाहसंस्याच्चतुर्विधम् २ स्त्रीणांविशेषमाहपराशरः ॥ प्रायश्चित्तंहिनारीणांनप्रव्रज्याजपादिकम् नगोष्ठेशयनंतासां नवसीरन्गवाजिनम् १ सर्वान्केशान्समुद्धृत्यच्छेदयेदंगुलिद्वयम् सर्वत्रैवंहि नारीणांशिरसोमुंडनंस्मृतमिति २ पुरुषेषुविशेषःसंवर्त्तेनदार्शितः । पादेंगरोमवपनंद्विपादेश्मश्रुणोपिच त्रिपादेतुशिखावर्जंसशिखंतुनिपातन इति १ ॥

स्त्रीयांको पराशरऋषि विशेष कहतेहैं प्रेति स्त्रीयांको ऐसा प्रायश्चित्तहै संन्यास नहिं लयणा और जपआदि नाहैं करणे और गौशालाविषें शयन नहिं करणा और गोचर्मउप्पर नहिं लेणा १ सर्वांतिनि स्त्रीयांकोदोअंगुली प्रमाण शिरके वाल कटाणे योग्यहैं संपूर्ण केशों के उठाणे पूर्वक त्यागके एही स्त्रीयांको संपूर्ण शास्त्रांविषें मुंडनकिहाहै २ और मुंडनकापुरुषां विषें विशेष संवर्त्त ऋषिनें दखायाहै पादइति एक पाद व्रत विषें शरीरकेही वालांनूं मुनावे और दो पाद व्रत विषें दाढीको मुनावे और त्रिपाद व्रत विषें शिखातें विना मुंडन करावे और संपूर्ण व्रतां विषे सहित शिखाके मुंडन किहाहै ॥ १ ॥

प्रायश्चित्त विवेक विषे गौआंका न पालना इसनिमित्तकर्के जो गोवधहै तिसर्के प्रायश्चित्तकों परा शरजीकहतेहैं शीतेति शीत और अग्नि कर्के और वन्नर्णे कर्के मृत होवे और जिसगृहविषे मनुष्य कोई नाहिं होवे तिसविषे गौकों त्यागकर उपेक्षाकीतियांहोयां मृत होवे तो प्राजापत्यव्रत कों करे तो शुद्धहोताहै ॥ १ ॥ अपेति पीछे गौके न रक्षा करणेतें तृणकों चुगती होई मृत होवे अथवा जल विषे डूब कर्के अथवा सर्पकेंलडने कर्के अथवा विजली कर्के मृत होवे ॥ २ ॥ अथ वा डूंगे स्थानविषे डिगणे कर्के अथवा व्याघ्रादिके भक्षण करणेकर्के गौ मृत होवे तां गौका स्वामी न रक्षा करण वाला उत्तम जो कृच्छ्र प्राजापत्य व्रत तिसको करे तदशुद्धहोताहै इसमें एह अभिप्रायहै कि सर्प दंशमें और विद्युत्पातमें यद्यपि स्वामीका दोष नहिंहै तथापि सर्पदं

प्रायश्चित्तविवेके अपालननिमित्तगोवधप्रायश्चित्तम् । शीतानलहताचैवउ द्बंधनमृतापिवा शून्यागाराद्युपेक्षायांप्राजापत्यंविनिर्दिशेत् ॥ १ ॥ अपाल नात्प्रणश्येत्तुगौश्चरंतीकथंचन जलौघपटलेमग्नानागविद्युद्धतापिवा ॥२॥ श्वभ्रेवापतिताऽकस्माच्छ्वापदैर्वापिभक्षिता प्राजापत्यंचरेत्कृच्छ्रंगोस्वामी व्रतमुत्तमम् ॥ ३ ॥ सशिखंवपनंकार्यंत्रिसंध्यमवगाहनम् शृंगैर्वापिखुरैर्युक्तं लांगूलश्रवणादिभिः ॥ ४ ॥ आर्द्रमेवहितच्चर्मपरिधायसगांव्रजेत् तासांम ध्येवसेद्रात्रौदिवाताभिःसमंव्रजेत् ॥ ५ ॥ ब्राह्मणस्यविशेषेणतथाराजन्यवै श्ययोः प्रायश्चित्तेततश्चीर्णेकुर्याद्ब्राह्मणभोजनम् ॥ ६ ॥

शते उपरंत औषधी करणीथी और विद्युत्पातकी संभावनामें तिसको अपणें पासे खिचणवालि यां लोहशलाकादि वस्तु गौआंके समीप रखणीथी एह गोस्वामीने नहिं कीता इसवास्ते तिसको दोष जानणा ॥ ३ ॥ सेति और सहित शिखाके मुंडन करवाके त्रिकाल स्नानकों करे शृं ग और खुर और पूछल ओर कर्ण ॥ ४ ॥ एनांके साथ गिल्लाहि जोगोचर्म तिसकों उपर लेके गौआंके पीछे वनविषे जावे और रात्रिमें तिन्हांके मध्यविषें निवास करे और दिनमे तिनांके साथ जावें ॥ ५ ॥ ब्राह्मेति ब्राह्मणकों विशेष कर्के प्रायश्चित्त कहाहै और तिसी प्रकार क्षत्री और वैश्य प्रायश्चित्त कर्के ब्राह्मणांके तांई भोजन देवे ॥ ६ ॥

और बैलके साथ गौ दक्षिणा देवे ब्राह्मणके तांई इसमें ( ब्राह्मणस्य विशेषेण ) इस वचनतें ब्राह्मणकों विशेष करके प्रायश्चित्त कहाहै क्या गौआंके पीछे वन विषे जाणा मुख्यहै इसका अर्थ स्पष्ट करके कहतेहैं एतेनेति इस कहणे करके एह सिद्ध होया क्या गौआंकी पालनातें विना मृत्यु होवे तद प्राजापत्य व्रत करणे योग्यहै और ना समर्थ होवे तां एक गौ ब्राह्मणके तांईदवे और बैलके साथ गौ दक्षिणा देणे योग्यहै ॥ यदेति ॥ पालनके होयां होयां गर्त्त आदि करके मृत्यु होवे तो तिस विषे प्रायश्चित्तकों विष्णु जी कहतेहैं पल्वलेति पल्वलौघ क्या छपडीयां और भगयाड और चित्रा और श्वापद क्या हिंसक मृगविशेष और गर्त्त और बंधन और सर्प्प

अनडुत्सहितांगांच दद्याद्विप्रायदक्षिणाम् । ब्राह्मणस्याविशेषेणेति । ब्राह्मणस्य गवानुगमनं मुख्यमित्युक्तम् ॥ एतेनापालनादिकृतगोवधेप्राजापत्यं करणीयम् अशक्तौधेनुरेकादातव्या वृषभसहितागौर्दक्षिणादेया इत्यादि बोध्यं वक्ष्यमाणवचनात् । यदातु सत्येव पालने श्वभ्रादिपातादेर्मरणं स्यात्तदा प्रायश्चित्तमाह विष्णुः ॥ पल्वलौघवृकव्याघ्रश्वापदादिनिपातनात् श्वभ्रोद्बंधनसर्प्पाद्यैर्मृतेपादोनमाचरेत् अपालनेतुकृच्छ्रंस्याच्छून्यागाराद्युपेक्षया ॥ १ ॥ अत्रपादोनंप्राजापत्यस्यैव उत्तरवचनेकृच्छ्रश्रवणात् । तथा पादश्चाऽप्राप्तकेदेयो वत्सस्वामिन्यपेक्षिते ॥ अप्राप्तकेऽप्राप्तदृश्यावस्थेऽस्मिन्श्वभ्रपातादिना मृते वत्सस्वामिना प्राजापत्यपादः करणीय इत्यर्थः

इन्हां निमित्तां करके मृत्यु होयां होयां त्रिपाद व्रतकों करे और नापालनके होयां होयां अर्थात् मनुष्यांतें रहित जो शून्यगृह तिसविषे ना रक्षा करणेतें मृत्यु होवे तां कृच्छ्र व्रतकों करे । १ । इसका स्पष्टार्थ एह हैं कि इस विषे पादऊन प्राजापत्यका हि जानणा क्यों कि पिछले वचन विषे कृच्छ्र व्रतका श्रवण होणेतें और वचनहै तथेति तैसेही वच्छेके स्वामिने बच्छा ढूंडयाहै परंतु तिसकों प्राप्त नहिं होआ और ढूंढणेतें उपरंत गर्त्त आदि करके मृत्यु हो गयाहै तद वच्छेके स्वामीने प्राजापत्य व्रतका एक पाद व्रत करणे योग्यहै एह अर्थ है ॥

अब गोवध प्रायश्चित्तका अपवाद क्या किसे जगा प्रायश्चित्त नहिं करणा तिसमें पराशरजी कहतेहैं * धुर्य्येष्विति गड्डे आदिमें जुगडे होए जो वैल तिनां विषे दंड कर्के ताडना कीतयां होयां और काष्ठ कर्के वा लोष्टकर्के क्या ढीम कर्के वा कोरडेकर्के वा पत्थर कर्के मारयांहोयां ॥ १ ॥ मूर्छाकों प्राप्तहोजावे वा डिगजावे वा शताबी मृत होजावे इसप्रकार मृतहोए जो वैल तिनांको विधिकोंकहताहां । २ । पूर्वोक्तनिमित्ततें मूर्छावाला होया होया फेर उठकर्के जेकर पंच ५ वा सत ७ वा दश १० पैर चले और ग्रासभी ग्रहण करे और जलभी आपपीवे ॥ ३ ॥ और पीछे पूर्वव्याधि कर्के मृत होए जो वलद तिनांका प्रायश्चित नहिं कहाहै ॥ ४ ॥ इसी अर्थ

अथगोवधापवादः * अत्रपराशरः ॥ धुर्य्येषुवहमानेषुदंडेनाभिहतेषुच ॥ काष्ठलोष्टेनग्राव्णाऽपिपापाणिनापिताडितः ॥ १ ॥ मूर्छितःपतितश्चैवमृतोवा सद्यएवच ॥ एवंगतानांधुर्याणांप्रवक्ष्यामियथाविधि ॥ २ ॥ उत्थितस्तुयदा गच्छेत्पंचसप्तदशापिवा । ग्रासंवायदिगृह्णाति तोयंवापिवतिस्वयम् ३ । पूर्वव्याधिविनष्टानां प्रायश्चित्तंनविद्यते ॥ ४ ॥ यदिव्याधियुक्तानां वृषभाणां हलयोजनमात्रेण दंडादिघातेन वा मूर्छया पतनं भवति तदा गमन ग्राससग्रहणतोयपानकरणेन तदानींतनमरणहेत्वभावं निश्चित्य पूर्व व्याधिनष्टत्वम् अतःप्रायश्चित्ताभावः ॥ सद्योमरणेतु प्रायश्चित्तमस्त्येव । दंडप्रमाणमाह पराशरः ॥ अंगुष्ठमात्रस्थूलस्तु वाहुमात्रःप्रमाणतः आर्द्र स्तुमपलाशश्चदंडइत्यभिधीयतइति ॥ यदिच पूर्वव्याधिरहितएव प्रहा रजनितव्याधिना पश्चान् म्रियते तदा प्रायश्चित्तमस्त्येव ॥

कों स्पष्टकर्के मूलमें लिखाहै यदीति ॥ एह इसकालके दंडादिनिमित्तते मृत नहि होया किंतु इसकों कोई पिच्छे व्याधिथी तिसकर्के मृत होयाहै इसकारणतें उसका प्रायश्चित्त नहिंहै और शताबी मृत होवे तां प्रायश्चित्तहै ॥ अवदंडका प्रमाण पराशरजीकहतेहैं ॥ अंगुष्ठमात्र मोटा होवे और वाहु जितना लंवाहोवे और गिल्लाहोवे और पत्रांवाला होवे सो दंडकहाहै इसके यथायुक्ति लगाणे कर्के दोप नहि और इसतें भिन्न होवे तां प्रायश्चित्तहै जेकर प्रथमपीडासें रहित होवे और दंडादि प्रहारतें उत्पन्न जो व्याधि तिस कर्के मृत होवे जो गौ तिसविषें प्रायश्चित्तहै सो प्रायश्चित्त ॥ व्रणभंगके प्रसंगविषे पिच्छे आगिआहै उसीसे जानलेणा ॥

लकुटेति और सोटे आदिके मारणें विषे इसीवास्ते प्रायश्चित्त पराशर जी कहतेहैं ॥ दंडादिति दंडमारणेतें उपरंत तिसी प्रहारतें जद गौ मृत होवे वा मरणेंके योग्य होवे तिसविषे दूणा गोघातका व्रतकरे तां शुद्धहोताहै ॥ १ ॥ अब इसीका अपवाद संवर्त्त ऋषि कहतेहैं ॥ यंत्रणइति गौको चिकित्सावास्ते अच्छीतरह बंधन कीते होयां तिसविषे और मृत जो गर्भ तिसका निकालनातिसविषे यत्नकीते होयां जद गौ मृतहोवे तां प्रायश्चित्तनाहिंकरणा ॥ १ ॥ और दाह क्या रोग निवृत्तिवास्तें किसे अंगकों गुल देणा अथवा रुधिर निकालना इनांयत्नांकर्के जो द्विज गौआंके हितवास्ते उपकार करें तिनांको प्रायश्चित्त नहिंहै अथवा द्विजां किएं गौआंके उपकार करण वालेयांको प्रायश्चित्त नहिं एह अर्थ है ॥ २ ॥ एह वाक्य शास्त्र कर्के कही जो औषधि तिसकर्के मृत होवे तिसमें जानणे योग्यहै । और इसतें भिन्न करे तां प्रायश्चि

लकुटादिपातनेऽतएवप्रायश्चित्तमाह ॥ पराशरः ॥ दंडादूर्ध्वंयदन्येन प्रहाराद्यदिपातयेत् ॥ प्रायश्चित्तंतदाप्रोक्तंद्विगुणं गोव्रतंचरेत् ॥ १ ॥ पातयेन्मारयेत् ॥ मरणयोग्यांवाकुर्यादित्यर्थः ॥ संवर्त्तः ॥ यंत्रणेगोश्चिकित्सार्थेगूढगर्भविमोचने यत्नेकृतेविपत्तिः स्यात्प्रायश्चित्तंनविद्यते ॥ १ ॥ दाहच्छेदशिराभेदप्रयोगैरुपकुर्वताम् ॥ द्विजानांगोहितार्थायप्रायश्चित्तंनविद्यते ॥ २ ॥ द्विजानांगवांहितार्थमित्यर्थःगूढगर्भोमृतगर्भः ॥ एतद्यथावदुपचारेवेदितव्यम् ॥ नपुनः सन्निपाताभिभूतस्योदकपानादिनेव ॥ अत एव चिकित्सतांचसर्वेषांमिथ्याप्रहरतांदमइति मनुनोक्तम् ॥ मिथ्याचिकित्सतांमिथ्याप्रहरतांचदमोदंडइत्यर्थः ॥ एतएव काश्यपोप्यत्र प्रायश्चित्तमाह ॥ औषधंलवणंचैवस्नेहंपिण्याकमेवच अतिरिक्तंनदातव्यं कालेस्वल्पंतुदापयेत् ॥ १ ॥ अतिरिक्तेविपन्नानां कृच्छ्रपादोविधीयते ॥ औषधेतुनदोषास्तिस्वेच्छयापिवतेयदि अन्यथादीयमानेतु प्रायश्चित्तंनसंशयः ॥ २ ॥

त्तहै जैसें सन्निपातादि कर्के युक्त जो कोई होवे तिसकों जलपानादि करवाणा। तिस कर्के मृत होयां तिसविषें प्रायश्चित्त करणे योग्यहै ॥ इसीवास्ते मिथ्याचिकित्सा कर रहे जो पुरुष और मिथ्या प्रहारकर्त्ता जो पुरुष तिनकों दंड मनुजीनें पीछे कहाहै ॥ इसीवास्ते काश्यप जी इस विषे प्रायश्चित्त कहतेहैं ॥ औषधमिति औषधी और लूण और स्नेह क्या तैलादि और खल एह उपाय करणेंके समय विषे अधिक नहिं देवे किन्तु प्रथम थोडे देणे योग्यहैं ॥ १ ॥ अधिक दित्ते होयां जद गौ मृत होवे तां तिसविषें कृच्छ्र व्रतका एक पादव्रत करे और औषधि देणेंविषे दोष नहिंहै जेकर गौ अपनी इच्छा कर्के पीवे और जेकर जोरावरी देवे तां तिसविषें प्रायश्चित्तहै इसमें संशय नहिं करणा ॥ २ ॥

अब अंगिराजी विशेष कहतेहैं । शृंगेति शृंगकाभन्नणा औरअस्थिका भन्नणा और चर्मका उखेड़ना इनकेविषे दशरात्र वज्र पानकरै जेकर स्वस्थ गौ होजावे ॥ १ ॥ अब वज्रका लक्षणकहते हैं गोमूत्रेति गोमूत्र कर्के युक्त जो यवोंका काडा तिसनूं पीवे एह एक दिनका कृच्छ्र व्रत अंगिरानें आपकिहाहै संपूर्ण पापोंकों दूर कर्त्ता है और दिव्यहै और नाम कर्के वज्र किहाहै ॥ २ ॥ इसमें और विशेष कहतेहैं अन्यत्रेति अन्यत्र क्या औरके मत विषे अंकन और लक्ष्म और वाहन और मोचन इनां विषे दोष नहिंहै और सायं काल विषे बंधन वास्ते जो रोकणा और बन्नणा इनां विषे भी दोष नहिं है क्योंकि दूसरेके क्षेत्रमे न पडणे वास्ते बंधन किहाहै ॥ ३ ॥ इसविषे जो सायं पदहै सो दूसरेके क्षेत्र विषे गौका जाणा तिसका उपलक्षण जानणा । अब श्लोकका अर्थ

अंगिराः॥ शृंगभंगेस्थिभंगेवाचर्मनिर्मोचनेपिवा दशरात्रंपिवेद्वज्रंस्वस्थासा यदिगौर्भवेत्॥ १ ॥ गोमूत्रेणसमायुक्तंयावकंचोपयोजयेत् एकाहेनैवकृच्छ्रो यमुक्तश्चांगिरसास्वयम् सर्वपापहरोदिव्योनाम्नावज्रइतिस्मृतः ॥ २ ॥ अन्यत्रांकनलक्ष्मभ्यांवाहनेमोचनेपिवा सायंसंगोपनार्थंतुनदुष्येद्रोधबंधयोः ३ ॥ अत्रसायमितिपरकीयक्षेत्रपाताद्युपलक्षणार्थम् । वृषार्थमंककरणेचिन्ह करणेच वाहनादिना चर्मनिर्मोचनेच सायं रक्षार्थरोधबंधनयोः शृंगभंगादि न दुष्येत् शृंगभंगादौ न दोष इत्यर्थः। अंकनंतप्तत्रिशूलादेर्लक्ष्म कुंकुमादेरित्यपिकेचित् । तथाचमाधवः ॥ अंकनंतप्तलोहादिना स्थिरचिन्हकरणं लक्ष्म गोमयादिनातात्कालिकचिन्हम् अत्रवाहनमोचनयोःशास्त्रविहितत्वात् सांकलक्ष्मयोर्वाहने मोचने तु दोषएव शास्त्रनिषिद्धत्वादिति

स्पष्ट कर्के कहतेहैं वृषेति वृषवास्ते अंक करणे विषे और चिन्ह करणे विषे वाहनादिकर्के चर्म उखेडने विषे और सायं काल रक्षा वास्ते जो रोकणा और बन्नणा इनां विषे शृंगभंगहोवे तां दोष नहिंहै ॥ अब मतांतरकहतेहैं अंकनामिति अंकन क्या ताये होए त्रिशूलादियोंका लगाणा एह कैयोंका मतहै इसीमें माधवजी कहतेहैं अथवा अंकन नामहै तायेहोए त्रिशूलादि कर्के स्थिर चिन्ह बनाणा और लक्ष्महै गोमयादिकर्के तात्कालिकचिह्नकरणा इह्नां वाले बैलांते होरनां बैलां विषे वाहन विषे और मोचन क्या भारस्थापन विषे दोष नहिं क्योंकि तिनके वाहनादि विषे शास्त्रका निषेध नहिं और अंकनाचिन्ह वालेआं विषे वाहनादिविषे शास्त्रका निषेधहै इसीका स्पष्टअर्थहै

यदीति जेकर कहे जो प्रयोजनइनांतें विना बंधनादिकरणांतिसतें अकाल मृत्युहोवे तां दोषहै तिस विषे दशरात्र वज्रव्रतकरे। परंतु इसविषें एहविचारहै जो तीसादिनका वज्रव्रतहै तिसविषें स्मृतियोंनें १२वारां धेनु दानका प्रत्याम्नाय किहाहै सो व्रतप्रकरणमें देखणे योग्यहै इसकारणतें तिस व्रत विषें द्वादश१२धेनुकर्के मिलित जो महीनेका गोमूत्रयावकव्रत तिसका तीसरा भाग होणेंतें चार ४ धेनुदेवें ॥ अब घातकों चारप्रकारकर्के पराशरजीकहतेहैं ॥ रोधेति रोकणा और बन्नणा और योक्त्र और घात एह चारप्रकारका वधका निमित्तहै इनके लक्षण अग्गे कहेंगे एकेति रोकणेंविषें एकपादव्रत करे और बन्नणेंविषें द्विपादव्रत करे और योक्त विषें त्रिपाद व्रत करे और घातविषें

यदितूक्तप्रयोजननिरपेक्षबंधनादिकारितोऽकालिकोमृत्युर्भवति तदा दोषोभवत्येव दशरात्रवज्रव्रते धेनुद्वादशसंकलितमासगोमूत्रयावकव्रततृतीयभागत्वाद्धेनुचतुष्टयंदेयमिति ॥ घातस्यचातुर्विध्यमाहपराशरः ॥ रोधबंधनयोक्त्राणिघातश्चेतिचतुर्विधम् वधनिमित्तमितिशेषः । एकपादंचरेद्रोधेद्वौपादौबंधनेचरेत् योक्त्रेपुचत्रिपादंस्याच्चरेत्सर्वंनिपातने ॥ १ ॥ अत्रैकपादादिव्यवस्था पराशरांगिरःसंवर्त्तापस्तंवोक्तानांप्राजापत्यमासद्वयकृच्छ्रपक्षकृच्छ्रषोडशदिनसाध्यकृच्छ्रादीनां निर्गुणवनस्थगुणवतांगोर्बालवत्सायाश्चविषयत्वेन माधवेनोक्ता ज्ञेया ॥

संपूर्ण व्रतकरे।१। इसविषें माधवजीकी बनाई होई व्यवस्था इसतरां जानणी पराशरजीनेंकहाहै कि निर्गुण पुरुषकी गौ मृतहोवे इसविषें प्राजापत्यव्रतके ही एकपादादि जानणें और अंगिराजीने किहाहै कि वनविषें स्थितहोणवाले जो ऋषि तिनकी गौ मृतहोवे उसमें मासद्वयकृच्छ्र व्रतके एकपादादिजानणें और संवर्त्तजीनें कहाहै कि गुणवाले पुरुषकी गौ मृत होवे तां पक्षकृच्छ्र व्रतकेपादादि जानणे और आपस्तम्बजीने कहाहै कि बालहै बच्छा जिसका ऐसी गौ मृत होवे उसमें १६ सोलां दिनां कर्के साध्य जो कृच्छ्र तिसके पादादि जानणे ॥ अब रोधादिचारोंका अर्थ कहतेहैं ॥

जो सुमंतुजीनेकयाहे सो कहतेहैं परिवित्ति श्रौर परिवेत्ता श्रौर कन्या श्रौर दाता श्रौर याजक एह संपूर्ण वारां १२ रात्रि सत्तु पानकरें श्रौर ब्राह्मणोंकी तृप्ति करवावें तद शुद्धहोतेहैं श्रौर तिसकन्या नू पुनर्भू कहतेहैं फेर इसनू विवाह लेवे एह क्षत्रियादियोंके असमर्थ वालक विषे जानणा क्यों कि थोडाप्रायश्चित्त होणेतें ॥ अब इसतें अधिक प्रायश्चित्त प्रचेताजीकहतेहैं परिवित्तीति परिवित्ति परिवेत्ता श्रौर पर्य्याहित पर्याधाता अग्रेदिधिषूपति दिधिषूपति एह संपूर्ण प्राकृत वर्ष तकब्रह्मचर्य धारण करें श्रौर ब्रह्महत्याका व्रत करें प्राकृत नाम सठ ६० उपर त्रय सौ ३० दिनकर्के युक्त श्रौर स्वाधीनहै आरंभ जिसका असें वर्षकाहे श्रौर स्वाधीनारंभ उसकोकहतेहैं कि जिसदिन जिसको इच्छा होवे उसी दिनसे प्रारंभकरणा श्रौर विशेषकहतेहैं कि दत्तकादिपुत्रोंको एह परिवित्ति परिवेत्तादोष नहिं है इसमेंवचनहै भीति मात्रयांका पुत्र श्रौर दत्तपुत्र श्रौर पितृव्यतनय इनांको दार

यत्तुसुमंतुनोक्तम्। परिवित्तिपरिवेत्तृकन्यादातृयाजकानांद्वादशरात्रंसक्तुपानं ब्राह्मणतर्पणंच तांपुनर्भुवमित्याचक्षतेभूयश्चैनामभिगच्छेदिति तत्क्षत्रियाद्यसमर्थवालकविषयम् ॥ प्रचेताः॥परिवित्तिपरिवेत्तृपर्याहितपर्याधात्रग्रेदिधिषूदिधिषूपतीनां प्राकृतंसंवत्सरंब्रह्मचर्यंब्रह्महव्रतम्। प्राकृतंपष्ठ्युत्तरशतत्रयदिनमितंस्वाधीनारंभकंवत्सरमित्यर्थः।दत्तकादीनांतुनायंदोषः ॥ भिन्नोदरेचदत्तेचपितृव्यतनयेतथा दाराग्निहोत्रसंयोगेनदोषः परिवेदने ॥ इतिगौतमस्मरणात्। भिन्नोदरइतिसापत्नभ्रातृविषयम् दत्तेचेति म[redacted]कुलेज्येष्ठभ्रातृसत्त्वेनदत्तकस्यविवाहादौपरिवेत्तृत्वं नापिज्येष्ठस्य प[redacted]रिवि[redacted]व मित्यर्थः पितृव्यतनयइति देवरेणोत्पादितस्यभ्रातुःक्षेत्रजपुत्रस्य[redacted]विवाह[redacted]दौ देवरपुत्रादेः परिवेत्तृत्वादिकंनेत्यर्थः ॥ अत्रपराशरः ॥ पि

क्या स्त्री श्रौर अग्निसंयोगविषे परिवित्ति परिवेत्तादोषनहिंहै ॥ १ ॥ एह गौतमस्मृतिमेंकयाहै श्रौर दत्तक आदि पुत्रोंकेलक्षण ग्रंथांतरसें जानणे इसमेभी भिन्नोदर एह सापत्न भ्रातृकेविषें जानणा श्रौर सापत्नभ्राता उसको कहतेहैं कि जिनकापिता एकहै श्रौर माता दोहैं ॥ अब जिसप्रकार दत्तकादोष आउता हैं इसका उद्घाटन कर्के दूर कर्तेहैं दत्तेचति एह पिता के कुल विषें वडे भ्राताके होयां दत्तक पुत्रको विवाहादि विषें परिवेत्तृत्व नहिं है श्रौर ज्येष्ठ भ्राताको परिवित्तित्व नहिंहै पितृव्यतनय इति देवर कर्के उत्पन्न जो भ्राताका क्षेत्रज पुत्र तिसके विवाहादि विषें देवरपुत्रादियोंको परिवेत्तृत्वादि दोष नहिं है एह अर्थ भया है इसजगा पितृव्यतनय चाचे के पुत्रकानाम नहिं इसीवास्ते इसशब्दका अर्थ कीताहै इसी विषें पराशर ऋषि जी कहतेहैं

परिवित्तिरिति परिवित्ति और परिवेत्ता और जिसकर्के परिवित्ति दोषहोयाहै अर्थात् कन्या और दाता दानकरणेवाला और यज्ञकरवाणेवाला एह पञ्जनरककों प्राप्तहोतेहैं १ एक कृच्छ्रव्रत परिवेत्ता करे और एककृच्छ्र परिवित्ति करे और एक कृच्छ्र कन्याकरे कृच्छ्र और अतिकृच्छ्रव्रत दाता करे और हवनकरवाणेवालेको चांद्रायणव्रतकरणेयोग्यहै २ इसमे विशेषकहतेहैं कि कुब्ज और वामना और नपुंसक और स्खलितवाणीवाला और जडजन्मांध बोला मूक इनांको परिवित्ति परिवेत्ता दोष नाहिं हैं ३ पितृव्येति पितृव्यपुत्र जो पिच्छे किहाहै और मात्रयांका पुत्र और परस्त्री का सुत इनांको दारसंयोगमे वा अग्निहोत्र विषे परिवित्ति परिवेत्ता दोष नहिंहै ४ जेकर ज्येष्ठ भ्राता स्थितहोवे तां अग्न्याधान न करे वा आज्ञालेकर्के करलेवे तां दोषनहिं है एह शंख जी का

परिवित्तिः परिवेत्ता ययाचपरिविद्यते सर्वेतेनरकंयांतिदातृयाजकपंचमाः १ द्वौकृच्छ्रौपरिवेत्रोस्तुकन्यायाःकृच्छ्रएवच कृच्छ्रातिकृच्छ्रौदातुस्तुहोता चांद्रायणंचरेत् २ कुब्जवामनषंडेषुगद्गदेषुजडेषुच जात्यंधेबधिरेमूकेनदोषःपरिविंदतः ३ पितृव्यपुत्रःसापत्नःपरनारीसुतस्तथा॥ दाराग्निहोत्रसंयोगेनदोषः परिवेदने ४ ज्येष्ठोभ्रातायदातिष्ठेदाधानंनैवकारयेत् अनुज्ञातस्तुकुर्वीतशंखस्यवचनंयथा ५ अत्रेदमपिविचार्य्यम् परिवेत्ताऽनुजोऽनूढे ज्येष्ठइत्यत्र ज्येष्ठपदं स्वजन्मतःपूर्वजन्मपरं नतुप्रथमोत्पन्नपरम् तेनभ्रातृत्रये प्रथमोत्पन्ने कृतविवाहे मध्यमेऽकृतविवाहेतत्कनिष्ठेन विवाहे कर्त्तव्ये परिवेदनंभवति पूर्वजन्मनोऽकृतविवाहत्वात् यदातुप्रथमोत्पन्नोऽकृतविवाहोमध्यमस्तुकृतविवाहस्तदापितत्कनिष्ठेन विवाहे कर्त्तव्येत्रयाणांदोषः एवंभ्रातृचतुष्टयादावपिज्ञेयम् इतिपरिवेदनादिप्रायश्चित्तम् ॥

वाक्यहै ५ इसविषे एहभी विचारणेयोग्यहै कि( परिवेत्ताऽनुजोऽनूढेज्येष्ठे दारपरिग्रहात) इस श्लोक विषे ज्येष्ठ पद अपणे जन्मतें पूर्वजन्मपरजानणा प्रथमकी उत्पत्ति पर नहिं जानणा ॥ तिसकर्के त्रय भ्राताविषे प्रथमोत्पन्नने विवाह कीताहै और मध्यम भ्राताने विवाह नहिं कीता और तिसके छोटे भ्राताकें विवाह करणे विषे परिवित्ति परिवेत्ता दोषहै किसतें वडे भ्राताकों विवाह नहिं करणेतें जेकर प्रथमोत्पन्नने विवाह नहिं कीता है और मध्यम भ्राताने विवाह कीता है तां भी तिसके छोटे भ्राताके विवाह करणेविषे तिन्नां भ्रातांकों दोषहै इसी प्रकार चार भ्रातादिके विषे भी जानणे योग्य है एह परिवेदनआदि प्रायश्चित्त समाप्तहोया

अव कन्या दूषण विषे प्रायश्चित्त कहतेहैं तदिति तिसका स्वरूप पिछे उपपातकोंकी गणना विषे कहाहै तिसमें शंखजी कहतेहैं कन्येति कन्या दूषण करण वाला और अमृतवल्लीका रस वेचनवाला वर्ष रोजका कृच्छ्र व्रत करे परंतु तिसविषे समान वर्णकी कन्या दूषणमें चांद्रायण वा त्रय महीनेकाव्रतकरे और आनुलोम्यकरके असवर्ण कन्याके दूषणमें अर्थात् ब्राह्मणक्षत्रियादिकी कन्या दूषणमे और क्षत्रियादिक वैश्यादिकी कन्यादूषणमे और वैश्य शूद्रादिकीकन्या दूषणमें महीनारोज जल पान करे वा प्राजापत्य करे और क्षत्रीको ब्राह्मणकी कन्या दूषणमें वैश्यको ब्राह्मणक्षत्रीकी कन्या दूषणमें वर्ष रोज कृच्छ्र व्रत करणाचाहिए अवइसीमें अपने धर्म्म शास्त्रके

अथकन्यादूषणेप्रायश्चित्तम् तत्स्वरूपमुपपातकपरिगणनायामभिहितम् तत्रशंखः ॥ कन्यादूषीसोमविक्रयीचकृच्छ्रमब्दंचरेयातामिति तत्रसवर्ण कन्यादूषणे चांद्रं त्रैमासिकं वा आनुलोम्येनासवर्णकन्यादूषणे मासंपयः पानं कार्यंवा ॥ प्रातिलोम्येतुक्षत्रियवैश्ययोःकृच्छ्राब्दम् ॥ हारीतोपि ॥ कन्यादूषीत्याद्युपक्रम्य एते ग्रीष्मवर्षाहेमंतेषु क्रमेण पंचतपोऽभ्रावकाशजलशयनपूर्वकंमासंगोमूत्रयावकपानंकुर्युः शूद्रस्यतु विप्रादिकन्यादूषणे वध एव अत्यंताभ्यासे सवर्णस्यापिकृच्छ्राब्दम् सोमविक्रयी ॥ वृषलीपतिः

कौमारदारत्यागी शूद्रयाजकः ॥

द्वारा हारीतजीभीकहतेहैं कन्यादूषी इसते प्रारंभ करके वचनहै एह कन्यादूषण करणवालेतें आदि करके जो लोकहैं सो संपूर्ण ग्रीष्म वर्षा हेमंत ऋतुविषे क्रमकरके पंचतप अभ्रावकाश जलशयन पूर्वक महीनारोज गोमूत्र युक्त जवोंका पानकरें अर्थात् ग्रीष्ममें पंचाग्नि तपें वर्षाऋतुमे नग्नहोके वर्षामें स्थित रहें और हेमंत मे जलशय्या करें तद शुद्धहोतेहैं शूद्रको विप्रादिकी कन्या दूषण में मारदेणाहि योग्यहै और वहुत अभ्यास विषे समानवर्णवालेकोंभी वर्ष रोजका कृच्छ्र व्रत करणा उचितहै और अमृतवल्लीका रस वेचण वाला और वृषलीकापति और कौमार अवस्थामे स्त्री त्यागण वाला और शूद्रकों यज्ञ करवाण वाला ॥

गुरोरिति और गुरुके मारण वाला और पेष्टी मदिरातें भिन्न मदिराका पान करण वाला और ब्राह्मण वृत्तिके दूर करणवाला झूठा व्यवहार करणवाला मित्रसे द्रोहकरणवाला और शर णागत पुरुषको मारणवाला और वहु रूपिया एह संपूर्ण अज्ञानतें प्रवृत्त होण तां त्रय महीनेंका व्रतकरें ॥ और जेकर जाण कर्के करें तां छे ६ महीनेका व्रतकरें ॥ वहुतअभ्यासविषें वर्ष रोज का कृच्छ्रव्रत करें तद शुद्ध होतेहैं ॥ अव हारीति स्मृतिमें कहतेहैं कन्येति कन्याकोदूषण करण वाला अमृतवल्लीका रस वेचण वाला वृषलीका पति और कौमार अवस्थामे स्त्री त्यागण वाला पेष्टी मदिराते भिन्न मदिराका पान करण वाला शूद्रको यज्ञ करवाणवाला गुरुको मारण वाला नास्तिकवृत्तिवाला कीतें होए उपकारकों दूरकरण वाला झूठा व्यवहार करण वाला मित्र

गुरोःप्रतिहंतासुराभिन्नमद्यपोब्राह्मणवृत्तिघ्नः कूटव्यवहारी मित्रध्रुक् शर णागतघाती प्रतिरूपवृत्तिश्चैतेऽमत्या प्रवृत्तास्त्रैमासिकंव्रतंकुर्युः मत्याषा ण्मासिकम् अभ्यासेकृच्छ्राब्दम् ॥ हारीतस्मृतिश्च ॥ कन्यादूषीसोमविक्र यीवृषलीपतिः कौमारदारत्यागीसुराभिन्नमद्यपः शूद्रयाजको गुरोःप्रति हंतानास्तिकवृत्तिःकृतघ्नःकूटव्यवहारी मित्रध्रुक् शरणागतघातीप्रतिरूप कवृत्तिरित्येतेपंचतपोऽभ्रावकाशजलशयनान्यनुतिष्ठेयुर्ग्रीष्मवर्षाहेमंतेषुमा संगोमूत्रयावकमश्नीयुरिति ॥ प्रतिरूपकवृत्तिः ॥ अन्यरूपानुकर णेनर्जीविकासंपादकः ॥

साथ द्रोह करण वाला शरणागत पुरुषको मारण वाला प्रतिरूपक वृत्ति वाला एह संपूर्ण पंच तप अभ्रावकाश जलशयन करें अर्थात् ग्रीष्मवर्षा हेमंतऋतुमें महीनारोज गोमूत्रयुक्त जवोंका भक्ष णकरें ग्रीष्मऋतुमें पंचाग्नितपें वर्षाऋतुमें नग्नहोके वर्षामे स्थितरहें हेमंतमे जलशय्याकरें ॥ प्रति रूपकवृत्ति नाम और रूपकर्के जीविकाकरणवालेका है इसको भाषामे वहुरूपिया कहतेहैं सो अनेकरूपोंको वनाकर लोकोंकोप्रसन्नकर्के जीविकाकरदाहै अथवा जो सुंदर स्वरूपवा लीस्त्रीको देखकर तिसमेंवर्ते सोभी प्रतिरूपकवृत्ति कहिदाहै इसका प्रायश्चित्त पारदार्य्य मे हिहोविगा

एह शंख हारीत कीयां जो पीछे दो स्मृतियां हैं सो क्षत्रिय वैश्यके प्रातिलोम्य कर्के जो दूषण तिसविषे जोडनेयोग्यहैं एह मिताक्षरामेंकयाहै। एह कन्या दूषणादिका प्रायश्चित्तसमाप्त होया १६ ❀ अब वार्द्धुष्य और लवण क्रियाका प्रायश्चित्त कहतेहैं इसकाविव·ण पीछे उपपातकोंकी गणना विषे होचुकाहै तिस विषे (उपपातकशुद्धिःस्यादेवंचांद्रायणेनतु) इत्यादि याज्ञवल्क्यके कथन कीत्ते होए जो वृषभैकादशकागाश्च ॥ वा०एतदेवव्रतं कुर्युरित्यादि दो श्लोककर्के मनुजीने कथन कीत्ता होया जो त्रय महीनेका व्रत है तिसको करे एह जाति शक्ति गुणादियोंकी अपेक्षा कर्के जोडने योग्यहै अतिदेशवाक्यतें ॥ और जगा कहे होएकों दूसरी जगामें कथन करणाको अतिदेश किहाहै ॥ तिसविषे लवणक्रिया क्या लवणके उत्पत्तिकरणेकी रीति जानणी तिसविषे भी एहि प्रायश्चित्त विधि जानणी ॥ मिताक्षराकार तो कुछ इस विषे विलक्षण कहतेहैं वार्द्धुष्येति वार्द्धुष्य और लवण क्रिया विषे मनु और याज्ञवल्क्यके कथन कीत्ते होए जो सामान्य उपपातक

शंखहारीतस्मरणद्वयंक्षत्रियवैश्ययोःप्रातिलोम्येन दूषणे योज्यमितिमिताक्षरा इतिकन्यादूषणादिप्रायश्चित्तम् ❀ १६ अथवार्द्धुष्यलवणक्रियाप्रायश्चित्तम् तच्चोपपातकगणनायांविवृतंप्राक् तत्रचांद्रादिष्वेकं त्रैमासिकंवा जातिशक्तिगुणाद्यपेक्षयायोज्यम् अतिदेशवाक्यात् लवणक्रिया लवणोत्पादनं तत्राप्येवं ध्येयम् मिताक्षरायांतु वार्द्धुष्यलवणक्रिययोर्मनुयोगीश्वरोक्तसामान्योपपातकप्रायश्चित्तानि जातिशक्तिगुणाद्यपेक्षयायोज्यानीति इतिवार्द्धुष्यादिप्रायश्चित्तम् १७ ❀ अथब्रह्मचारिणोव्रतलोपेप्रायश्चित्तम् ॥ तत्रमनुः अवकीर्णीतुकाणेनगर्दभेनचतुष्पथे पाकयज्ञविधाने नयजेतनिर्ऋतिंनिशि १

के प्रायश्चित्त सो जाति शक्ति गुणादियोंकी अपेक्षा कर्के जोडने योग्यहैं अर्थात् जैसी जाति और जैसी शक्ति और जैसा गुण होवे तिनांको तैसाही प्रायश्चित्त करवाणा योग्य है जैसे ब्राह्मणको अधिक क्षत्रियादिको न्यून और समर्थको अधिक असमर्थको न्यून गुणवान्को अधिक निर्गुणको न्यून सोभी प्राजापत्यसें चांद्रायण अधिक और चांद्रायणसे पराक इत्यादि जाण लेणे एह व्याजले कर्के और लूण वनाकरजीविका करणी इनका प्रायश्चित्त पूराहोया ❀॥ १७॥ इसमे एभी जानणे योग्य है कि लवण क्रिया मनुजीके मतमैं नहि किंतु याज्ञवल्क्य के मतमे है ॥ अब ब्रह्म चारिके व्रत लोप विषे प्रायश्चित्त कहतेहैं तिस विषे मनुजीका वाक्यहैं अवकीर्णीति अवकीर्णी पुरुष काणे गधे कर्के चुरस्ते विषे पाकयज्ञके विधान कर्के रात्रि विषे निर्ऋति देवताका पूजन करे॥ १॥

अव इसीका अर्थ स्पष्टकर्के कहतेहैं अगे कहणाहै लक्षण जिसका ऐसा जो अवकीर्णी ब्रह्मचारी सो रात्रिको चुरस्ते विषे पाकयज्ञ तंत्र कर्के निर्ऋति नाम देवताका यज्ञ करे और पशु के अभावविषे चरु कर्के यज्ञ करे अथवा निर्ऋतिनूं वणाकर्के चरुसें पूज्ये फेर तिसका हवनकरे इनां नामां कर्के कामायस्वाहा कामकामायस्वाहा निर्ऋत्यैस्वाहा रक्षोदेवताभ्यःस्वाहा एह वसिष्टस्मृतिमें कहाहै परंतु एह अशक्त विषयविषे जानणा और समर्थ पुरुषको ऐसाकरणाचाहिए कि अवकीर्णी गर्द्दभ कर्के निर्ऋतिका चुरस्ते विषे यज्ञ करे तिस गर्द्दभका चर्म सहित वालोंके धारण करे फेर लोहेके पात्रविषे सत्तां ७ घरांते भिक्षा करे कर्म्म नूं कथन करता होया कि मैं अवकीर्णी हां ऐसाकथन करता होया भ्रमे तद वर्ष कर्के शुद्धहोताहै ॥ एह पूर्वोक्त गौतम जी

अवकीर्णीवक्ष्यमाणोब्रह्मचारी रात्रौ चतुष्पथे पाकयज्ञेन तंत्रेणनिर्ऋतिसंज्ञितांदेवतांयजेत पशोरभावेचरुणायष्टव्यम् निर्ऋतिंवाचरुंनिर्वपेत् तस्य जुहुयात् कामायस्वाहा कामकामायस्वाहा निर्ऋत्यैस्वाहा रक्षोदेवताभ्यःस्वाहेतिवसिष्ठस्मरणात् एतच्चाशक्तविषयम् । शक्तस्यतुगर्द्दभेनावकीर्णीनिर्ऋतिंचतुष्पथेयजेत् तस्याजिनमूर्ध्ववालंपरिधायलोहितपात्रेसप्तगृहान् भैक्ष्यं चरेत्कर्म्माचक्षाणः संवत्सरेणशुद्ध्यतीतिगौतमोक्तोवार्षिक तपः समुचितः पशुयागश्चरुर्वाद्रष्टव्यः। अपरार्के॥ रात्रिपदेनकालः सचामावास्यायाः। उक्तंहितैत्तिरीयके। योब्रह्मचार्य्यवकिरेदमावास्यायांरात्र्यामग्निंप्रणीयोपसमाधायेत्यादि ब्रह्मचार्य्यत्रोपकुर्वाणोनैष्ठिकश्चसचयोपितंगत्वाऽवकीर्णीभवति। तथाचयाज्ञवल्क्यः। अवकीर्णीभवेद्गत्वाब्रह्मचारीतुयोपितम् गर्द्दभंपशुमालभ्यनैर्ऋतंसविशुद्ध्यतीति अत्रव्याख्या चरमधातोर्विसर्गोऽवकीर्णम् तद्यस्यास्तीतिसोऽवकीर्णी सनिर्ऋतिदैवत्येन गर्द्दभपशुना यागंकृत्वाविशुद्ध्यति ॥

का कथन कीताहोया वर्ष रोजका तपके उचित पशुयाग कयाहै वा चरु देखणें योग्यहै ॥ अपरार्कमें कयाहै कि रात्रि पदकर्के काल जानणा सो अमावास्याका है इसमें सम्मति देतेहैं तैत्तिरियकइति सोई तैत्तिरीय उपनिषद्में कहाहै कि जो ब्रह्मचारी भ्रष्टहोजावे सो अमावास्याकी रात्रिविषे अग्निमें हवनकरे इत्यादि जानणा ॥ परंतु ब्रह्मचारी चारप्रकारकेहैं सो इसविषे उपकुर्वाण और नैष्ठिकका ग्रहणहै सो एह स्त्री साथगमनकरे तां अवकीर्णी होतेहैं ॥ तैसेंहि याज्ञवल्क्य जीनें कयाहै ॥ अवकीर्णीति ब्रह्मचारी स्त्री साथ गमन करे तां अवकीर्णी होताहै और निर्ऋतिहै देवता जिसका ऐसे गर्दभ पशुका आलंभन करे तां शुद्ध होताहै अर्थात् निर्ऋति देवता के निमित्त गर्द्दभ पशूनूं मार कर्के शुद्ध होता है इस विषे इसकी एह व्याख्या है कि अंत धातुके त्यागणेको अवकीर्ण कयाहै सो विद्यमान है जिसविषे सो अवकीर्णीहै सो निर्ऋति देवताके निमित्त गर्द्दभ पशु कर्के यज्ञ करे तो शुद्धहोताहै ॥

अव इसमे शास्त्रार्थ कर्तेहैं गर्द्दभेति कि गर्द्दभको पशुत्वकेसिद्ध होयांभी अर्थात् गर्द्दभको आलभ करे इस वचनतें भी पशुका अर्थ प्रतीत होताहै फेर पशु ग्रहण जो कीयाहै सो अथपशु कल्प इत्यादि आश्वलायन के कहे होये गृह्य सूत्रमें जो पशु धर्म्म तिसकी प्राप्ति वास्तेहै सो पंद्रां सूत्र उसी जगाते देखणेयोग्यहैं अवकीर्णिकालक्षणमनुजीनेंभी कयाहै कामतइति व्रत विषे स्थित जो ब्राह्मण अर्थात् ब्रह्मचरी तिसका इच्छातें वीर्य्य स्खलित होवे तां व्रतका उल्लंघन कयाहै धर्म्म के जानणें वाले ब्राह्मवादियोंनें १ ब्रह्मचर्य्यका अतिक्रम अवकीर्ण रूप हि जानणा इसमें हवनका विधान भी मनु जी नें कयाहै हुत्वाति (अंतत और समेति ) इस ऋचा कर्के विधिनें होमा नू अग्निविषे हवन करे और वात इंद्र गुरु वन्हि इनांको घृत कर्के आहुतियां देणें योग्यहैं । १ अव इसीका अर्थ स्पष्ट कर्के कहतेहैं तिसतें अनंतर निर्ऋति देवताके तांइ गर्द्दभ

गर्द्दभस्य पशुत्वेसिद्धेपिपुनः पशुग्रहणमथपशुकल्पइत्याश्वलायनादिगृह्योक्तपशुधर्म्मप्राप्त्यर्थम् तत्रोत्तरतोऽग्नेरित्यादिपूर्वेणसहपंचदशसूत्रीततएवानुसंधेया।अवकीर्णिलक्षणंमनुनापिदर्शितम् कामतोरेतसःसेकंव्रतस्थस्यद्विजन्मनः अतिक्रमंव्रतस्याहुर्धर्म्मज्ञाब्रह्मवादिनइति व्रतस्यब्रह्मचर्य्यस्यातिक्रममवकीर्णरूपम् हवनविधानमपितेनैवोक्तम् हुत्वाग्नौविधिवद्धोमानंततश्चसमेत्यृचा वातेंद्रगुरुवह्नीनांजुहुयात्सर्पिषाहुतीः १ अस्यार्थः ततोनिर्ऋत्यै गर्द्दभवपादिहोमान्यथावच्चतुष्पथे कृत्वा तदंतेसमासिंचंतुमरुतइत्येतयाऋचा मारुतेंद्रबृहस्पत्यग्नीनांघृतेनाहुतीर्जुहुयादिति ॥ एतद्धोमहेतुमाहसएव मारुतंपुरुहूतंचगुरुंपावकमेवच चतुरोव्रतिनोऽभ्येतिब्राह्मंतेजोऽवकीर्णिनः ॥ १ ॥ अस्यार्थः ॥ व्रतचारिणोवेदाध्ययननियमानुष्ठानजं तेजः तदवकीर्णिनःसतो मरुदिंद्रबृहस्पतिपावकांश्चतुरः संक्रामति अतस्तेभ्यआहुतीर्जुहुयादितित्याज्याहुतेरयमनुवादः अत्रत्रिषवणस्नानमेककालभोजनमपियावद्व्रतसमाप्ति

की निज का हवन चुरस्ते विषे विधिनें कर्के तिसतें उपरंत समासिंचंतुमरुत इस ऋचाकर्के वायु और इंद्र और वृहस्पति और अग्नि इनांका घृतकी आहुतीनें अच्छी तरह हवनकरणेंयोग्यहै इसी हवनविषें मनुजी हेतु कहतेहैं मरुतइति वायु इन्द्र वृहस्पति अग्नि एह जोचार हैं इनांको व्रति अवकीर्णिका जो ब्राह्म तेजहै सो प्राप्त होताहै १ अव इसीका अर्थ स्पष्ट कर्के कहतेहैं व्रतचारि पुरुषका वेदका पडना और नियम और अनुष्ठान इनांते उत्पन्न होया जो तेज सो अवकीर्णिका मरुत् इंद्र वृहस्पति अग्नि इनां चारां को प्राप्त होताहै इस कारणतें तिनांके तांई आहुतियांदेवे एह त्याज्य आहुतीका अर्थात् देणे योग्य जो आहुतियांहैं तिनका अनुवादहै इसविषें त्रयकाल स्नान करे और एक काल भोजन करे जवतक व्रत की समाप्ति नहिहै

तैसेंहि मनुजी कहतेहैं एतस्मिन्निति इस अवकीर्णरूप पापके प्राप्तहोयां गर्द्दभके चर्म को उपर लयकर्के सत्तां ७ घरांते भिक्षाकरे अपणे कर्म नूं कथन करदा होया अर्थात् मैं अवकीर्णी हां इसतरां कथन करे १ तिनां घरां ते प्राप्त होया जो भिक्षाका अन्न तिस कर्के एककाल भोजन करे और त्रय काल स्नान करता रहे इसी प्रकार एक वर्ष करदा रहे तां शुद्ध होताहै २ एह जो वर्षका व्रतहै सो वेदपाठ रहित ब्राह्मणकी स्त्री विषें अवकीर्णी होवे और वेदपाठीकी वैश्या विषें अवकीर्णी होवे तिस विषें जानणा जेकर सो दोए वेदपाठीकीयां स्त्रीयां होण अथवा ब्राह्मणी और क्षत्रियाणी आपही गुणवालीयां होण तिनांविषे अवकीर्णीहोवे तां त्रयवर्ष और दोवर्षका व्रत क्रमकर्के करे अर्थात् ब्राह्मणी मे त्रयवर्ष का व्रत क्षत्रियाणीमे दोवर्षका व्रत

तथाचमनुः॥ एतस्मिन्नेनसिप्राप्तेवसित्वागर्द्दभाजिनं सप्तागारांश्चरेद्भैक्ष्यं स्वकर्मपरिकीर्त्तयन्॥ १॥ तेभ्योलब्धेनभैक्ष्येणवर्त्तयन्नेककालिकम्॥ उपस्पृशंस्त्रिषवणंत्वब्देनसविशुद्ध्यति २ एतस्मिन्नवकीर्णरूपे एनसि पापे वार्षिकव्रतमिदमश्रोत्रियब्राह्मणपत्न्यां श्रोत्रियपत्न्यांवैश्यायांचज्ञेयम् यदातु तेश्रोत्रियपत्न्यौब्राह्मणक्षात्रियेस्वयमपिगुणवत्यौ तत्रावकीर्णीचेत्तदा द्विवार्षिकत्रिवार्षिकेक्रमेणद्रष्टव्ये। इदमेवाहतुःशंखलिखितौ। गुप्तायांवैश्यायामवकीर्णःसंवत्सरं त्रिषवणमनुतिष्ठेत् क्षत्रियायांद्विवर्षेब्राह्मण्यांत्रीणिवर्षाणीति। अवकीर्णनिमित्तंतुब्रह्महत्याव्रतंचरेत् चीरवासास्तुषण्मासांस्तथामुच्येतकिल्विषादित्यंगिरोवचनमकामतोऽवकीर्णे ईषद्व्यभिचारिण्यामवकीर्णेवाद्रष्टव्यम् अत्रसार्द्धसप्तधेनवः प्रत्याम्नाय इति शूलपाणिःएतद्विषय

एवाभ्यासेशातातपवचः॥

करणा और इसीको शंख लिखितजी अपनीस्मृतिमें कहतेहैं गुप्तायामिति तीसरे वर्णकी वैश्या विषें अवकीर्णीहोवे तां एकवर्ष पर्य्यंत त्रिकाल स्नान कर्के अनुष्टान करे और क्षत्रियाणी विषें दो वर्षका व्रतकरे और ब्राह्मणी विषें त्रय वर्षका व्रत करे तां शुद्ध होताहै॥ अब और कहतेहैं अवेति अवकीर्णीके प्रायश्चित्त करणवाला ब्रह्महत्याका व्रतकरे। ताडपत्रेद वस्त्र लगा कर छे ६ महीने का व्रतकरे तां पापने मुक्त होताहै १ एह अंगिरा जीका जो वचनहै सो नहिं इच्छातें अवकीर्णीविषें वा थोडीव्यभिचारिणी स्त्री विषें अवकीर्णी होवे तिसविषें जानणा जेकर एह व्रत न होसके तां साढियां सत्त गौयां दान करे अर्थात् तिनांका मुल्लदें देवे एह शूलपाणि नें कयाहै इसी विषयमें बहुत अभ्यासहोवें तां तिसविषें शातातपजीकावचनहै सो तिसीस्मृति सें जानणा

अब और मतकर्के भी इसविषयको कहतेहैं अथेति इसतें उपरंत अवकीर्णिका प्रायश्चित्त कहतेहैं ब्रह्मचारी जेकर अवकीर्णीहोवे तां चौथेपहर अष्टवर्ष तक भिक्षाका अन्न खावे इसप्रकार करे तां पवित्रहोताहै तैंसेंही पैठीनसिजीकहतेहैं अवकीर्णी गर्दभकेचर्मको धारणकरे और वर्ष तक प्राजापत्य व्रतकरे तिसके प्रायश्चित्तविषे ओंकार पूर्वक महाव्याहृतियोकर्के अर्थात् ओंभूःओंभुवः ओंस्वः इनांकर्के हवनकरे १ अथवा वर्षतकएककाल भिक्षाकाअन्न खावे २ वा चतुर्थकाल नियत कर्के भोजन करे और गायत्रीका जप करे ३ गायत्री जप भी वर्षराज तक करणा विशेषकहतेहैं स्वैरिणीति स्वैरिणी जो वृषल्यादि स्त्री तिसविषे अवकीर्णीहोवेतां सचैल स्नानकर्के जलदा घट ब्राह्मणके तांई देवे और वैश्याविषे अवकीर्णीहोवे तां चौथे काल भोजन करे और ब्राह्मणोंको भोजन देवे और घासका भार गौआंके तांई देवे और क्षत्रियाणीविषे अवकीर्णी होवे तां त्रिरात्रि

अथातोऽवकीर्णिप्रायश्चित्तंव्याख्यास्यामः । ब्रह्मचारीयदाऽवकीर्येत चतुर्थकालमष्टसंवत्सरान्भैक्ष्यंचरेदेवंपूतोभवतीति तथापैठीनसिरपि अवकीर्णी गर्द्दभाजिनंसंवसेत्संवत्सरंप्राजापत्यंचरेदिति तत्रप्रायश्चित्तम् महाव्याहृतिभिर्जुहुयादोंपूर्वकाभिःसंवत्सरं वानक्तंभैक्ष्यंचरेच्चतुर्थकालेनियतभुग्गायत्रींवाजपेदिति गायत्रीजपेपिसंवत्सरमितिसंवन्धः॥ स्वैरिणीवृपल्यादाववकीर्णश्चेत्तदासचैलस्नानमुदकुंभंदद्याद्ब्राह्मणाय वैश्यायांचतुर्थकालाहारोब्राह्मणान्भोजयेत् यवसभारंचगोभ्योदद्यात् क्षत्रियायांत्रिरात्रमुपोषितोघृतपात्रंदद्यात् ॥ ब्राह्मण्यांपड्रात्रमुपोषितोगांचदद्यात्गोष्ववकीर्णःप्राजापत्यंचरेत् पंडायामवकीर्णः पलालभारंसीसमापकंचदद्यादितिशंखलिखितोदितंकुर्यात् षंडावंध्या । वंध्यातुवृपलीज्ञेयावृपलीतुमृतप्रजा अपरावृपलीज्ञेया कुमारीयारजस्वलेति ॥ उशनाः ॥ एतच्चावकीर्णिप्रायश्चित्तंत्रैवर्णिकस्यापि ब्रह्मचारिणः ॥समानम् ॥ अवकीर्णीद्विजोराजावैश्यश्चापिखरेणतु इच्छाभैक्ष्याशिनोनित्यंशुद्धयंत्यब्दात्समाहिताइतिशांडिल्यस्मरणात्

उपवास व्रत कर्के घृत पात्रका दान करे तां शुद्ध होताहै ॥ ब्राह्मणीविषे अवकीर्णी होवे तां छे ६ रात्रि उपवासकर्के फेर गौ दान करे तद शुद्ध होताहै । और गौआंविषे अवकीर्णी होवें तां प्राजापत्यव्रत करे ॥ और पंडा विषे अवकीर्णीहोवे तां परालीका भार और एक मासासिक्का दान करे तां शुद्ध होताहै एह शंख लिखित स्मृतिमें कयाहोया प्रायश्चित्तकरणे योग्यहै ॥ षंडा नाम वंध्या स्त्री का है इसकोस्पष्टकरतेहैं वंध्या नाम वृपलीकाहै और जिसकी संतान मृत होजावे उसका नाम वृपली है जो कुमारी हि रजस्वला होवे उसका नाम भी वृपलीहै उशनामें कया है और व्यवस्था कहतेहैं एह अवकीर्णि का प्रायश्चित त्रयवर्णके ब्रह्मचारिके तुल्य है अवकीर्णी द्विजकया ब्राह्मण और राजा और वैश्य होवें तद गर्द्दभकर्के यज्ञ करे और भिक्षाका अन्न नित्यखावें तद वर्ष कर्के शुद्ध होताहै एह शांडिल्य जीका स्मरणहै

यदेति जदस्त्री संभोगके विना ब्रह्मचारी अपनीइच्छातें वीर्य स्खलितकरे और दिनविषे वा स्वप्न विषे करे तां तिसविषे नैर्ऋत यज्ञमात्र देखणे योग्यहै ॥ इसीको कहतेहें कि वीर्य्यका प्रयत्नतें त्याग दिन विषे वा स्वप्नविषे होवे तां नैर्ऋत यागमात्रकरे इसवासिष्टकर्के यज्ञ मात्रका अतिदेशहो णेतें अतिदेश कियाहै ब्रह्मचर्य्यका जिनां विषे ऐसे जो कृच्छ्र चांद्रायणादि व्रतांतर तिनां विषे भीजेकर अवकीर्णिहोवे तिसविषे पूर्वोकहि यज्ञमात्रकरणा अर्थात् गर्दभकाआलंभननहि करणा इसमे वचन कहतेहें व्रतेति व्रतांतरों विषें भी एही करणा एहतिसी वसिष्ठकर्के अतिदेश होणेतें अव स्वप्न विषें वीर्य्य स्खलितहोने मे मनुजी कहतेहैं ॥ स्वप्न इति द्विज ब्रह्मचारी वीर्य्यको इच्छाते विना स्वप्न विषे स्खलित करे तां स्नान कर्के सूर्य्यका पूजन करे और त्रयवार पुनर्मां)

यदा स्त्रीसंभोगमंतरेण कामतश्चरमधातुंविसृजति दिवाचस्वप्नेवाविसृजति तदानैर्ऋतयागमात्रंद्रष्टव्यम् ॥ एतदेवरेतसः प्रयत्नोत्सर्गे दिवास्वप्नेचे तिवासिष्ठेनयागमात्रस्यातिदिष्टत्वात् ॥ व्रतांतरेषुचकृच्छ्रचांद्रायणादिष्वति दिष्टब्रह्मचर्येषुच स्कंदने सत्येतदेव यागमात्रम् ॥ व्रतांतरेषुचैवमितितेनै वातिदिष्टत्वात् ॥ स्वप्नस्कंदनेतुमनुः ॥ स्वप्नेसिक्त्वाब्रह्मचारीद्विजःशुक्र मकामतः स्नात्वार्कमर्चयित्वात्रिः पुनर्मामित्यृचंजपेदिति १ यमोपि ॥ प्रकीर्यरेतःस्वप्नेतुब्रह्मचार्यप्यकामतः स्नात्वार्कमीक्ष्यप्रयतोगायत्र्यष्टशतं जपेत् १ तथा ब्रह्मचारीतुयोगच्छेत्स्त्रियंकामप्रपीडितः प्राजापत्यंचरेत्कृ च्छ्रमब्दमेकंसुयंत्रितः १ भूयोऽभ्यासविषयमेतत् ॥ वानप्रस्थादीनांचेदमे वब्रह्मचर्यखंडने अवकीर्णिव्रतंकृच्छ्रत्रयाधिकंभवति ॥ वानप्रस्थोयतिश्चै वस्कंदनेसतिकामतः पराकत्रयसंयुक्तमवकीर्णिव्रतंचरेदितिशांडिल्यस्मर णात् ॥ यस्तुसंन्यासीभूत्वागार्हस्थमिच्छतिचेत्तत्रसंवर्त्तोक्तंप्रायश्चितम्

इस ऋचाका जपकरे १ ॥ यम भी कहताहै प्रकीर्येति ब्रह्मचारी इच्छाते विना स्वप्नविषे वीर्य्य स्खलित कर्के सूर्य्यको देख फेर प्रयत्नते अष्टोत्तर शत गायत्रीका जपकरे १ तैसें हि और कह तेहैं ब्रह्मचारीति जो ब्रह्मचारी कामकर्के पीडितहोया २ स्त्री साथगमन करे तां समाधानहोकर्के वर्षरोजका कृच्छ्र प्राजापत्य व्रत करे तां शुद्धहोताहै १ एहबहुत अभ्यास विषय विषें जानणा वानप्रस्थादियांको एही ब्रह्मचर्यखंडनविषें कृच्छ्रत्रय हैं अधिक जिसविषें ऐसा अवकीर्णिका व्रत करणाउचितहै वचनकहतेहें वेति और वानप्रस्थ और यतिइनांकोइच्छातें वीर्य्यदेस्खलित होय। त्रयपराकव्रतकर्के युक्तजो अवकीर्णिकाव्रतहै सो करणा उचितहै एह शांडिल्यस्मृतिमें कयाहै १ जोसंन्यासीहोकर्के फेर गृहस्थकी इच्छा करे तिसविषे संवर्त्तजीका कया होआ प्रायश्चित्तकहतेहैं।

संन्यस्येति कोईक दुर्म्मतिपुरुष संन्यासी हो कर्के जेकर गृहस्थाश्रम स्वीकार करे सो अश्रांत होया २ छे ६ महीने का कृच्छ्र व्रतकरे १ इसीमें वासिष्ठजी कहतेहैं यस्त्विति जो संन्यासीहोकर्के फेर मैथुन करे सो सठ ६०००० हजार वर्ष विष्टाविषे कीडा होताहै १ पराशरजी भी कहतेहैं य इति जो प्रत्यवसित होया ब्राह्मण संन्यासतें दूर हो जावे और अनाशक होकर्के फेर हटजावे फेर गृहस्थकी इच्छाकरे १ सो पुरुष त्रयकृच्छ्र और त्रय चांद्रायण व्रत करे और संपूर्ण जातकर्म्मादि संस्कारोंकर्के शुद्धिको प्राप्त होताहै २ अब पिच्छले श्लोकका अर्थ स्पष्टकर्के कहतेहैं यइति जो प्रत्यवसित क्या संन्यासादि धर्म वाला होया और जो अनाशक क्या महीने आदि को अवधिकर्के अर्थात् महीनापर्यंत अन्न नहिंखाणा ऐसी प्रतिज्ञाकर्के फेर तिसनूं न करे एह अर्थहै ॥ तिसविषे ब्राह्मण को छे ६ महीनेका कृच्छ्रहै फेर संन्यास लयणा उचितहै ॥ और

संन्यस्यदुर्म्मतिःकश्चित्प्रत्यापत्तिंचरेद्यदि सकुर्यात्कृच्छ्रमश्रांतःपण्मासान्प्रत्यनंतरामिति १ प्रत्यापत्तिर्गृहस्थाश्रमस्वीकारः ॥ अतएववासिष्ठः॥यस्तुप्रव्रजितोभूत्वापुनःसेवेतमैथुनम् षष्टिवर्षसहस्राणिविष्टायांजायतेकृमिरिति १ पराशरोपि यःप्रत्यवसितोविप्रोप्रव्रज्यातोविनिर्गतः अनाशकोनिवृत्तश्चगार्हस्थ्यंचेच्चिकीर्षति १ सचरेत्त्रीणिकृच्छ्राणित्रीणिचांद्रायणानिच जातकर्मादिभिःसर्वैःसंस्कृतःशुद्धिमाप्नुयात् २ यःप्रत्यवसितःस्वीकृतसंन्यासादिव्रतइत्यर्थः । यश्चाऽनाशकोभूत्वामासाद्यवधिंकृत्वाऽनशनीभूत्वापुनर्निवृत्त इत्यर्थः ॥ तत्रब्राह्मणस्यपाण्मासिकःकृच्छ्रः पुनःसंन्यासः ॥ क्षत्रियस्यचांद्रायणत्रयम् ॥ वैश्यस्यकृच्छ्रत्रयमितिव्यवस्था ॥ वाविप्रस्यैवशक्तिसकृदभ्यासाद्यपेक्षया व्यवस्थितं प्रायश्चित्तत्रयंद्रष्टव्यम् तथातुरसंन्यासिनामपि ॥ यमेनापि ॥ प्रायश्चित्तमुक्तम्॥ जलाग्न्युद्बंधनभ्रष्टाः प्रव्रज्यानाशकच्युताः विषप्रपतनप्रायःशस्त्रघातच्युताश्चये १

क्षत्रीको त्रय चांद्रायण हैं ॥ और वैश्य को त्रय कृच्छ्र हैं ॥ इसमे ऐसी व्यवस्था जानणी अथवा ब्राह्मणको हि शक्ति और सकृत् क्या एकवार परावृत्ति और अभ्यासादिकी अपेक्षा कर्के व्यवस्थित जो पिछले त्रय प्रायश्चित्तहैं सो देखणे योग्यहैं ॥ शक्ति में छे ६ महीनेका कृच्छ्र व्रतकरणा ॥ और सकृत्में त्रयकृच्छ्र व्रत करणे ॥ और अभ्यासमें क्या वहुतवारमें त्रय चांद्रायण व्रत करणें ॥ तैसेंही जिसने आतुर समयमें संन्यास लेआ फेर राजीहोकर गृहस्थी होगया तिस विषे यमनेंभी प्रायश्चित्तकयाहै ॥ जलेति प्रायश्चित्तवास्ते जलविषे पडे वा अग्निविषे वा फाह लयणा इनांते भ्रष्ट होजावे और प्रायश्चित्तके अर्थ संन्यास लयणा और अनाशक क्या इतनें दिन अन्न नहिं खाणा ऐसा कह कर व्रती होवे और पीछे इनांते भ्रष्ट होवे वा प्रायश्चित्तके अर्थ विष पान करणा वा किसे जगाते डिगणा और शस्त्र सें मरणा इनांते भ्रष्ट होवे १

नेति एह संपूर्ण प्रत्यवसितनहिंहैं अर्थात् संन्यासादि व्रतोंसेंरहितहैं और संपूर्ण लोकोंतें वाहरहैं चांद्रायणकर्कैंवा दो २ तप्तकृच्छ्रव्रतकर्कैंशुद्धहोंतेहैं २ इसमै ऐसाजाणणा कि जो एह चांद्रायण तप्तकृच्छ्रात्मक दो प्रायश्चित्तहैं सो शक्त्यादिकी अपेक्षा कर्के व्यवस्थित जानणेंयोग्यहैं ॥ अब इसीमे विशेष कहतेहैं ॥ जीवन्निति प्रायश्चित्तके अर्थ अपणे आपनूं त्यागे फेर जीउंदा होजावे तिसमें वारां रात्रिका कृच्छ्र व्रत करे और त्रय रात्रि उपवास व्रत करे एह वसिष्ठकाकया होया जोवचनहै सो स्वीकार कीता जो शास्त्रीय मरण जिसने तिसकें मुड़ने विषे जानणा ॥ इसमे व्यवस्थाकरतेहैं ॥ तादिति जिसने व्रतके उद्यममे संकल्पकीताहै सो तिसकेहटणेविषे त्रयरात्रि व्रत करे ॥ और प्रवृत्तितेउपरंत हटणेविषे वारां १२ रात्रिका व्रतकरे एह व्यवस्था जानणी ॥ इसमें ऐसा विचारहै गुरुकी स्त्री साथ गमनकरणा और तिसके तुल्य जो अगम्यागमनहै तिस विषे प्रायश्चित्तको वहुत होणेते एह जो अव कीर्णीका व्रत है सो इनांते पृथक् स्त्रियां मे अवकीर्णी

**नैवैतेप्रत्यवसिताःसर्वलोकवहिष्कृताः चांद्रायणेनशुद्ध्यंतितप्तकृच्छ्रद्वयेनचे ति २ इदंचचांद्रायणतप्तकृच्छद्वयात्मकं प्रायश्चित्तद्वयं शक्त्याद्यपेक्षयाऽव्यव स्थितंविज्ञेयम् जीवन्नात्मत्यागीकृच्छ्रंद्वादशरात्रंचरेत्त्रिरात्रंचोपवसेदितिवा सिष्ठंतु स्वीकृतशास्त्रीयमरणस्यप्रत्यावृत्तौवोध्यम् । तदुद्योगसंकल्पमात्रात्प रावृत्तौत्रिरात्रम् प्रवृत्त्यनंतरपरावृत्तौद्वादशरात्रमितिव्यवस्था ॥ गुरुदार तत्समागम्यागमनेप्रायश्चित्तस्य गुरुतरत्वादिदमवकीर्णिव्रतंतद्व्यतिरिक्ताव कीर्णेद्रष्टव्यम ॥ नचलघुनाऽवकीर्णिव्रतेन गुरुदारादिगमनमहापातकोचि तप्रायश्चित्तवाधोविशेषविधानादितिवाच्यम् ॥ ब्रह्महननप्रकरणे ब्रह्मचा र्य्यादीनांद्वैगुण्यादेर्विधानात् ॥ अत्रागम्यागमननिमित्तंप्रायश्चित्तंनपृथक्का र्यंस्त्रियांब्रह्मचारिणोब्रह्मस्खलनस्यागम्यागमनेनांतरीयकत्वात् ॥ यत्र निमित्तेनिमित्तांतरंसमं न्यूनंवाऽवश्यंभावि तत्रनपृथङ्नैमित्तिकंप्रयुज्यते॥**

होवे तिसमे जानणा(प्रश्न)करतेहैं नचाति छोटा जो अवकीर्णीका व्रत है तिसने गुरुदारादि गमनका जो महापातकोके उचित प्रायश्चित्त सो वाधयाहै क्योंकि विशेषविधान होणेतें (उत्तर) ऐसा मत कहो किसतें ब्रह्महत्याके प्रकरण विषे ब्रह्मचार्य्यादियोंको द्विगुण प्रायश्चित्तके विधान होणेतें ॥ अर्थात् ब्रह्मचारीको हि अवकीर्णि व्रत है और इसीको महापातकोंमे दूणा व्रत है इसतें प्रतीत होया कि महापातकों वाला व्रत जुदाचाहिए॥ अव इसीमे और विचार करतेहैं इसमे अगम्यागमनका प्रायश्चित्त भी होणा चाहिए इसवास्ते कहतेहैं ॥ अत्रेति इस विषे अ गम्यागमन निमित्तप्रायश्चित्त पृथक् नाहिं करणा स्त्रीविषे ब्रह्मचारिके ब्रह्मस्खलन को अगम्यागमन कर्के अंतरीयक होणेंतें अर्थात् अवकीर्णि व्रत विषे हि अगम्यागमनकाभी व्रतहै जिस निमित्त विषे और निमित्त वरावर वा थोडा अवश्य होवेगा तिसके विषे पृथक् नैमित्तिक नाहिं होताहै

अब इसमें दृष्टांतकहतेहैं यथेति जैसें गौकेतांई लाठीग्गूरें तां कृच्छ्रव्रतकरे और लाठी आदिके प्रहारविषें अति कृच्छ्रव्रत करे और रुधिर निकालनेंविषें कृच्छ्रातिकृच्छ्र व्रत करे और जिसप्रहार तें अंदररुधिर होजावे तिसमें कृच्छ्रव्रत करे १ ऐसीआज्ञाहै तथापि इसरुधिर निकालनें निमित्त विषें गुरणादि जो निमित्त हैं सो अंतर स्थितहैं परंतु कृच्छ्र और अतिकृच्छ्र पृथक् नाहिं करी दें किन्तु कृच्छ्रातिकृच्छ्रहि करीदा है ऐसें हि और जगा भी जानणा ॥ जिसविषें अंतर्भाव का नियम नहिं हैं जैसा पर्वकालमें रजस्वला जो परस्त्री तिससाथ गमन करे इसमे ऐसाअभि प्रायहैं कि एह नियम नहिंहैं कि पर्व कालमेहि रजस्वलाहोतीहै किंतु तिसविनाभी हुंदीहै और परस्त्री विना भी पर्वमे गमन हुंदाहै तिसतें तद वडा दोषहै इत्यादियोंविषें निमित्त पृथक् जो

यथा अवगूर्य्यचरेत्कृच्छ्रमतिकृच्छ्रंनिपातने कृच्छ्रातिकृच्छ्रोऽसृक्पातेकृच्छ्रो भ्यंतरशोणितइत्यत्र शोणितोत्पादननिमित्तेऽवगूरणादिनिमित्तद्वयमवश्य मंतःस्थितं परन्तु कृच्छ्रमतिकृच्छ्रंचनपृथक्क्रियते अन्यत्राप्येवमेवोह्य म् यत्रांतर्भावनियमोनास्ति पर्व्वणि परस्त्रींरजस्वलांगच्छतीत्यादौ तत्र निमित्तानि पृथक्प्रयुज्यंते अत्रपूर्वपक्षसिद्धांतौमिताक्षरायांद्रष्टव्यौ व्रतां तरलोपेप्यवकीर्णिव्रतमतिदिशति मनुः अकृत्वाभैक्ष्यचरणमसमिध्यचपा वकम् अनातुरःसप्तरात्रमवकीर्णिव्रतंचरेदिति ॥ १ अथब्रह्मचारिव्रतलो पप्रायश्चित्तप्रसंगादन्यदनुपपातकपापस्याऽपिप्रायश्चित्तमाह याज्ञव ल्क्यः भैक्ष्याग्निकार्येत्यकृत्वातुसप्तरात्रमनातुरः कामावकीर्णइत्याभ्यांजु हुयादाहुतिद्वयम् ॥ १ ॥

डी दे हयण अर्थात् त्रयप्रायश्चित्त पृथक् २ करणे. ॥ इस विषें पूर्व पक्ष और सिद्धांत मि ताक्षरा विषें देखणेयोग्यहैं ॥ अब और व्रतके लोपविषें अवकीर्णीका व्रत दिखाईदाहै ॥ इस में मनु जी कहतेहैं ॥ अकृत्वेति अग्नि होत्र करण वाला पुरुष अनातुर क्या स्वस्थ चित्त वाला होया २ भिक्षा न करे और अग्नि नूं न जगावे तां तिस को सत्त ७ रात्रि पर्य्यन्त अवकी र्णीका व्रत करणे योग्यहै १ अब ब्रह्मचारिके व्रत लोपके प्रायश्चित्तप्रसंगतें और अनुपपातक पापकाभी प्रायश्चित्त याज्ञवल्क्यजी कहते हैं । भैक्षेति भिक्षा और अग्नि कार्य जेकर सत्तरा त्रि त्यागे तां ( कामावकीर्ण ) इनमंत्रों करके दो २ आहुतियांका हवन करे ॥ १ ॥

अब इसी श्लोक का अर्थ स्पष्ट कर्के कहतेहैं यस्त्विति जो ब्रह्मचारी सावधान होया २ निरंतर सप्तरात्रि भिक्षाअथवा अग्निकार्य त्याग देवे तां ॥ कामावकीर्णोऽस्म्यवकीर्णोस्मिकामकामाय स्वाहा ॥ इस मंत्र कर्के एक आहुती देवे और कामावपन्नोस्म्यवपन्नोस्मि कामकामायस्वाहा इसमंत्रकर्के दूसरी आहुतीदेवे तां शुद्ध होताहै इस तें उपरंत फेर समासिंचतुमरुतः समिंद्रःसं वृहस्पतिः संमायमग्निः सिंचंतांयशसाब्रह्मवर्चसेन इसमंत्रकर्के अग्निका उपस्थानकरे क्याउठकर्के इसमंत्रके अर्थका स्मरणकरे सो अर्थऐसाहै कि मरुतःक्या ४९ देवता और इंद्रऔर वृहस्पति और यम अग्नि एह सभ यशकर्के और ब्रह्म तेज कर्के मेरेविषे सिंचनकरण अर्थात् जो मेरा यश और ब्रह्म तेज नष्ट होगयाथा उसको पुनः स्थापन करण ॥ इसको स्पष्ट कर्के कहतेहैं कि भिक्षाकर्के गुरु सेवा होनीथी सो नहिहोई इसतें गुरुजीका अपराध होणेतें प्रायश्चित्त दिखाया है परंतु एह गुरु सेवादि जो कोई गृह निर्माणादि वड़ा कार्य तिस विषे खचित होणे कर्के भि

अस्यार्थः यस्त्वनातुरएव ब्रह्मचारी निरंतरंसप्तरात्रंभैक्ष्यमग्निकार्यंवात्यजतिअसौकामावकीर्णोऽस्म्यवकीर्णोऽस्मिकामकामायस्वाहा कामावपन्नोऽस्म्यवपन्नोऽस्मिकामकामायस्वाहा इत्येताभ्यांमंत्राभ्यामाहुतीर्हुत्वा समासिंचंतु मरुतः समिंद्रः संवृहस्पतिःसंमायमग्निःसिंचंतांयशसाब्रह्मवर्चसेनेत्यनेन मंत्रेणाग्निमुपतिष्ठेत इदंचगुरुपरिचर्यादिगुरुतरकार्यव्यग्रतयाअकरणेद्रष्टव्यम् ॥ यदात्वव्यग्रएवभैक्ष्याग्निकार्ये त्यजाति तदा अकृत्वाभैक्ष्यचरणमसमिध्य चपावकम् अनातुरःसप्तरात्रमवकीर्णिव्रतंचरेदितिमानवंद्रष्टव्यम् अत्रैववृहस्पतिः संध्यामुपास्योपस्थितःसावित्र्याः सहस्रेणादित्यमुपतिष्ठेत उत्क्रमाग्निकार्यंव्रतपत्याहुत्यातीतंसंपाद्योपस्थितंकुर्यात् ॥ यज्ञोपवीतादिनाशंतु हारीतेनप्रयाश्चित्तमुक्तम् मनोव्रतपतीभिश्चतस्रआज्याहुतीर्हुत्वापुनर्यथार्थंप्रतीयात् असकृद्भैक्ष्यभोजनेभ्युदितेऽभिनिर्मुक्तेवांते

क्षादिके न करणे विषे देखणे योग्य है ॥ जेकर तिसमे नहिं खचित होवें और भिक्षा और अग्नि कार्य त्याग देवे तां एह मनुजीका कथन कीता होया प्रायश्चित्त देखणे योग्य है । इस श्लोक का अर्थ पिछे कहा है इसी विषे वृहस्पति जी कहते हैं संध्यामिति प्रातःकालकी संध्या कर्के फेर उठ कर्के एक हजार गायत्री कर्के सूर्यकी स्तुति करे और उल्लंघन होया जो अग्नि कार्य तिसनूं ॥ व्रतपति ॥ इस मंत्र कर्के पिछलीया आहुतियां दे कर्के फेर उपस्थान करे और यज्ञोपवीतादिके नाश विषे हारीतजीनें प्रायश्चित्त कया हैं मन इति (मनोव्रतपतीभिः) इस मंत्र कर्के चार आहुतियां घृतकीयां दे कर्के फेर यथार्थ कर्के यज्ञोपवीत पावे भिक्षासें प्राप्त होया जो अन्न तिसके वहुत वार भक्षण विषे प्रायश्चित्तहै और सुत्ते होयां सूर्य उदय होवे वा अस्त होवे और वमन होवे तांभी प्रायश्चित्त करे

दिवेति दिनविषे शयनकरे. और नग्नस्त्रीके देखणेंविषे और नग्न होकरशयनकरे और श्मशानकों उल्लंघन कर्के घोडे उप्पर चड कर चले और पूज्य जो हैं गुर्वादि उनको प्रणामादि न करे एह जो संपूर्ण पूर्वोक्तहैं इनां विषे इनांहि पूर्वोक मंत्रां कर्के घृतकीयां आहुतियां देवे ॥ और अग्निके प्रज्वलित कर्दे होयां वृक्ष वा सर्पादियोंके मारणे विषे (यद्देवादेवहेडनम्) इत्यादि जो कूष्मांड मंत्र हैं इनांकर्के त्रयरात्रि घृतकर्के हवन करे॥ मणि और वस्त्र और गवादि इनांके दान लैणें में अष्ट सैंअधिक १००० हजार गायत्रीका जपकरे इतनींहिस्मृति हारीतजीकी है॥ अब इसीका अर्थ स्पष्टकर्के कहतेहैं ( मनोव्रतपनीभिः) मनोज्योतिः इत्यादिजो मंत्र हैं मनहै चिन्ह जिनांका और ; त्वमग्ने व्रतपाअसि ! व्रतहै चिन्ह जिसविषे इनांकर्के हवनकरे ॥ यथार्थ प्रती

दिवास्वप्ने नग्नस्त्रीदर्शने नग्नस्वापे श्मशानमाक्रम्य हयादीनारुह्य पूज्याति क्रमेचैताभिरेवाज्याहुतिभिर्जुहुयात्। अग्निसमिंधनेस्थावरसरीसृपादीनांवधे यद्देवादेवहेडनमितिकूष्मांडीभिस्त्रिरात्रमाज्यंजुहुयात् मणिवासोगवादीनां प्रतिग्रहेसावित्र्यष्टसहस्रंजपेदितिमनोव्रतपतीभिरिति मनोज्योतिरित्यादि॥ मनोलिंगाभिस्त्वमग्नेव्रतपाअसीत्यादिव्रतलिंगाभिरित्यर्थः यथार्थंप्रतीयादिति उपनयनोक्तमार्गेणसमंत्रकंगृह्णीयादित्यर्थः । अपरार्केपैठीनसिः नष्टेदंडकाष्ठेभैक्ष्यंदत्वाब्राह्मणायतदहरेवोपवसेत्कमंडलावप्येवमेव नष्टायांमेखलायांद्वेऋचावुद्धरेत्। इयंदुरुक्तेति । संवर्त्तः । भिक्षाटनमकृत्वायः स्वस्थएकोन्नमश्नुते अस्नात्वाचैवयोभुंक्तेगायत्र्यष्टशतंजपेत् १ उपासीतन चेत्संध्यामग्निकार्यंनचेत्कृतम् स्नात्वासूर्यसमभ्यर्च्यप्राणायामेनशुध्यति २

यात् इसकाअर्थ कहतेहैं यज्ञोपवीतमें कहा जो मार्ग तिसकर्के समंत्रक ग्रहणकरे ॥ अपरार्कमे पैठीनसिजी कहतेहैं नष्टइति ब्रह्मचारी दंड काष्ठके नाशहोयां भिक्षाकाअन्न ब्राह्मणांको देदेवे और उसदिन उपवासकरे और कमंडलुके नाशमेंभी ऐसेंहि करे ॥ ब्रह्मचारी तडागीके नाश होयां दो २ ऋचा का पाठ करे इयंदुरुक्ता इत्यादि ॥ संवर्त्त जी कहतेहैं भिक्षेति स्वस्थचित्त होया १ जो ब्रह्मचारी भिक्षाटन कर्के इकछाहि अन्न खावे और स्नान तें विना जो भोजन करताहै सो अष्टसे अधिक १०८ सौ गायत्री का जपकरे तां शुद्धहोताहै १ जो संध्या नकरे और अग्नि कार्य्य न करे तां स्नान कर्के सूर्यका पूजन कर्के और प्राणायाम करणेंतें शुद्ध होताहै २

दिवेति स्वस्थ चित्तवाला ब्रह्मचारी जेकर दिनविषे शयन करे तद स्नानकर्के सूर्यका पूजन करे और गायत्रीका अठसे अधिक सौ जप करे तदशुद्ध होताहे ३ जिस पुरुषनें यज्ञोपवीत विना संध्याकी तीहैसो ब्रह्मचारी स्नान कर्के समाधान होया २ अठसे अधिक हजार १००८ गायत्री का जप करे तदशुद्ध होताहै ४ जोपुरुष यज्ञोपवीत विना भोजन करदाहे सो अठसे अधिक १०० सौ गायत्रीका जप करे और एक प्राणायाम करे तद शुद्ध होताहै ५ यम जीकहतेहें सूर्य इति जो पुरुष सूर्यके उदय तक शयन करदाहै उसकानाम सूर्योदितहै और जो सूर्यके अस्ततक शयन करदाहै उसका नाम सूर्यनिर्मुक्तहै १ सो दोए ब्रह्मस्तेन कहेहैं अर्थात् वेदके चुराणे वालेहें दिन रात्रिके उपवास करणेंतेशुद्धहोतेहैं दशतें अधिक गायत्रीका पृथक् २ जपकरें २ अवइसीका अर्थ

दिवास्वपितिचेत्स्वस्थोब्रह्मचारीकथंचन स्नात्वासूर्यंसमभ्यर्च्यगायत्र्यष्टशतंजपेत् ३ ब्रह्मसूत्रंविनायेनसन्ध्योपास्तिर्यदाकृता गायत्र्यष्टसहस्रंतुजपेत्स्नात्वासमाहितः ४ ब्रह्मसूत्रंविनायस्तुभोजनंकुरुतेजनः गायत्र्यष्टशतेनैव प्राणायामेनशुद्ध्यति५। यमः। सूर्योदयेतुयःशेतेससूर्योदितउच्यते अस्तंगतेतुयःशेतसूर्यनिर्मुक्तएवसः १ ब्रह्मस्तेनावुभौसम्यगहोरात्रोपितौशुची गायत्र्यादशसाहस्रंकुर्यातामाह्निकंपृथक् २ सूर्योदितोहरुपोषितः सूर्यनिर्मुक्तोरात्रिमुपोषितःएवमुभावहोरात्रोपितौगायत्र्यादशाधिकंसहस्रजपमहानिकुर्याताम् वसिष्ठः। सूर्याभ्युदितःसन्नहास्तिष्ठेत्सावित्रींजपेत् ॥ एवंसूर्याभिनिर्मुक्तोरात्रावासीत । विष्णुः । सूर्याभ्युदितोनिर्मुक्तःसचैलस्नातःसावित्र्यष्टशतमावर्त्तयेत् ॥ संध्याधिकारेबौधायनः॥ तत्रसायमतिक्रमेरात्र्युपवासः प्रातरुपक्रमेहरुपवासः ॥

स्पष्टकर्के कहतेहैं सूर्येति-सूर्योदित पुरुष दिनमें उपवास करे और सूर्यनिर्मुक्त पुरुष रात्रिमें उपवास करे इसप्रकार दोनों दिनरात्रिके उपवास वाले गायत्रीका दश १० तें अधिक हजार जपदिन विषेकरें ॥ वसिष्ट जी कहतेहें ॥ सूर्येति सूर्योदित पुरुष दिनविषे स्थितहोकर्के गायत्रीकाजपकरें ॥ ऐसेही सूर्यनिर्मुक्त पुरुष रात्रिमें स्थित होकर्के रहपरंतु दिनाविषे जप करे विष्णुजी कहतेहैं सूर्येति सूर्योदित वा सूर्यनिर्मुक्त पुरुष सचैल स्नान कर्के गायत्रीका अठ से अधिक १०० सौ जपकरे अबसंध्याके अधिकारमें बौधायनजी कहतेहैं तत्रेति जेकर सायंकालकी संध्या न करे तद रात्रि उपवासकरणा और प्रातःकालकी संध्या न करणेमे एकदिनका उपवास करणे योग्यहै

आपस्तंवजीकहतेहैं स्वपन्निति जिसको सुत्तेहोयां सूर्य अस्तहोवे सो भोजन न करे और वाणी रोकरकखे रात्रिमें स्थितरहे और दूसरे दिन जलकास्पर्शकर्के वाणीनूंखोलदेवे और जेकर सुत्तेहोयां सूर्य उदय होजावे तद्भीभोजन न करे और वाणीनूं रोकरकखे और दिनमें स्थितरहे और नम्र होया २ प्राणायामकरे एहकिसीका मतहै । आतिमितः! इसपाठविषे अस्तपर्य्यंत स्थितरहे एह अर्थहै ॥ कुछक और कहतेहैं मध्विति ब्रह्मचारीको मखीरमांसकेभक्षणविषे कृच्छ्रव्रतकरणेयोग्यहै फेर शेष व्रतांनूं करे ब्रह्मचारीनें मखीरभक्षण विषे और शिष्ट पुरुषोंके भोजन योग्य जोमांसतिसकेभक्षणविषे प्राजापत्यव्रतकरणेयोग्यहै ॥ तिसतेंउपरंत प्रारंभकीता होया जो ब्रह्मचर्य वा वेद व्रतइनांविचों शेषरिहा जो व्रत सो करे ॥ तिसतेउपरंत अग्गेकरणे जो व्रत तिनांनूं समाप्तकरे

आपस्तंवः स्वपन्नभिनिर्मुक्तोनश्नन्वाग्यतोरात्रिमासीत । श्वोभूतेंउदकमुपस्पृश्यवाचंविसृजेत् । स्वपन्नभ्युदितोनश्नन्वाग्यतोहस्तिष्ठेदान्मितः प्राणान्नियच्छेदित्येके ॥ अनश्नन्नभुंजानः किंच मधुमांसाशनेकार्यःकृच्छ्रःशेषो व्रतानिच ब्रह्मचारिणामधुभक्षणेशिष्टभोजनीयमांसभक्षणेचप्राजापत्यंकार्यम् ॥ तदनंतरमुपक्रांतस्यब्रह्मचर्यस्यवेदव्रतानांवान्यतमस्यशेषःकार्यःतदनंतरंक्रियमाणानिव्रतानिसमापनीयानि मधुमांसाशनेकार्य्यःकृच्छ्रःशेष व्रतानिच प्रतिकूलंगुरोःकृत्वाप्रसाद्यैवविशुध्यतीतिमिताक्षरास्थःपाठःनपुनर्ब्रह्मचर्यारम्भशंकानिवृत्त्यर्थायविधिः तदाशंकायांच पुनरुपनयनविधानात् । तथाचसंवर्त्तः ॥ ब्रह्मचारितुयोश्नीयान्मधुमांसेकथंचन सकृत्वाप्राकृतंकृच्छ्रंमौंजीहोमेनशुध्यतीति मांसस्यचशिष्टभोजनीयस्यभक्षणेएतत्

इसमे विशेषकहतेहैं मध्विति ब्रह्मचारी मखीरमांसके भक्षणविषे कृच्छ्रव्रतकरे फेर शेष व्रतकरे औरगुरुका अनादराकीतां गुरुकीप्रसन्नताकर्के शुद्धहोताहै एहमिताक्षरामेकहाहै १ परंतुएह फेर ब्रह्मचर्यके आरंभकी शंकको निवृत्तिवास्ते विधि नहिंहै अर्थात्इसीकृत्यकर्के एहशंका निवृत्तहो गई पुनर्ब्रह्मचर्यकी आशंका विषे फेर यज्ञोपवीतका विधान होणेतें सो इसमे नहिंहै । तैसेहि संवर्त्तजीकहतेहैं ब्रह्म चारीति जो ब्रह्मचारी मखीर और मांसका भक्षण करे सो प्राकृत कृच्छ्रव्रत कर्के और मौंजीहोम कर्के शुद्धहोताहै १ प्राकृतकृच्छ्र नाम सामान्यकृच्छ्र जो द्वादशाहसाध्य है तिसकाहै यज्ञोपवीतविषे प्रतिपादन कीता जो होम तिसकर्के शुद्ध होताहै परंतु शिष्टोंके भोजन योग्य जो मांस तिसके भक्षण विषे एहजानणा ॥

जोवासिष्टजीनें कहाहै सो कहतेहैं ब्रह्मचारीति ब्रह्मचारी जेकर शिष्टोंके योग्य जो मांस तिसनूं खावे तद बारां १२ रात्रीका कृच्छ्र व्रत कर्के शेषव्रतनूं समाप्त करे सोभी एह व्याधिरहितकोजानणा ऋौर व्याधियुक्तकों मधु मांस भक्षणमें दोष नहिंहै सोई वसिष्ट एह कहताहै कि सो जेकर व्याधियुक्तहोवे तद गुरुका जूठांमांस औषधीवास्ते सारही खालेवे क्योंकि मधुमांसादि जो हैं सो रोगिपुरुषको स्वीकार करणेयोग्यहैं इसमे जो सर्वग्रहणहै सो मांसलशुनादि जो अभक्ष्य तिसके ग्रहण वास्तेहै गुरुकाजूठा भोजनकर्के वा वचनकर्के जानणाहै ॥ इच्छातें विना प्राप्तहोया जो मधु तिसके भक्षणमें दोष नहिंहै एह वसिष्टजीने कहाहै सो कहीदाहै अकामेति इच्छातें विना प्राप्तहोयाक्या भक्षण कीताजो मखीर वाजसनेयीशाखावाले ब्रह्मचारीकों तिसके भक्षणमें दोष नहिंहै एहजाणीदाहै ॥ इसकों स्पष्टकरतेहैं कि वाजसनेयी यजुः शाखाका भेदहै ॥ अब ब्रह्मचर्यके अधिकारविषे पैठीनसिजीकहतेहैं मधिवति ब्रह्मचारी मधुमांसके भक्षण विषे त्र्यरात्रि

यदाहवसिष्ठः ब्रह्मचारीचेन्मांसमश्नीयाच्छिष्टभोजनीयंकृच्छ्रंद्वादशरात्रंचरित्वाव्रतशेषंसमापयेदिति एतच्चाव्याधितस्य व्याधितस्यतुमधुमांसभक्षणेपि नदोष इत्याह सएव सचेद्व्याधीयीतकामंगुरोरुच्छिष्टंभेषजार्थंसर्वंप्राश्नीयादिति मधुमांसाद्यप्रतिषिद्धम् सर्वग्रहणंमांसलशुनाद्यभक्ष्यमात्रग्रहणार्थम् गुरोरुच्छिष्टमपिभोजनेनवचनेनवाज्ञेयम् अकामोपनतमधुभक्षणे नदोष इत्याहसएव अकामोपपन्नंमधुवाजसनेयकेनदुष्यतीतिविज्ञायते । वाजसनेयंयजुःशाखान्तरम् ॥ ब्रह्मचर्याधिकारेपैठीनसिः मधुमांसप्राशने त्रिरात्रंपुनरुपनयनंच प्राजापत्यासमर्थविषयमेतत् ॥ मनुः ॥ मासिकान्नं तुयोश्नीयादसमावृत्तकोद्विजः सत्रीण्यहान्युपरमेदेकाहंचोदकेवसेत् १ ॥ मासिकमत्रप्रतिमासंमृताहनियद्विहितंतद्ग्राह्यम् नपुनरमानवम्याम् सूतिकान्नंनवश्राद्धंमासिकान्नंतथैवच ब्रह्मचारीतुयोश्नीयात्त्रिरात्रेणसशुद्ध्यतीति संवर्त्तवाक्येन नवश्राद्धसाहचर्यात् ॥ बौधायनः ॥ सचेद्व्याधीयीत कामंगुरोरुच्छिष्टंभेषजार्थंसर्वमश्नीयात्

उपवासकरे फेर यज्ञोपवीतपावे ॥ एह प्राजापत्य व्रत के असमर्थ विषयविषे जानणा अर्थात् जिससे प्राजापत्यनहि होसक्ता सो इसव्रतको करे ॥ मनुजीकहतेहैं मासिकेति जो ब्राह्मण ब्रह्मचारी मासिकान्न भक्षणकरे सो त्रयदिन उपवासकरे और एकदिनजलविषे वास करे ता शुद्धहोताहै १ इस विषे मासिक शब्दका अर्थ कहतेहैं महीनें महीनें मृत होए पुरुषके दिन विषे जो विधान किया है सो ग्रहण करणा योग्यहै ॥ अवइसीमेंहेतु कहतेहैं नेति फेर अमावास्या नवमीविषे जो श्राद्ध है तिसकोभी मासिक कहतेहैं परंतुसो नहिं ग्रहण करणा क्योंकि सूतिकान्न और नवश्राद्ध और मासिकान्न इनांको जो ब्रह्मचारीभक्षण करे सोत्रयरात्रि कर्के शुद्धहोताहै एह संवर्त्तके वाक्य कर्के नव श्राद्धकी साहचर्यताहोणेतें बौधायनजीकहतेहैं सइति सोब्रह्मचारी जेकर पाडी कर्के युक्तहोवे तद अतिशय कर्के गुरुकाजूठा औषधीवास्ते संपूर्ण खालेवे

येनेति जिसककें इच्छाहोवेतिसीकर्के चिकित्सा करे सो जद रोगरहित होवे तदउठ कर्के सूर्य्य का उपस्थान करे हंसः शुचिषत् इस ऋचाकर्के ॥ इसीमें वृद्धयाज्ञवल्क्य जी कहतेहैं ब्रह्मचारीति ब्रह्मचारी व्रती और विधवा ब्राह्मणी एह मधु मांस भक्षण करें तद त्रयरात्रिके व्रत कर्के शुद्ध होतेहैं ॥ यमजीभी कहतेहैं मध्विति जो ब्रह्मचारी मधु मांस भक्षण करे और श्राद्धका वा सूतक का अन्न खावे तद प्राजापत्य कृच्छ्र व्रत कर्के शेष व्रतनूं समाप्तकरे १ एह जेकर उलटी न होवे तिसमें जानणा और उलटीविषे लघुकृच्छ्र व्रतकरे १ शातातपजीकहतेहैं सूतकइतिजेकर सूतक

येनेच्छेत्तेनविचिकित्सेत् सयदाऽगदोभवति तदोत्थायादित्यमुपतिष्ठेद्धंसः शुचिषदित्येतयर्चा । अगदोरोगरहितः । वृद्धयाज्ञवल्क्यः । ब्रह्मचारीव्रतीचैवब्राह्मणीविधवाचया अशित्वामधुमांसानित्रिरात्रेणैवशुध्यतीति १ । यमः मधुमांसंचयोश्नीयाच्छ्राद्धंसूतकमेवच प्राजापत्यंचरेत्कृच्छ्रंव्रतशेषंसमापयेत्१ छर्दनाभावएतत् छर्दनेतुलघुकृच्छ्रम्। शातातपः। सूतकेतुयदाविप्रोब्रह्मचारीविशेषतः पिबेत्पानीयमज्ञानात्समश्नीयात्स्पृशेतवा १ पानीयपानेकुर्वीतपंचगव्यस्यभक्षणम् त्रिरात्रंभोजनेप्रोक्तंस्पृष्ट्वास्नानंविधीयतइति २॥ विष्णुः ब्रह्मचार्यामश्राद्धान्नंप्राश्नीयादज्ञानदुर्बलः पराकेनविशुद्धिःस्यान्निष्कृतिर्नान्यथाभवेत् १ उच्छिष्टंक्षत्रियविशोःशूद्रोच्छिष्टमथापिवा ब्रह्मचारीयदाश्नीयात्तस्यशुद्धिःकथंभवेत् २ स्नानंतथैवकृत्वातुगायत्र्यष्टशतंजपेत्

विषे ब्राह्मण ब्रह्मचारी विशेषतें पानी पीवे अज्ञानतें भोजनकरे वा स्पर्शकरे १ तद पानी पीने विषे पंचगव्य का भक्षण और भोजन विषे त्रयरात्रि उपवास करे और स्पर्श विषे स्नान करे तद शुद्ध होताहै १ अब विष्णुजी कहतेहैं ब्रह्मचारीति जो ज्ञान रहित ब्रह्मचारी श्राद्धका कच्चा अन्न खावे तद बारां १२ दिनका जो पराक व्रत तिस कर्के शुद्धि होताहै और किसे कर्के भी शुद्धि नाहैं होतीहै १ उच्छिष्टमिति क्षत्री वैश्य शूद्र इनका जूठा अन्न ब्रह्मचारी जेकर खावे तिसकी शुद्धि कैसें होवे ॥ २ ॥ उत्तर तिसीकालमें स्नान कर्के अष्टोत्तर शत गायत्रीका जपकरे

उपोष्येति और बारां दिनका उपवास व्रतकरे असें पृथक् २ क्या जुदे जुदे तीनोंकी शुद्धि कही है इसी प्रकार गृहस्थीको पाद ऊन व्रत करणा योग्यहै ३ इसकोंस्पष्टकरतेहैं ब्राह्मणेति ब्राह्मण क्षत्री वैश्य इनांको क्रमकर्के क्षत्री वैश्य शूद्र के उच्छिष्ट प्राशनमें एह जानणा अर्थात् ब्राह्मणको क्षत्रीके उच्छिष्ट भक्षणमें और क्षत्रीको वैश्यके और वैश्यको शूद्रके एहप्रा० और एही व्रत ब्राह्मणको क्षत्री वैश्य शूद्रके उच्छिष्ट भक्षणमें और क्षत्रीको वैश्य शूद्रके जूठाभक्षण करणेमें और वैश्यको शूद्रका जूठा भक्षण करणे में कुछक अधिक करणा योग्यहै ॥ देवलजी कहतेहैं मधिवति मधुमांस और सूतकका अन्न जो व्रती भक्षण करे तद त्रयरात्रि उपवासव्रत कर्के एकरात्रिजलविषें वास करे १ इसकर्के रात्रिविषें जलमें वास विधानाकियाहै ॥ और मनुनें दिनविषें जलवासकियाहै तिसतें विकल्प जानणा ॥ और जेकर

उपोष्यद्वादशदिनमेवंशुद्धिःपृथक्पृथक् एवमेवगृहस्थस्यपादोनमितिनिश्चयः ३ ब्राह्मणक्षत्रियविशांयथाक्रमंक्षत्रियवैश्यशूद्रोच्छिष्टप्राशनेएतत् एतच्चब्राह्मणस्यक्षत्रियवैश्यशूद्रोच्छिष्टं क्षत्रियस्यवैश्यशूद्रोच्छिष्टं वैश्यस्यशूद्रोच्छिष्टमश्नतःकिंचिदधिकंकल्प्यम् ।देवलः। मधुमांसंसूतकान्नंयश्चाश्नातिव्रतीकचित् त्रिरात्रोपोषितःसम्यग्रात्रिमेकांजलेवसेत् १ अनेनरात्रौ जलवासोविहितः मनुनात्वहनीत्युक्तं ततोविकल्पः दोषभूयस्त्वेतुसमुच्चयः ब्रह्मचारिप्रसंगाद्गुरुविषयंकिंचिदाह । कृच्छ्रत्रयंगुरुःकुर्यात्प्रहितोम्रियतेयदि । ब्रह्मचारीगुरुणाप्रहितःप्रेषितःशंक्यमानार्थविषयेयदिम्रियते तदागुरुःप्राजापत्यसहितांस्त्रीन्कृच्छ्रानाचरेत् । शंक्यमानविषयस्तुचौरोरगव्याघ्रादिनासांद्रतरांधकाराकुलितनिशीथावसरादिनाभवति अत्रपूर्ववाक्याद्ब्रह्मचारीतिशब्दोऽनुवर्त्तते

दोषबहुतहोवे तां दिनरात्रि जलमें वासकरणा ॥ अब ब्रह्मचारीके प्रसंगतें गुरुविषय कुछक प्रायश्चित्तकहतेहैं कृच्छ्रेति जेकर ब्रह्मचारी गुरु कर्के प्रेरित कीता होया मृत हो जावे तद गुरु त्रयकृच्छ्र व्रत करे ॥ अब इसीका अर्थ स्पष्टकर्के कहतेहैं ब्रह्मचारी गुरुकर्के भेजया होया शंक्यमान विषयविषें जेकर मृतहोजावे तद गुरु प्राजापत्य सहितत्राय कृच्छ्रव्रत करे ( प्रश्न ) शंक्यमानविषय कौणसाहै ॥ ( उत्तर ) चोर सर्प व्याघ्रादिकर्के बडेगाडे अंधकार कर्के युक्त अर्धरात्र में किसी स्थानमे जाणा इत्यादि करके होताहै इसविषे पूर्ववाक्य तें ब्रह्मचारी एह शब्द अनुवर्त्तन करीदाहै ॥

अतइति इसीकारणतें ब्रह्मचारिकें प्रायश्चित्तके प्रसंगतें गुरुको दुःख देणे विषे भी याज्ञवल्क्यनें प्रायश्चित दिखाईदाहै प्रतीति गुरु का प्रतिकूल कर्के गुरु को प्रसन्न करे तां शुद्ध होताहै अव इसीका अर्थ स्पष्ट कर्के कहतेहैं गुरुको प्रतिकूल क्या दुःख दे कर्के गुरुनूं प्रसन्न कर्के हि शुद्ध होताहै ॥ इसी में वसिष्ट जी कहते हैं गुरुके साथ झूठ कह कर्के फेर उसी झूठ को सचा करे तिसमें सचैल स्नान कर्के और गुरु नूं प्रसन्न करे तद शुद्ध होताहै एह जाणीदाहै ॥ एह अज्ञानतें जो एक वार थोड़ा अपराध तिसविषे जानणा ॥ अतिशयतें हठ कर्के ज्ञान पूर्वक जो गुरुको दुःख देणा तिस विषे वारां १२ वर्ष का जो ब्रह्महत्याका व्रत तिसकी प्राप्ति वास्ते कयाहै मनुनें एह समग्र श्लोकहै ( उक्त्वाचैवानृतंसाक्ष्येप्रतिरुध्यगुरुंतथा अपहृत्यचनिःक्षेपंकृत्वाच

अतएव ब्रह्मचारिप्रायश्चित्ते प्रकृते प्रसंगाद्गुरोःप्रातिकूल्येऽपि याज्ञवल्क्येनप्रायश्चित्तमुपदिश्यते ॥ प्रतिकूलंगुरोःकृत्वाप्रसाद्यैवविशुद्ध्यतिगुरोःप्रतिकूलंदुःखकरं कृत्वा गुरुं प्रसाद्य व्यपगतकोपं कृत्वा विशुद्ध्यति विपापोभवति । अत्रवसिष्ठः ॥ गुरोश्चालीकनिर्बंधेसचैलंस्नानतोगुरुंप्रसादयेत्पूतोभवतीतिविज्ञायते । एतदमतिपूर्वकंसकृदल्पापराधविषयम् ॥ अत्यंतसानुबंधमतिपूर्वकमहाऽपराधेतु गुरुप्रातिकूल्ये द्वादशवार्षिकब्रह्महव्रतप्राप्त्यर्थमुक्तंमनुना प्रतिरुध्यगुरुंतथेति यद्वा पितृविषयंमानवं वासिष्ठयाज्ञवल्क्यीयंचौपचारिकगुरुविषयम् ॥ मानवंब्रह्महत्याप्रकरणेद्रष्टव्यम् ॥ विष्णुः ॥ समुत्कर्षान्तेगुरोश्चालीकनिर्बंधे तदाकारणेच मासंपयसा वर्तेत तस्यगुरोराकारणेआव्हानेचेत्यर्थः स्वल्पाभ्यासविषयमिदम् ॥ इतिब्रह्मचारिव्रतलोपेप्रायश्चित्तम् ॥ १८ ॥ ❀

स्त्रीसुहृद्वधम् १ ) कोइक कहते हैं एह जो मनुजीका कथन कीता होया वारां वर्ष का व्रत सों पिता रूप जो गुरुहै तिसविषे जानणा वहुत प्रायश्चित्त होणेतें । और वसिष्ट याज्ञवल्क्यजीका वचन पितातें विना और गुरुविषे जानणा क्योंकि थोडा प्रायश्चित्तहोणेतें ॥ मनु जीकावचन ब्रह्महत्या प्रकरण विषे देखणे योग्यहै ॥ अव विष्णुजीकहतेहैं समिति गुरुके साथ अपणी वडयाई वास्ते झूठ बोलणें विषे और किसी वातका झूठाहठ करणेविषे और गुरुके वुलाणे विषे अर्थात् गुरुके साथ कूलकामहोवे तदआपगुरुपासनहिजाणा किंतु गुरुको अपणे पास वुलाणा एह वडा दोषहै इसवास्ते प्रायश्चित्तहै कि महीना पर्यंत जल पान करे तद शुद्ध होताहै एह थोडे अभ्यास विषे जानणा एह ब्रह्मचारिके व्रत लोपका प्रायश्चित्त समाप्तहुआ ॥ ८ ॥ ❀

सतें उपरंत तला बगीचा पुत्र स्त्री इनका वेचणा पीछे किहाहै तिस विषें प्रायश्चित्त कहतेहैं
वोंकि जो मनुजी का किहा होयाव्रत है(एतदेवव्रतं कुर्युरुपपातकिनोद्विजा)इत्यादि श्रौर याज्ञ
ल्क्यका किहा होया जो है(उपपातकशुद्धिःस्यात्)इत्यादि उपपातकोंके जो सामान्य प्रायश्चित्त
चांद्रायणादि व्रत सो जाति शक्ति गुणकी अपेक्षा करकें देखणें योग्यहें अर्थात् जैसी जाति
ब्राह्मणादि होवे वा जैसी सामर्थ्य होवे वा जैसा गुण होवे तैसाहि प्रायश्चित्त करणा ॥ आपत्ति
कालमें इच्छातें विना वेचणेंविषें शंखजीकहतेहैं देवेति देवताका मंदिर श्रौर जिस घरविषें यज्ञ
होवे तिसकों वेच करके श्रौर बगीचा वा छोटी बगीची श्रौर सभा स्थान वा धर्म्मशाला तला
श्रौर व्रनादि वा पुल पुत्र इनांको वेंचकर्के तप्त कृच्छ्रव्रतकरे तद शुद्ध होताहै ॥ इसीमें पराशर
जीभी कहतेहैं विक्रीयेति कन्या श्रौर गौकों वेचकर्के कृच्छ्र सांतपन व्रत करे ॥ इच्छातें वेचणें
विषें चतुर्विंशतिमतमें कहतेहैं नारीणामिति स्त्रीकों वेच कर्के चांद्रायण व्रत करे तद शुद्ध होताहै
श्रौर पुरुषके वेचण विषें दूणा व्रत बुद्धिमानोंनें किहाहै १ श्रवइसमें जो पैठीनसि जीनें कियाहै

अनंतरं तडागारामसुतदारविक्रयइत्युक्तं तत्र पूर्वोक्तमनुयोगीश्वरोक्तोप
पातकसामान्यप्रायश्चित्तंचांद्रायणादि जातिशक्तिगुणापेक्षया द्रष्टव्यम्
आपद्यकामतोविक्रये शंखः देवगृहप्रतिश्रयोद्यानारामसभाप्रपातडागपु
ण्यसेतुसुतविक्रयंकृत्वातप्तकृच्छ्रंचरेदिति । पराशरोपि विक्रीयकन्यकांगां
चकृच्छ्रंसांतपनंचरेदिति । कामतोविक्रये चतुर्विंशतिमते । नारीणांविक्रयंकृ
त्वाचरेच्चांद्रायणव्रतम् द्विगुणंपुरुषस्यैवव्रतमाहुर्मनीषिणइति १ यत्तुपैठीन
सिः । आरामतडागोदपानपुष्करिणीसुकृतसुतविक्रये त्रिषवणस्नाय्यधःशा
यीचतुर्थकालाहारः संवत्सरेणपूतोभवतीति गुरु प्रायश्चित्तमुक्तवान् तदेक
पुत्रविषयम् इतितडागारामादिप्रायश्चित्तम् २२॰ अथव्रात्यता । व्रात्यइ
तिव्रातशब्दादिवार्थयप्रत्ययेननिष्पन्नः यद्वा व्रातमर्हतीति व्रातंनीचकर्म
दंडादिभ्योयइति व्रात्यःशरीरायासजीवी व्याधादिक अष्टाविंशतिसंस्का
रहीनोभ्रष्टगायत्रीकः षोडशवर्षादूर्ध्वमप्यकृतव्रतबंधोदानादकर्त्ताद्विजो
व्रात्य इत्यमरटीकाराजमुकुटी ॥

सो कहतेहैं श्रारामेति बगीची तला खूहा बाउली पुण्य पुत्र इनके वेचणें विषें त्रिकाल स्नान
करे श्रौर पृथ्वी विषे शयन करे चौथे पहर भोजन करे तद वर्षकर्के शुद्ध होताहै जो एह बहुत
प्रायश्चित्तकियाहै सो एकपुत्रविषे जानणा । एह तलाश्रादि चारवस्तुके वेंचणका प्रायश्चित्तसमाप्त
होया २२ ॰ श्रब व्रात्यताका प्रायश्चित्तकहणें वास्ते पहले तिसशब्दका अर्थकहतेहैं व्रात्यइति
व्रातशब्दतें परे सादृश्य अर्थमें यप्रत्यय आया तद व्रात्य सिद्ध होया १ दूसरा अर्थ कहतेहैं व्रात
जोहै नीचकर्म तिसके योग्यजोहोवे(दंडादिभ्योय)इससूत्रकर्के यप्रत्यय आया तद व्रात्यसिद्ध होया
सो किसका नामहै कि शरीरके आयासकर्के जीविका करणेवाले जो भारवाहकहैं अठाई २८
संस्कारोंतेंहीन श्रौर गायत्रीसेंभ्रष्ट श्रौर सोला १६ वर्षतेंउपरंतनहिंहोया यज्ञोपवीत जिसकाश्रौरदा
नादिके न करणेवाला जो द्विजतिसकानामव्रात्यहै एह अमरकोशकी राजमुकुटीटीकामें किहाहै

अब इसी का अर्थ स्पष्ट कर्के कहते हैं त्रीणीति त्रय ३००० हजार गायत्री का जप करे अथवा गोशाला विषें महीना रोज दुग्ध पान करता रहे तो खोटे उक्तवक्ष्यमाण दान लेणेंतें उत्पन्न जो पाप तिसतें मुक्तहोताहै ॥ और शूद्र ते दान लेणें विषें भी एही प्रायश्चित्त जानणा क्योंकि द्रव्यके दोष कर्के और दाताके दोष कर्के भी दानको निंदितत्वके अविशेष होणेंते अर्थात् कोई द्रव्यहि निंदितहै जैसे तुलादि और कोई देणेवाला शूद्रादि निंदितहै २ ॥ इसविषें मासं एह पद ( कालाध्वनोरत्यंतसंयोगेद्वितीया ) इस सूत्र कर्के द्वितीया विभक्तिका विधान होणे तें त्रयहजार जप प्रतिदिन का व्याप्ति जाणीदाहै अर्थात् ३००० जप प्रतिदिन करे अब इसी मे याज्ञवल्क्यजी और प्रकार कहतेहैं गोष्ठइति ब्रह्मचर्य धारण कर्के गोशाला विषें वास करता होया महीना रोज दुग्ध पान करे और गायत्रीका जप करता रहे तो खोटे दान

त्रीणिसावित्रीसहस्राणिजपित्वा गोष्ठे वा मासंक्षीराहारोऽसत्प्रतिग्रहजनितात्पापान्मुक्तो भवति॥ शूद्रप्रतिग्रहादावप्येतदेवप्रायश्चित्तं द्रव्यदोषेणच दातृदोषेणापि प्रतिग्रहस्य गर्हितत्वाविशेषादिति २ अत्रमासमिति कालाध्वनोरत्यंतसंयोगेद्वितीयाविधानात् त्रिसहस्रसंख्याकजपस्य प्रतिदिवसव्यापित्वंगम्यते ॥ याज्ञवल्क्यः ॥ गोष्ठेवसन्ब्रह्मचारीमासमेकंपयोव्रतः गायत्रीजाप्यनिरतःशुध्यतेऽसत्प्रतिग्रहात् ॥ १ ॥ यस्त्वसत्प्रतिग्रहं करोति सब्रह्मचर्ययुक्तो गोष्ठेवसन् गायत्रीजपशीलो मासंपयोव्रतेनशुध्यतीति ॥ प्रतिग्रहस्य चासत्त्वं दातुर्जातिकर्मनिबंधनं यथा चांडालादेः पतितादेश्च तथादेशकालनिबंधनंच यथा कुरुक्षेत्रोपरागादौ तथाप्रतिग्राह्यद्रव्यनिबंधनंच यथासुरामेषीमृतशय्योभयतोमुख्यादेः॥ यदातुपतितादेर्मेष्यादिकंगृह्णाति तदेदंगुरुप्रायश्चित्तंद्रष्टव्यम् ॥

केलेणेतें उत्पन्न जो पाप तिसतें शुद्ध होताहै ॥ १ ॥ अब इसी का अर्थ स्पष्ट कर्के कहतेहैं यस्त्विति जो पुरुष खोटा दान ग्रहण करे सो ब्रह्मचर्य कर्के युक्त गोशाला विषें वास करता होया और गायत्रीका जप करतारहे और महीना रोज दुग्ध पान करतारहे तो शुद्ध होताहै ॥ प्रतीति प्रतिग्रहक्या दानको जो असत्त्वताहै सो दाताकी जाति और कर्माके निबंधते जानणी जैसें जातितें चांडालादितें और कर्मतें पतितादितें जो प्रतिग्रहहै तैसेंहि देशकालके निबंधतें जानणा जैसें देश कर्के कुरुक्षेत्रादि और काल कर्के ग्रहणादिविषें दान असत्है तैसेहि प्रतिग्राह्य जो द्रव्य तिसके निबंधतें जानणा जैसें मदिरा भेडी मृत पुरुषकी शय्या और उभयमुखी गौ इत्यादिजानणें ॥ और जेकर पतितादि पुरुषोंतें भेडी आदिका ग्रहण करें तिसमें एह पूर्वोक्त प्रायश्चित्त वडा देखणें योग्य है

क्योंकि दो ५ प्रकारके देखणें कर्के निमित्तको बडा होणे तें ) और इस विषे जप संख्या पूर्वो क्तमनुजीकी कथन कीती होई जानणी ॥ और जेकर न्याय युक्त ब्राह्मणादि होवे तिसके पासते निषिद्ध मेषादिका ग्रहणकरे और पतितादियोंतें अनिषिद्ध जो भूम्यादि तिसका ग्रहण करे तिस में षट्त्रिंशन्मत विषे प्रायश्चित कहते हैं पवित्र इति पावित्रेष्टिनाम यज्ञ करणे कर्के संपूर्ण जो घोरदान तिनांके लेणेतें शुद्ध होतेहैं और चान्द्रायण मृगारेष्टि मित्रविंदा अथवा गायत्री के लक्ष जप कर्के खोटे दानके लेणेतें शुद्ध होतेहैं १ एह पवित्रेष्टयादि तीनों यज्ञ विशेष जानणे ॥ अब राजाके दान लेणे विषे वृद्ध हारीतजी कहतेहैं राज्ञइति राजाका दान लेकर्के महीना गं ज जल विषे वास करे और षटकाल विषे दुग्ध पान करता रहे तो पूर्ण महीने कर्के शुद्ध हो

व्यतिक्रमद्वयदर्शनेन निमित्तस्यगुरुत्वात् ) जपसंख्यातु मानवीयावोध्या ॥ यदान्याय्यवर्त्तिब्राह्मणादेः सकाशान्निषिद्धंमेषादिकंगृण्हाति पतिता देर्वाऽनिषिद्धंभूम्यादिकंगृण्हाति तदाषट्त्रिंशन्मतेप्रा० पवित्रेष्ट्याविशु द्ध्यंतिसर्वेघोराःप्रतिग्रहाः। ऐन्दवेनमृगारेष्ट्याकदाचिन्मित्रविन्दया ॥ देव्या लक्षजपेनैवशुध्यंतेदुष्प्रतिग्रहात् ॥ १ ॥ राजप्रतिग्रहेवृद्धहारीतः। राज्ञः प्रतिग्रहंकृत्वामासमप्सुसदावसेत् षष्ठकालेपयोभक्षःपूर्णेमासेविशुध्यति ॥ १ ॥ तर्पयित्वाद्विजान्कामैः सततंनियतव्रत इति ॥ राज्ञोऽसच्छास्त्रा भिनिविष्टस्य ॥ अत्रशूलपाणिः ॥ राजपदमत्रोच्छास्त्रवर्त्तिनृपतिपरम् ॥ शूद्रनृपतिपरंच ॥ उभयप्रतिग्रहस्यैवमनुनानिषिद्धत्वात् ॥ यथाहमनुः ॥ नराज्ञःप्रतिगृण्हीयादराजन्यप्रसूतितः ॥ तथा ॥ योराज्ञः प्रतिगृण्हा तलुब्धस्योच्छास्त्रवर्त्तिनः सपर्यायेणयातीमान्नरकानेकविंशतिम् १ न्या यवर्तिक्षत्रियनृपतेः प्रतिग्रहस्य देवलेनाभ्यनुज्ञातत्वात् ॥

ताहै और षट कालका अर्थ अग्गे कहेंगे ॥ और ब्राह्मणांको प्रसन्न कर्के व्रतवाला होया २ नि रंतरहि शुद्ध होताहै १ इसमे राजा खोटे शास्त्र जानण वाला अर्थात् नास्तिक जानणा ॥ अब इसी मे शूलपाणि जी कहते हैं राजेति इसमे राजपद असच्छास्त्र जो बौद्धादि तिनके जा नणे वाले राजा पर है अथवा शूद्र राजा पर है इन दोनोंके दानको मनुजी ने निषिद्ध कि हाहै ॥ जैसें मनुजी कहतेहैं नेति जो क्षत्रीतें नहिं उत्पन्न राजा तिसका दान ग्रहण नहिं करणा तै सें हि और कहते हैं यइति यो लोभी अथवा खोटे शास्त्र जानण वाले राजाका दान ग्रहण करताहै सो पुरुष क्रम कर्के इकीस २१ नरकांको प्राप्तहोताहै १ और न्याय युक्त क्षत्रि राजाके दान को देवल जी कर्के अभ्यनुज्ञात होणते अर्थात् तिसने आज्ञा दिची है

ऐसे देवलजी कहते हैं धर्मज्ञ इति धर्म्मके जानणे वाला और श्रेष्ट और खोटे पुरुषों को दंड देणे वाला ऐसा राजा तीक्षणभी होवे तिसका धन पवित्रहै सो ग्रहण करणे योग्यहै १ इसमें युक्ति कहतेहैं आढ्यानामिति धनवानको बहुत भारवाला होणेते अथवा महात्मा पुरुषों को देणेयोग्य होणेते राजा लोकोका दान श्रेष्ट किहाहै औरोंविषे ब्राह्मणोके विना और किसीको दान नहि ग्रहण करणेयोग्यहै २ राज्ञां एह पद क्षत्रि राजा परहै इसको मुख्यहोणेतें अथवा ब्राह्मणके समीप होणेतें इसविषे पंद्रा १५ गोआं द्रव्यत्याग पूर्वक देणेयोग्यहे ॥ और प्रथम दो २ दिन उपवासतें उपरंत तीसरे दिनमे जो सायंकालहै तिसका नाम षष्ठकाल किहाहै तिसविषे देह धारणके उचित दुग्धपान करता रहे ॥ परंतु एह पूर्वोक्त प्रायश्चित्त अभ्यासविषे देखणे योग्यहै ॥ अथवा पतिता

यथाहदेवलः ॥ धर्म्मज्ञस्यकृतज्ञस्यरक्षार्थंशासतोऽशुचीन् ॥ मेध्यमेवधनंप्राहुस्तीक्ष्णस्यापिमहीपतेः १ आढ्यानांभूरिभाराच्चदेयत्वाच्चमहात्मनाम् ॥ श्रेयान्प्रतिग्रहोराज्ञांनान्येषांब्राह्मणादृते २ राज्ञामिति क्षत्रियनृपतिपरम् ॥ अस्यैवमुख्यत्वात् ॥ ब्राह्मणसन्निधानाच्च अत्र पंचदशधेनवोद्रव्यत्यागपूर्वकंदातव्याः ॥ दिनद्वयोपवासानंतरंतृतीयेह्निसायंकालः षष्ठकालः ॥ तत्रदेहधारणोचितक्षीरपायी ॥ एतच्चाभ्यासेद्रष्टव्यम् ॥ पतितादेः कुरुक्षेत्रोपरागादौ कृष्णाजिनादिप्रतिग्रहेवा प्रतिग्राह्यद्रव्यालपत्वेप्रायश्चित्तालपत्वमाह हारीतः ॥ मणिवासोगवादीनांप्रतिग्रहणेसावित्र्यष्टसहस्रंजपेदिति ॥ षड्त्रिंशन्मतेपि ॥ भिक्षामात्रेगृहीतेऽतिपुण्यमंत्रमुदीरयेत् ॥ प्रतिग्रहेषुसर्वेषुषष्ठमंशंप्रकलपयेदिति १ अतिपुण्यमंत्रोगायत्री। प्रकलपयेद्ब्राह्मणेभ्योदद्यादित्यर्थः। तथा जपहोमादिकंकुर्यादज्ञात्वायज्ञप्रतिग्रहौ पवित्रेष्ट्यापिशुद्ध्यंतिमुच्यंतेऽसत्प्रतिग्रहात् १

दि तें और कुरुक्षेत्र ग्रहणादि विषे काले चर्मादि के दान लेणे विषे जानणा योग्य है ॥ और दान लेआ जो द्रव्य सो थोडा होवे तो तिसमे थोडाहि प्रायश्चित्त कहतेहैं हारीतजी मणीति मणि वस्त्र गवादियोंके दान लेणे विषे अष्ट ८००० हजार गायत्री का जपकरे तो शुद्ध होताहै इसीमे षट्त्रिंशन्मत वालेभी कहते है भिक्षेति भिक्षामात्रक ग्रहण विषेभी प्रतिग्रहका दोषहै तिसमें अतिपुण्य जो गायत्री तिसका पाठ करणेते शुद्ध होता है और संपूर्ण प्रतिग्रह विषे छे ६ मां हेसा ब्राह्मण को देदेवे तो शुद्ध होताहै १ तैसेहि और कहतेहैं जपेति यज्ञ और प्रतिग्रह को जाण करके जपहोमादि करे तो शुद्ध होताहै और पवित्रेष्टि नाम यज्ञ करके शुद्धहोते हैं ॥ और खोटे दान के लेणेतें भी मुक्त होते हैं १

अब इसीमें और भी कहतेहैं पवित्रइति पवित्रेष्टिकर्के अथवा गरिष्टि कर्के अथवा मित्र विंदा कर्के अथवा गायत्रीके लक्ष जप करणे कर्के खोटे दानके लेणें तें शुद्ध होताहै १ अब और प्रकार उशनाजी कहतेहैं पतितादिति पतित पुरुषतें ब्राह्मण द्रव्यग्रहण करे अथवा जकरभक्षण करे तो तिस द्रव्य का त्याग कर्के अतिकृच्छ्रव्रत करे तो शुद्ध होताहै १ अब कश्यपजी विशेष कहतेहैं असदिति पूर्वोक्त खोटे दानके लेणें विषें महीना रोज गोशालाविषे वास करता होया दुग्धपान करता रहे अथवा चांद्रायणव्रत करे अथवा गोहत्या का व्रत जो त्रय महीनेंकाहै सो करे १ एह पूर्वोक्त व्रत अभ्यास विषय विषें जानणा ॥ अथवा इच्छातें एक बार करणें विषें जानणा ॥ हारीत जी कथन करतेहैं मणीति मणि वस्त्र गवादिके प्रतिग्रह विषे गायत्रीका एक १००० हजार जप करे मणि इसजगा थोडि मुल्यवाली जानणी मध्यम द्रव्यके

अन्यत्र ॥ पवित्रेष्ट्यागरिष्ट्यावाकदाचिन्मित्रविंदया देव्यालक्षजपेनैवमुच्य तेदुष्प्रतिग्रहात् १ देवीश्रीगायत्री ॥ उशनाः ॥ पतितादद्रव्यमादत्तेभुं क्तेचब्राह्मणोयदि कृत्वातस्यसमुत्सर्गमतिकृच्छ्रंचरेद्द्विजः १ कश्यपः । अ सत्प्रतिग्रहेमासंवसन्गोष्ठेपयःपिबेत् चांद्रायणंवागोघ्नस्ययथोक्तंव्रतमाचरे त् १ गोघ्नव्रतंत्रैमासिकम् ॥ अभ्यासविषयमिदम् ॥ कामकृतसकृद्विषयंवा हारीतः ॥ मणिवासोगवादीनांप्रतिग्रहे सावित्र्याःसहस्रं जपेत् ॥ पंच मध्यमे दशाधमे द्वादशरात्रंपयोव्रतःशतसहस्रमतिमतिग्रहेप्वपि। उत्तम प्रतिग्रहेसहस्रम् ॥ मध्यमप्रतिग्रहेपंचसहस्राणिजपेत् ॥ प्रतिग्राह्यद्रव्य मध्यमत्वेन प्रतिग्रहस्य मध्यमत्वम् ॥ एवमधमप्रतिग्रहे दशसहस्राणि

प्रतिग्रह विषें पंच ५००० हजार गायत्री का जप करे ॥ और अधम दानके लेणें विषें दश १०००० हजार गायत्री का जप करे ॥ और बारां १२ रात्रि दुग्ध पानकरे ॥ और जो दान करणेसो अधमके बहुत बार लेणें विषें सो १००००० हजार अर्थात् लक्ष गायत्रीका जप करे ॥ अब इसीका अर्थ स्पष्ट कर्के कहते हैं उत्तमेति उत्तम दान लेणे विषे एक १००० हजार गायत्री का जप करे ॥ और मध्यम दान लेणे विषे पंच ५००० हजार जप करे ॥ अब मध्यमत्वादिका विवेक कहतेहैं प्रतीति प्रतिग्रह करणे योग्य जो द्रव्य सो मध्यम होवे तो प्रतिग्रहको भी मध्यमत्व है इस प्रकार अधम द्रव्यके प्रतिग्रह विषे दश १०००० हजार गायत्रीका जप करे इनका भेद अग्गे आवेगा ॥

अब इसीमे देवल जी कथन करते हैं नवेति नव दान उत्तम हैं और चार मध्यम हैं और संपूर्ण शेष रहे दान अधम कहे हैं एह बुद्धिमानों नें त्रय ३ प्रकारके दान कहे हैं ॥ १ ॥ अन्नमिति अन्न दधि मखीर रक्षा करणी गौ भूमि सुवर्ण मार्गका रस्तावताना हरित एह नव ९ उत्तम दान जानणें उत्तम द्रव्य के होणे तें ॥ २ ॥ और वियान्न क्या विद्या ग्रहण करके पिछे दिना जो अन्न और वस्त्र आवास क्या घर गोधन एह चार मध्यम दान हैं मध्यम द्रव्यके होणें तें ३ उपेति जोडा भगूंडा रथ छतड़ी पात्र आसन दीपक लकडो फलादि एह सपूर्ण चरम क्या अधम हैं परन्तु बहुत वर्ष लेता रहे तद ४ और ॥ अर्थ जातोंको बहुत होणेंते इनके नामकी संख्या नाहीं इच्छा करीदो है अर्थात् और वस्तु बहुत हैं इस वास्ते गिणनेमे नहिं आते हैं

अत्रदेवलः ॥ नवह्युत्तमानिचत्वारिमध्यमानिविधानतः अधमानीतिशेषाणित्रिविधत्वमिदंविदुः ॥ १ ॥ अन्नंदधिमधुत्राणंगोभूरुक्माध्वहस्तिनः ॥ एतान्युत्तमदानानिउत्तमद्रव्यमानतः २ विद्यान्नाच्छादनावासाः परितोगोधनानिच ॥ दानानिमध्यमानीतिमध्यमद्रव्यमानतः ३ विद्यान्नंविद्याग्रहणेनदत्तमन्नम् । आवासोगृहम् । उपानत्प्रेंखयानानिछत्रपात्रासनानिच ॥ दीपकाष्ठफलादीनिचरमंवहुवार्षिकम् ४ वहुत्वादर्थजातानांसंख्योद्देशेपुनेष्यते अधमान्यवशिष्टानिसर्वदानान्यतोविदुरितिछांदोग्येविहितम् ॥ तथा त्रीण्याहुरतिदानानिगावःपृथ्वीसरस्वतीत्यादिप्रपंचोदानग्रंथेऽवसेयः ॥ अत्रगावइतिवहुवचनमविवक्षितम् ॥ तेन तदवहुत्वमुत्तमःप्रतिग्रहः। सुमंतुः शूद्रयाजकःसर्वद्रव्यपरित्यागात्पूतोभवति

इस कारणते शेष रहे जो संपूर्ण दान सो अधम जानणें ५ एह छांदोग्य विषे विधान कीताहै इसमें ( संख्याशेषेपुनेष्यते ) इह पाठ भी है ॥ तैसे हि और कथन करते हैं त्रीणीति त्रय ३ अतिदान कहे हैं गौ पृथ्वी सरस्वती क्या विद्या इत्यादि प्रपंच दान ग्रंथ विषे जानणे योग्यहै इस विषे गाव एह जो बहुवचन है सो अविवक्षित जानणा अर्थात् इच्छातें नहिं किया होया जानणा तिस कारण करके एक भी गौ दान होवे सो उत्तम दान जानणा ॥ अब सुमंतु जी और प्रकार कथन करते हैं शूद्रेति शूद्रको यज्ञ करवाणे वाला पुरुष संपूर्ण द्रव्य जो शूद्र ते लेआ है तिसका त्याग कर देवे तो शुद्ध होजाताहै ॥

अब इसीमें वौधायनजी और प्रकारकर्के कहतेहैं वह्विति वहुतोंके लेणे योग्य जो दान तिसको एकहि लेलेवे ॥ और जिसका अन्न नहिं भक्षण करणा तिसका अन्न भक्षणकरलेवे ॥ और जिस को यज्ञ नहिं कर वाणा तिसको यज्ञकरावे ॥ और जिसका दान लेणेयोग्यहै तिसका दान न हिं लेवे ॥ एह संपूर्ण तरत्समंदी नाम ऋचाका जप करे इत्यादि और भी स्मृतियां यथार्थ कर्के जोडने योग्यहैं ॥ अब कुछक और प्रकार कहतेहैं किंचेति अभक्ष्य भक्षण प्रकरण विषे जो अ भोज्यान्न कहेहैं सो अप्रतिग्राह्यन्नभी कहेहैं तिनका अन्न नाहिं ग्रहण करणेयोग्य परंतु तिस अन्न के दान लेणेविषे भी प्रायश्चित्त सोई क्या जो अभोज्यान्नके भक्षणमे प्रायश्चित्तहै सो इसमे भी

वौधायनः । वहुप्रतिग्राह्यस्यवाप्रतिगृह्य अनशनीयस्यवान्नमशित्वाअया ज्यंयाजयित्वा प्रतिग्राह्यस्यवाअप्रतिगृह्य तरत्समंदीयंजपेदित्यादिस्मृत्यं तराणि यथायथंयोज्यानि ॥ किञ्चाभक्ष्यभक्षणे येऽभोज्यान्नाः प्रोक्ता स्तेऽप्रतिग्राह्यान्नाअपि तदन्नप्रतिग्रहे प्रायश्चित्तंतदेवावगंतव्यम् ॥ अत्रे दंविचार्य्यम् ॥ मनुनानिंदितेभ्योधनादानमित्यपात्रीकरणेपठितम् ॥ अ न्येस्तु । प्रतिग्रहस्याऽसत्त्वेदेशकालकर्म्मादिनिवंधनंवुद्ध्वोपपातकमध्येप ठितम् ॥ तत्रविकल्पएवशरणम् । अत्रवहुवक्तव्यंपृथक्संगृहीतेऽसत्प्रतिग्र हप्रकरणेद्रष्टव्यम् ॥ इत्यसत्प्रतिग्रहप्रायश्चित्तम् ॥ ५८ ॥ ॥

जानणा ॥ इसमे एह विचार करणेयोग्यहै क्योंकि मनु जीने निंदित पुरुषोंते धन का ग्रहण करणा एह अपात्री करण विषे विधान कीनाहै ॥ औरोंके मत विषे कहतेहैं प्रतीति प्रतिग्रहको जो असत्त्व है सो देश काल कर्म्मादिके निवंधको जाण कर्के उपपातकोंके मध्य विषे पडयाहैं तिस विषेविकल्प हि जानणा अर्थात् चाहे अपात्रीकरणमें जाणो चाहे उपपातकों मे जाणों ॥ इसविषे वहुत जो कहणाहै सो पृथक् संग्रह कीता जो असत्प्रतिग्रह प्रकरण तिसविषे देखणे योग्यहै ॥ एह असत्प्रतिग्रह का प्रायश्चित्त समाप्त भयाहै ॥ ५८ ॥ ॥

अथ मिथ्याभिशंसि और मिथ्याभिशस्तका प्रायश्चित्त कहतेहैं इनका लक्षणपीछे किहाहै॥ इसमें याज्ञवल्क्यजी कहतेहैं मिथ्येति मिथ्याभिशंसिकों मिथ्याभिशस्तसें दूणा दोष है और यथार्थव का को तुल्य दोषहै और मिथ्याभिशस्त के दोषकों मिथ्याभिशंसि ग्रहण करताहै १ अब इसी श्लोक का अर्थ स्पष्टकर्के कहतेहैं यइति जो कोई पुरुष अन्तः करण सें ईर्षा करण वाला है सो महापापीहै ऐसे दूसरे को झूठ कहताहै तिसको जिसको अभिशाप कियाहै तिसते दूणा प्रायश्चित्त होताहै ॥ अब कुछक और कहतेहैं यइति जिस पुरुषमे दोष विद्यमानहैं परन्तु दूसरे कर्के नहिं जाणयाहै तिस दोषकों लोकोंके सन्मुख प्रकट करताहै तिसको पातकि पु

अथमिथ्याभिशंसिमिथ्याभिशस्तयोः प्रा० ॥ योगीश्वरः ॥ मिथ्याभिशंसिनोदोषोद्विः समोभूतवादिनः ॥ मिथ्याभिशस्तदोषंचसमादत्तेमृषावदन १ यःकश्चिन्मात्सर्य्यकलुषितान्तः करणोऽसौमहापापीति परंमिथ्याभिशपति तस्य यस्याभिशापस्तद्द्विगुणं प्रायश्चित्तं भवति ॥ किंच ॥ यस्तु विद्यमानमेवदोषं परैरज्ञातं लोकसमक्षं प्रकाशयति तस्य पातकिदोषसमदोषभाक्त्वम् ॥ भूतंतत्त्वार्थंवदतीति भूतवादी तस्य ॥ भूतंतत्त्वार्थमुद्दिष्टंप्रमादाभिहितंछलमिति नारदस्मरणात् । इदमेवाहापस्तंवः। दोषंबुद्ध्वानपूर्वः परेभ्यः समाख्यातास्यात् परिहरेच्चैनंधर्म्मेष्विति ॥ किंच मिथ्याभिशंसिनोनकेवलं प्रायश्चित्तद्वैगुण्यं किंतु अभिशस्तस्य यत्किंचिद्दुरितजातं तद्गामित्वमपीत्याह मिथ्याभिशस्तदोषमित्यादि

रुषके तुल्यदोषहै ॥ और भूतकथा तत्त्वार्थकों जो कहै सो भूतवादी किहाहै तिसको ॥ भूत नाम तत्त्वार्थका है और प्रमादतें जो कथन कियाहै सो छल किहाहै एह नारद स्मृति किहाहै॥ अब इसीकों आपस्तंव जी कहतेहैं ॥ दोषको जाण कर्के प्रथम आप न करे ... तक दूसरा कथन न करे जेकर कहे तो धर्म्मोंके विषें इसको त्यागदेवे ॥ अब कुछक और कथन करते हैं मिथ्येति मिथ्याभिशंसिकों केवल दूणा ही प्रायश्चित्त नहिंहै परन्तु अभिशस्त को जो कुछ पापोंका समूहहै सो भी मिथ्याभिशंसिको प्राप्त होताहै इस कर्के किहाहै मिथ्याभिशस्तदोषम् इत्यादि

अत्रेति इसमिथ्याभि शंसीके विषय विषें पापकी द्विगुणता यथार्थ नहिहै परन्तु अर्थवादहिहै क्योंकि थोडे प्रायश्चित्तके अगेकहणेंकरके निमित्त जो पापतिसकोभी लघुत्व प्रतीतहोणेंते । अथवा किएहोएका नाश और न किएहोएकी प्राप्ति होणेतें भी थोडा प्रतीत हुंदाहै ॥ जिसने कीताहै तिसको दंड न होआ और जिसने नहि कीता तिसको दंड होया ॥ अब कुछक और कहतेहैं उपेति उपपातकोंकी गणना विषे अभिशंसि और अभिशस्त नहिं पडेहैं ब्रह्मचारिका गुरुके प्रातिकूल्याचरणमे अर्थात् गुरुको दुःख देणेके प्रसंग विषे एहदोनो जाणेहें तिस कारणते भी निमित्त थोडा प्रतीतहोताहै तिसका प्रायश्चित्तकहतेहें महेति महापाप और उपपापकरके जो दूसरे को मिथ्या कहे सो जलपान करता होया और जप करता होया इन्द्रियोंको रोक करके महीना

अत्रहि पापद्वैगुण्यमात्रं न विवक्षितं किन्त्वर्थवादएव लघुप्रायश्चित्तस्यवक्ष्यमाणत्वेन निमित्तस्यापि लघुत्वभानात् ॥ कृतनाशाकृताभ्यागमप्रसंगाच्च ॥ किञ्च उपपातकगणनायामभिशंस्यभिशस्तौ न पठितौ ब्रह्मचारिणोगुरुप्रातिकूल्याचरणप्रसंगादिमौज्ञातौ ततोपि निमित्तंलघुप्रतिभाति तत्प्रायश्चित्तम्। महापापोपपापाभ्यांयोभिशंसेन्मृषापरम् अब्भक्षोमासमासीतसजपी नियतेन्द्रियः ॥ १ ॥ महापापंब्रह्महत्यादि उपपापंगोवधादि मृषैव ताभ्यामभिशंसेत्सोऽभिशंसी मासपर्य्यंतजलाशनोजपशीलश्चभवेत् जपश्चशुद्धवतीभिःकार्य्यः ॥ तथाचवसिष्ठः ॥ ब्राह्मणमनृतेनाभिशंस्य पतनीयेनोपपातकेन वा मासमब्भक्षः शुद्धवतीभिरावर्त्तयेदश्वमेधावभृथं वा गच्छेदिति ॥ एतच्चमहापातकशंसने सकृत्कृते उपपातकशंसने चासकृत्कृते प्रायश्चित्तंद्रष्टव्यमित्यपरार्कः ॥

नारोज स्थितरहे १ अब इसीका अर्थ स्पष्टकरके कहतेहैं महेति महापाप जो ब्रह्महत्यादि उपपाप जो गोवधादि इनां करके झूठही दूसरे को कहे सो अभिशंसी महीना दिन जलपान करे अथवा जपकरे ॥ जप जो है सो शुद्धवती नाम ऋचाकरके करे । तैसेहि वसिष्ठजी कहतेहैं ब्राह्मणमिति ब्राह्मणको झूठ कहना है अथवा पतित करण वाले जो उपपातक गोवधादि तिस करके अभिशंसन करे सो महीना रोज जलपान करे और शुद्धवती ऋचा करके स्नान करे अथवा अश्व मेध नाम यज्ञविषें जावे ॥ एह प्रायश्चित्त जेकर महापातकोंमेंसे एकवार पाप लगावे तो जानणा और उपपातकोंमेंसें बहुत वार पाप लगाया होवे तिसविषे प्रायश्चित्त देखणे योग्यहै इस अभिप्राय करके एह अपरार्कमें कथन कीता है ॥

अतिपातकादियोंकाभी एह अपरार्क जीका कथन उपलक्षण है तिसके अभिशंसन विषे उक्त प्रायश्चित्तको घटा वधालैणा ॥ तिसविषे भी एह ब्राह्मणकर्के अभिशंसनकीता होवे तिस विषे जानणा ॥ और जेकर ब्राह्मण क्षत्रियादियोंको अभिशंसन करे और क्षत्री ब्राह्मणका अभिशंसन करे तिसमे कहतेहैं प्रतीति प्रतिलोमापवादविषे दूणात्रीणा दंडहै और वर्णाको अनुलोम क्रमकर्के तिसते अर्द्ध २ न्यून जानणा इस दंडानुसार कर्के न्यूनाधिकता जानणी अर्थात् जो ब्राह्मण को ब्राह्मणके अपराधमे दंडहै सो ब्राह्मणसे क्षत्रियाणी विषे उत्पन्नहोएको अद्दा है ॥ और ब्राह्मणसें वैश्याणी विषे उत्पन्न होयेको उससेभी अद्दा है ॥ ऐसे शूद्री पुत्रके वास्ते उससे भी अद्दा है

अतिपातकादीनामप्येतदुपलक्षणम् । तदभिशंसनेपिप्रायश्चित्ततारतम्यं वोध्यम् ॥ तत्रापीदंब्राह्मणकर्तेऽभिशंसेद्रष्टव्यम् ॥ यदातु ब्राह्मणःक्षत्रियाद्यभिशंसी क्षत्रियश्चब्राह्मणाभिशंसीभवेत्तदा प्रतिलोमापवादेपु द्विगुणस्त्रिगुणोदमः वर्णानामानुलोम्येनतस्मादर्द्धार्द्धहानितइतिदंडानुसारेणहृद्धिह्रासौकल्पनीयौ यस्तुभूताभिशंसी तस्य त्वर्द्धं कल्पनीयम् ॥ अत्रेयंव्यवस्थायस्त्वतिपातकाभिशंसी तस्यैतदेवपादोनम् यस्तु महापातकाभिशंसी तस्यार्द्धम् उपपातकाभिशंसिनस्तुपादः ॥ तुरीयोब्रह्महत्यायाः क्षत्रियस्य वधेस्मृतइत्यादिना योगीश्वरेणोपपातके महापापतुरीयांशस्योक्तत्वात् ॥ प्रकीर्णाभिशंसिनस्त्वतोपिकिंचिन्न्यूनंप्रकल्प्यम् ॥

और जो अपराधका दंड शूद्रको शूद्रके अपराधमेहै सो शूद्रसे वैश्याणी विषे उत्पन्न होएको दूणाहै इसी तरां अगेभी जानणा ॥ अव इसमे विशेष कहतेहैं यइति जो भूताभिशंसीहै अर्थात् यथार्थ हि कहताहै कि तुमने मद्य पान कीताहै इत्यादि तिसको पूर्वोक्त व्रत अद्दा करणे योग्यहै इसमे भी एह व्यवस्था है कि अतिपातकके अभिशंसन विषे पिच्छे किहे होये प्रायश्चितके तीन पाद करणे और महापातकांके वरावर जो पाप हैं तिनांके अभिशंसन विषे अद्दा और उपपातकांके अभिशंसन विषे १ पाद व्रत जानणा एहि अर्थ विशद कर्के किहाहै ॥ तुरीयइति और प्रकीर्णपापके अभिशंसीको पादसे भी थोडा जानणा ॥

अत्रेति इस विषे भी शक्त्यादियोंकी अपेक्षाकर्के प्रायश्चित्त कल्पना करणे योग्यहै इसमें प्रमाण कहते हैं शक्तिमिति सामर्थ्यको अथवा पापको जाण कर्के प्रायश्चित्त की कल्पना करे इस स्मृतितें ॥ इसविषे शंख लिखित स्मृतिने वहुत प्रायश्चित्त किहाहै जैसें नास्तिक पुरुष और कृतघ्न झूठा व्यवहार करणे वाला और ब्राह्मणकी वृत्तिके नाश करण वाला मिथ्या कथन करण वाला एह संपूर्ण छे ६ वर्ष ब्राह्मणके घरमे भिक्षा करतेरहें और वर्ष रोज धोकर्के भिक्षाका अन्न भक्षण करें अथवा छे ६ महीनें गौआं के पीछे फिरतेरहें तो शुद्धहोतेहै ॥ इसमें ऐसा समझणा कि प्रायश्चित्त एक हि है परंतु धोतीहोई भिक्षाकी जगा गोसेवाका विकल्पहै सो एह प्रायश्चित्त अभ्यास विषय विषे जानणा ॥ और बारं बार हठ कर्के उक्तपापका करणा

अत्रापि शक्त्याद्यपेक्षया प्रायश्चित्तकल्पना कर्त्तव्या शक्तिंचावेक्ष्यपापंचप्राय श्चित्तंप्रकल्पयेदितिस्मरणात्। अत्र शंखलिखिताभ्यां गुरुप्रायश्चित्तमुक्तम् यथा नास्तिकःकृतघ्नःकूटव्यवहारी ब्राह्मणवृत्तिघ्नोमिथ्याभिशंसीचेत्यते षड्वर्षाणि ब्राह्मणगृहेषु भैक्ष्यंचरेयुः संवत्सरंधौतभैक्ष्यमश्नीयुः षण्मासा न्वागाअनुगच्छेयुरिति तदभ्यासविषयम्॥ सानुबंधे तदभिशंसननिमित्तेच ब्राह्मणस्यांकननिर्वासनादिदंडप्राप्तौ सत्यांवावेदितव्यम्। भार्याभिशंसनंप्र कीर्णकेप्रोक्तमपि प्रसंगादत्राप्युच्यते॥ यमः॥ क्रोधादुक्त्वागम्यात्वंभार्या यांहिनरः क्वचित्॥ प्रायश्चित्तंचरेत्कृच्छ्रंतस्यपापस्यशुद्धये १ प्राजापत्यं चरेद्विप्रः क्षत्रियोदिवसान्नव षड्रात्रंतुचरेद्वैश्यस्त्रिरात्रंशूद्रआचरेत् २ ॥

इस निमित्त विषे जानणा अथवा ब्राह्मण को किसे पाप निमित्त जो चिह्नकरणा और निर्वास क्या निकालदेणा इत्यादि दंडकी प्राप्तिविषे जानणे योग्यहै अर्थात् उसको जगा एहव्रतकराणा ॥ और भार्याको अभिशंसन क्या झूठा वक्ष्यमाण अपवादकरणा सो प्रकीर्णक प्रकरण विषे किहा भी है परंतु प्रसंगतें इसविषे भी कहदियाहै ॥ इसमें यम जी का वचनहै क्रोधादिति जो पुरुष अपणी स्त्रीको क्रोधतें तुं अगम्या क्या भगिनी है वा माता है ऐसा कहे सो तिस पापकी शुद्धि वास्ते कृच्छ्र व्रत करे तो शुद्ध होताहै ॥ १ ॥ और इस प्रकार ब्राह्मण कहे तो प्राजापत्य व्रत करे और क्षत्रि नव ९ दिन व्रतकरे और वैश्य कहे तो छे ६ रात्रि व्रत करे और शूद्र कहे तो त्रय ३ रात्रि व्रत करे ॥ २ ॥

अब सुवर्चलाके अधिकार विषे हारीत जी कहतेहैं अनृतेति झूठ कहणे मे और गाली देणे विषे और गुरुयोंकी चुगली करणे विषे इकीस २१ रात्रि तिस सुवर्चलाका यत्नतें पान करे ॥ १ ॥ और देवता गुरु ब्राह्मण इनांके उल्लंघन विषे त्रय ३००० हजार जप गायत्रीका करे तो शुद्ध होताहै ॥ अब इसीमे आपस्तंब जी कहतेहैं अनाक्रोश्यमिति जो नहिं गाली देणे योग्य तिसकों गाली देवे अथवा झूठ कहे तो त्रय ३ रात्रि अक्षार लवणका भोजन करे और शूद्र इस प्रकार करे तो सप्त ७ रात्रि उपवास व्रत करे ॥ और स्त्रियोंको भी एही प्रायश्चित जानणा ॥ अब विष्णुजी कहतेहैं विप्रस्येति ब्राह्मणके बध युक्त शपथकों मिथ्या करे अर्थात् मैं मेरे साथ हरिद्वारको ना जामागा तो मेरेको ब्राह्मणमारणेका पाप लगे ऐसा कह कर पीछे

सुवर्चलाधिकारेहारीतः ॥ अनृताभिशंसनाक्रोश गुरूणांपैशुनेषुच ॥ एकविंशतिरात्रंतुपिबेत्तामिवयत्नतः । १ । तामेवसुवर्चलामित्यर्थः ॥ देवगुरुब्राह्मणातिक्रमेत्रिसाहस्त्राजपोगायत्र्याः ॥ आपस्तंबः । अनाक्रोश्यमाक्रोश्यानृतंवोक्त्वात्रिरात्रमक्षारलवणभोजनम् ॥ शूद्रस्यसप्तरात्रमभोजनम् ॥ स्त्रीणांचैतत् । विष्णुः । विप्रस्यवधसंयुक्तंकृत्वातुशपथंमृषा ब्राह्मणोयावकान्नेनतीव्रंचांद्रायणंचरेत् ॥ १ क्षत्रियस्यपराकंस्यात् प्राजापत्यंतथाविशः वृषलस्यत्रिरात्रंतुव्रतंब्रह्महणश्चरेत् २ ॥ शंखः ॥ आक्रोशानृतवादेषुएकरात्रमुपवासः ॥ अथाभिशंसकप्रसंगादभिशस्तस्यापि प्रायश्चित्तमाह याज्ञवल्क्यः ॥ अभिशस्तोमृषाकृच्छ्रंचरेदाग्नेयमेवच ॥ निर्वपेत्तुपुरोडाशंवायव्यंपशुमेववा ॥ १ ॥

ना जावे तो ब्राह्मण यवोंके अन्न करके तीव्र चांद्रायण व्रत करे ॥ १ ॥ और क्षत्री मारणका पाप मेरेकोहोवे ऐसा कहे तो पराकव्रत करे और वैश्यमारणके विषयमेकहे तो प्राजापत्यव्रतकरे और शूद्र मारण विषे कहे तो ब्रह्महत्याका व्रत त्रय ३ रात्रि करे ॥ २ ॥ अब शंखजी कहतेहैं आक्रोशेति गाली देणे विषे और झूठ बोलणे मे एक रात्रि उपवास व्रत करे ॥ अब अभिशंसकके प्रसंगतें अभिशस्तका भी प्रायश्चित्त याज्ञवल्क्य जी कहतेहैं अभिशस्तइति मिथ्या जो अभिशस्त सो कृच्छ्र व्रत करे अथवा आग्नेय पुरोडाशका निर्वाप करे अथवा वायव्य चरुका निर्वाप करे एह अर्थ पिच्छे स्पष्ट होचुकाहै ॥ १ ॥

अब इसी श्लोकका अर्थ प्रगट कर कहतेहैं वसिवाति जिन पुरुषकों मिथ्या आभिशमन कीना है सो कृच्छ्र प्राजापत्य व्रत करे और अग्नि है देवता जिसका तिस चरुका निर्वाप करे अर्थात् तिसकी पूजा करे ॥ अथवा वायु है देवता जिसका तिस चरुकी पूजा करे एह पूर्वोक्त जो चार पक्ष हैं सो अभिशस्त पापकी गौरव और लाघवकी अपेक्षाकर जोडनेयोग्यहैं अर्थात् अनुपातक पाप कर्के अभिशस्त होवे तो वहुत प्रायश्चित्त करे और उपपातक पाप कर्के अभिशस्त होवे तो थोडा प्रायश्चित्त करे अथवा शक्ति अनुबंधादिकर्के जोडने योग्यहैं ॥ अब जो वसिष्ट जीनें मिथ्याकहणेका प्रायश्चित्त ( महीना रोज जलपान करे और शुद्धवती ऋचाका जप करे ऐसा किहाहै ) इसी कर्के अभि शस्तका अभिशाप क्या अभि शंसन किहाहै

यस्तु मिथ्याभिशस्तःसनु कृच्छ्रंप्राजापत्यंचरेत् आग्नेयंपुरोडाशंचरुंनिर्वपेत् अग्निदैवत्येन यजेदित्यर्थः। वा वायव्यंचरुंपुरोडाशंनिर्वपेत् । एतेपक्षा अभिशस्तपापगौरवलाघवापेक्षया शक्त्यनुवंधादिना वा योज्याः यत्तु वसिष्ठेन मिथ्याभिशापेन मासं यावदब्भक्षः शुद्धवतीजपंच विधायोक्तमेतेनाभिशस्तोऽव्याख्यातइति तन्महापापेनाभिशस्तविषयम् । इदंचवाचनिकमेव नत्वपराधनिवंधनं परिवित्तिरिववचनाद्भवतीत्यपरार्कः। कृमिदुष्टानामिव पूर्वजन्मनिपापसंभावनयाऽभिशस्तस्यापिप्रायश्चित्तमितिमिताक्षरा वहुपातकाभिशस्तेपैठीनासिः अनृतेनाभिशस्यमानः कृच्छ्रंचरेन्मासं पातकेपुद्विमासमतिपातकेषु महापातकेपुच

सो एह वचन महापाप कर्के अभिशस्तके विषयमें जानणा ॥ एह वाचानिक हि है अपराध निबंधसें नाहिहै अर्थात् अपराध सें नहि है परन्तु परिवित्तिकी न्याई वचनतें होताहै एह अपरार्कनें किहाहै ॥ जैसें परिवित्तिको वचनतें दोषकोविना भी प्रायश्चित्तहै तैसेंहि इसमें जानणा ॥ और जो पुरुष कीडोंकर्के युक्त है तिन विषे जन्मांतरके पापकी संभावना कर्के प्रायश्चित्तहै तैसेहि अभिशस्तको भी प्रायश्चित्तहै एह मिताक्षरामें किहाहै ॥ अब वहुत पातकोंकर्के अभिशस्त जो है तिसविषे पैठीनासिजी कहतेहैं अनृतेनेति झूठ कर्के अभिशस्त जो है अर्थात् तूं झूठ कहणवाला हैं ऐसे वचनका जो विषयहै सो महीनेका कृच्छ्र व्रत करे और जो महापातकों कर्के अभिशस्त होवे सोदो २ महीनेका कृच्छ्र व्रत करे ॥

अब थोड दोष करके जो अभिशस्त तिसविषे बौधायन जी कहतेहैं पातकेति पातक पापों करके अर्थात् उपपातकों करके जो अभिशंसन करताहै सो कृच्छ्र व्रत करे ॥ और जिसको अभिशंसन करताहै सो अर्द्ध कृच्छ्र व्रत करे ॥ इस विषे मिताक्षरा कार कहतेहैं यदिति जो वसिष्ठ जीका किहा होया कि महीना रोज जल पान करे एह जो बडा प्रायश्चित्त है सो कुछक काल नहिं कीताहै प्रायश्चित्त जिस अभिशस्तने तिसको देणे योग्यहै इसमें वचन है संवत्सरेति वर्ष रोज तक जो अभिशस्त है और दुष्टहै तिसको दूणा दंड किहाहै एह दंडकी अधिकता देखणेतें ॥ अब कुछक और कहतेहैं जो पंक्तियोग्य नहिं हैं तिनांके मध्यमें अभिशस्त

अल्पतरदोषाभिशस्ते । बौधायनः। पातकाभिशंसनेकृच्छ्रः तदर्द्धमभिशस्त इति ॥ अत्रमिताक्षरा यद्वसिष्ठोक्तंमासंयावत्पयोभक्षणंगुरुप्रायश्चित्तंतदभिशस्तस्यैव किंचित्कालमकृतप्रायश्चित्तस्यसतोद्रष्टव्यम् ॥ संवत्सराभिशस्तस्यदुष्टस्यद्विगुणोदमइतिदंडातिरेकदर्शनादिति ॥ किञ्चापांक्तेयमध्येऽभिशस्तस्यापिपाठः॥ तत्र मनुः ॥ पष्ठान्नकालतामासंसंहिताजपएववा होमाश्चशाकलानित्यमपांक्तयानांविशोधनमिति श्लोकोव्याख्यातः प्राक् एवमन्यदपिव्यवस्थापनीयम् इत्यभिशंस्यादिप्रा० । ६० ॥ इतिश्रीमन्महाराजाधिराजजम्बूकाश्मीराद्यनेकदेशाधीशप्रभुवराज्ञप्तकविगंगारामसंगृहीते पंचविषयप्रतिरूपके धर्म्मशास्त्रमहानिबंधे प्रायश्चित्तभागेउपपातकप्रकरणंद्वादशंसंपूर्णम् ॥ १२ ॥

का भी पाठ है तिस विषे मनुजी कहतेहैं पष्ठेति पष्ठान्नकालता महीना रोज रहे अथवा संहिताका जप करे और शाकल मंत्रों करके नित्य हवन करे एह जो पंक्ति रहितहैं तिनकी शुद्धि वास्ते किहाहै १ इस श्लोकका अर्थ स्पष्ट करके पीछे व्याख्यान कीताहै इसीप्रकार और भी ऐसी व्यवस्था करणे योग्यहै ॥ एह अभिशंस्यादिका प्रायश्चित्त समाप्त भया ६० और उपपातक प्रकरणभी बारवां पूरा होया १२ ॥ ॥ दोहा ॥ धर्मराज धरमादिकी वृद्धि करे विशेष गंगकवी की प्रार्थना उपपातकनिःशेष १ ॥ सं १९ ३५ ॥ वै० प्र० ३१

## ॥ १२ उपपातकप्रकरणसूचीपत्रमिदम्॥

## ॥ १२ उपपातकप्रकरणसूचीपत्रमिदम्॥

॥ १२ उपपातकप्रकरणसूचीपत्रमिदम् ॥

॥ १२ उपपातकप्रकरणसूचीपत्रमिदम् ॥

| पृ० | पं० | अशुद्ध | शुद्ध |
|---|---|---|---|
| १२४ | ७ मू. | ज्ञास्त्र | शास्त्र |

चतुर्थप्रकरणशुद्धिपत्रम्

| पृ- | पं. | अशुद्ध | शुद्ध |
|---|---|---|---|
| १२ | २ | मयज्य मू- | मयाज्ब |
| ४९ | १ | कमं टी. | कर्म |
| ४९ | ६ | सुनर्से टी- | सुननेंसें |
| ४९ | ७ | सूयंके | सूर्यके |
| ४९ | ६ | स्यात्दा मू- | स्याद्दा |
| ५० | ५ | विचर टी- | विचार |
| ५० | ६ | पेह टी- | येह |
| ५१ | ३ | साय टी. | साथ |
| ५१ | ४ | तरक्षेति टी. | तरेति |
| ५१ | ३ | गयेसें टी. | गधेसें |
| ५१ | ५ | भागिनोके टी. | भागिनीके |



द्वादशप्रकरणेयत्रयत्रमंत्रप्रतीकानिकृतानितत्पूर्त्यर्थमंत्रसंग्रहोलिख्यते

| पृ० | पं० | प्रतीक |
|---|---|---|
| ८५ | ६ | पुनर्म्मामिति पुनर्म्माविशताद्रयिः ॥ |
| ९० | ४ | मनोज्योतिरिति मनोजूतिर्जुषतामाज्ज्यस्यवृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञꣳसंमिमन्दधातुव्विश्वेदेवासइहमादयन्तामोꣳप्रतिष्ठ ॥ वा- सं-अ- २ मं. १३ ॥ |
| ९० | ५ | त्वमग्नेव्रतपाऽअसीति त्वमग्नेव्व्रतपाऽअसिदेवऽआमर्त्येष्वात्वंय्यज्ञेष्वीड्यः रास्वेयत्सोमाभूयोभरदेवोनःसविताव्वसोर्दाताव्वस्वदात् । वाज- । अ-च- मं.१६ |
| ९० | ८ | इयदुरुक्तमिति ओंइयंदुरुक्तंपरिवाधमानावर्णंपवित्रंपुनतीमआगात् प्राणापानाभ्यांवलमादधानास्वसादेवीसुभगामेखलेयंयुवासुवासाः परिवीतआगात्सउश्रेयान्भवतिजायमानःतंधीरासः कवयःउन्नयंतिस्वाध्योमनसादेवयंत इति ॥ |
| ९४ | १ | हꣳसःशुचिषदिति हꣳसःशुचिषद्वसुरन्तरिक्षसद्धोताव्वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम् वृहत् । वाजसनेयीसंहितायाम् अध्याय १० मंत्र २४ |
| १०३ | ६ | यदंतीति यदंतियच्चदूरकेभयंविंदतिमामिह पवमानवितज्जहि ॥ |
| १०३ | ७ | येनदेवाइति येनदेवाःपवित्रेणात्मानंपुनतसदा ॥ तेनसहस्रधारेणपावमान्यः पुनातुमां ॥ ऋग्वे-सं- अष्टक ७ अध्या . २ |
| १०३ | ७ | कयानइति कयानश्चित्रऽआभुवदूतीसदावृधःसखाकयाशचिष्ठयावृता । वासं. अ- ३६ मं - ४ ॥ |

द्वादशप्रकरणेयत्रयत्रमंत्रप्रतीकानिकृतानितत्पूर्त्यर्थंमंत्रसंग्रहोलिख्यते
पृ० पं० प्रतीक

१०४ २ व्रात्यस्तोमाश्चत्वारोहितीयउध्योव्रात्यगणस्ययेसंपादयेयुस्तप्रथमेनय
जेरंद्वितीयेननिंदितानृशंसास्तृतीयेनकनिष्ठाज्येष्ठाश्चतुर्थेनायेतप्रजननास्थ
विरासदास्यास्तेपांयोनृशंसुतमःस्याद्द्रव्यवत्मोवानूचानतमे वातस्यगार्हप
तेर्दीक्षेरंस्तस्यभक्ष्यमनुभक्षयंतआसीरन्व्रात्यधनानि भवंति तिर्यङ्नद्धमुष्णी
षंप्रतोदोज्याहोडोयोग्यंधनुस्तदास्यं वासः कृष्णशंकद्रुवपनं कृष्णदशंवात
दास्यंफलकास्तीर्णो विपथोश्वाश्वतएभ्योकंप्राभ्यांयुक्तःस्यादित्येके निष्को-
राजितोजिने पार्श्वसहिते कृष्णवलक्षेआविकेतद्वहपतेरेवमेवाजिनानांतरेषां-
दामतूपाणिवल्कांतानि द्विचूडान्याविकानिवासांसि। लोहितांतानि कृष्णां
तानिवातदास्यानिदामनीद्वंद्वउपानहौच कर्णिन्यौ कृष्णेस्याताामित्येकेमाग
धदेशीयायब्रह्मबंधवेदक्षिणाकालेव्रात्यधनानि दद्युःविरतेभ्योवा व्रात्यचर
णांतेष्वेवमृजानायंतीतिश्रुतेस्त्रयस्त्रिंशतं त्रयस्त्रिंशतं दक्षिणादद्युर्द्विगु
णागृहपतिरित्येके व्रात्यस्तोमेनेष्ट्वा व्रात्यभावाद्विरमेयुर्व्यवहार्याभवंत्यग्नि
पुद्ब्रह्मवर्चसवीर्यान्नाद्यप्रतिष्ठाकामानां यश्चापूतइव मन्येतयज्ञविभ्रष्टस्यच
यस्माद्वाविभ्रंशेरन ४ छांदोग्येविशेषोयथा ॥ कामं सुब्रह्मण्याग्रेष्येवंय
थास्तुत्सर्वमके पथोत्साहं दद्यादाग्रयानामनड्द्भिरण्याश्वाजानांत्रिवृतश्च
त्वारोनिरुक्तप्रातःसवनःप्रथमईशुयज्ञोग्रामकामस्य वा दक्षिणाश्वरथश्चतुर्यु
क्ष्या चोन्यतमस्तेजोब्रह्मवर्चसपुरोधा कामस्य बृहस्पतिसवोदवसूहवींषि
निर्वयत्यतिग्राह्यग्रहं गृह्णाति बृहस्पतेअतियदर्यइत्युपालंभ्योवार्हस्पत्ये
निहितपुनाराशंसेषु प्रातःसवनेनयाकुर्वन्नेकादश दक्षिणाव्यादिशत्यश्व
द्वादशा माध्यंदिने पाकरोत्युभयीरेकादशतृतीयसवनेननूबंध्यवपाहोमांतेपा
करणामतिक्रमणंच सर्वासामेकादशदशवा शतानिस्युः सहस्राणिवाश्वस्त्वे
वमाध्यंदिनेधिकोवाजपेयवदाज्यनाभिषिच्यते कृष्याजिने शुक्रामंथिसंशः

द्वादशप्रकरणेत्रययत्रमंत्रप्रतीकानिकृतानितत्पूर्त्यर्थंमंत्रसंग्रहोलिख्यते

पृ० पं० प्रतीक

स्त्रेणवान्यतमस्त्वभिवाद्योप्रत्यवरोहीस्यात्स्थपतिरित्येनंब्रूयुः सराजा नोब्राह्मणापंपुरस्कुर्वोरंत्स्यएतेनयजेतपुःश्येनवदसद्योमरणकामस्य

१३९ १ अथ मित्रविन्दाइष्टिरुच्यते साच श्रीकामराष्ट्रकाममित्रकामायु ष्कामाणांभवति। तत्रदशहवींपिभवन्ति आग्नेयोऽष्टाकपालः सौम्यश्चरुः वारुणो दश कपालःयवमयश्चरुर्वा २) अथवाव्रीहिमयश्चरुः मैत्रश्चरुः ऐन्द्र एकादश कपालः। वार्हस्पत्यश्चरुः सावित्रो द्वादश कपालो ऽष्टाक पालो वा पौष्णश्चरुः सारस्वतश्चरुः त्वाष्ट्रो दश कपाल इत्येतानि दश हवींपि उपांशु भवन्ति।तत्रउद्धरणे। मित्रविन्दार्थमिति। मित्रविंदयाहं य क्ष्यऽइति वरणे पात्रासादने शूर्पाग्निहोत्रहवणि स्फ्यः कपालान्येकपञ्चा शत्सप्तचत्वारिंशद्वा ३) वारुणचरुपक्षे दशभिरूनानि चरुस्थाल्यः प ञ्च पड्वा शम्याकृष्णाजिनमित्यादि। दक्षिणा दशगावः सहस्रं वा अ ष्टादशेध्मकाष्ठानि शृतावदानानन्तरं मेक्षणम् पात्र्यः पञ्च चतस्रो वा शेपं प्रकृतिवत् नानावीजधर्मा उक्ताः ग्रहणे अग्नये जुष्टम् सोमाय वरु णाय मित्राय इन्द्राय वृहस्पतये सवित्रे पूष्णे सरस्वत्यै त्वष्ट्रे जुष्टमिति प्रोक्षणे त्वा जुष्टमिति एकवीज पक्षे कणान्ते विभज्यालम्भः इदमग्नेर्व रुणस्येन्द्रस्य सवितुः पूष्णस्त्वष्टुश्च इदं सोमस्य मित्रस्य वृहस्पतेः स रस्वत्याश्च यथोक्तमग्नीधः कपालोपधानम् दशकपालेचत्वार्युपधाय षट् समं विभज्य त्रीणिदक्षिणतस्त्रीणि चोत्तरत इति पिष्टानां तण्डु लानां चेक्षणम्। ईक्षणान्ते पूष्णो विभागः इदमग्नेर्वरुणस्येन्द्रस्य सवितु स्त्वष्टुश्च इदं पूष्णः चरूणामित्यादि कातीये श्रौतसूत्र पंचमाऽध्याये द्रष्टव्यः॥

द्वादशप्रकरणयत्रयत्रमंत्रप्रतीकानिकृतानितत्पूर्त्यर्थमंत्रसंग्रहोलिख्यते

| पृ० | पं० | प्रतीक |
|---|---|---|
| २१४ | ९ | पवित्रवत्यः ॐआपोऽअस्मान्मातरःशुन्धयन्तुघृतेननोघृतप्वः पुनन्तु। विश्वᳲहिरिप्रंप्रवहंतिदेवीरित्यादि ॥ |
| २४४ | ६ | कनिक्रदज्जनुषंप्रब्रुवाणऽइयर्तिवाचमरितेवनावं ॥ सुमंगलश्च शकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत् । मात्वाश्येन ऽउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोऽअस्ता ॥ पित्र्यामनु प्रदिशंकनिक्रदत्सुमंगलोभद्रवादीवदेह ॥ अवक्रंददक्षिणतो गृहाणांसुमंगलोभद्रवादीशकुंत ॥ मानस्तेनऽईशतमाघशं सोबृहद्वदे० ॥ १ ॥ प्रदक्षिणिदभिगृणंतिकारवोवयोवदंतऽऋ तुथाशकुंतयः ॥ उभेवाचौवदतिसामगाऽइव गायत्रंचत्रैष्टुभंचा नुराजति ॥ उद्गातेवशकुनेसामगायासिब्रह्मपुत्रऽइवसवनेषुशं ससि ॥ वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावद विश्वतोनःशकुनेपुण्यमावद ॥ आवदंस्त्वंशकुनभद्रमावदतू ष्णीमासीनःसुमतिंचिकिद्धिनः ॥ यदुत्पतन्वदसिकर्करिर्यथाबृ हद्वदे०॥ २ ॥ ऋग्वेदसं -अष्टक २ अ- ३ शाकलमंत्राः |

॥ उपपातकप्रकरणशुद्धिपत्रम् ॥

| पृ० | पं० | अशुद्ध | शुद्ध |
|---|---|---|---|
| ६ | मू-२ | जका | जिका |
| ८ | १ | ७ | ८ |
| ८ | १ | कके | कर्के |
| ९ | ११ | अथ | अर्थ |
| ९ | म ९ | दशका | दशा |

| पृ० | प० | अशुद्ध | शुद्ध |
|---|---|---|---|
| ११ | मू- ४ | ब्रतम | ब्रतम् |
| ११ | मू. ९ | चरदि | चरेदि |
| १२ | मू. २ | ज्ञाति | जाति |
| १२ | टी. ४ | वघ | वध |
| १६ | मू. १ | घा | द्या |
| १६ | टी. २ | गोवृप इस जगा वृप कर्के सामान्य बैल जानणा कोई धुरंधुर बैल नहिं क्योंकि उह दश १० गौके तुल्यहै और इस जगा गौके मुल्ल तें थोडे मुल्ल वाला चाहिए | |
| २१ | मू. ५ टी, १ | प्रायश्चित्तमित्यादिश्लोकत्रयमाधिकमतोनिस्सारणीयम् | |
| २७ | मू- ८ | माधेव | माधवे |
| २९ | टी- ५ | अथ | अर्थ |
| ३१ | मू- ७ | काय | कार्य |
| ३१ | टी. २ | कण | कर्ण |
| ३८ | टी- ७ | परु | पुरु |
| ३९ | टी- १ | यस्त्री | परस्त्री |
| ५० | मू- ११ | सतासु | सूतासु |
| ५३ | मू- ६ | वत्य | वर्त्य |
| ५५ | टी- ७ | मेतिः | मेति |
| ५७ | टी- २ | तव | तक |
| ५७ | मू. ७ | श्चा | पश्चा |
| ५८ | मू. ५ | त्कृ | कृ |
| ५८ | मू. ८ | कृति | ष्कृति |
| ६५ | मू- २ | रे | रेत् |
| ७४ | टी- ९ | वा | व |
| ७७ | मू- ४ | दोपं | दोपः |
| ७७ | टीः ३ | घा | भा |

| पृ० | पं | अशुद्ध | शुद्ध |
|---|---|---|---|
| ७८ | टी- १ | पात | पात |
| ७९ | टी, ६ | अवस्थामे | अवस्थाकीस्त्रीकों |
| ८२ | टी- ५ | चरी | चारी |
| ८३ | टी- ५ | ब्रह्म | ब्राह्म |
| ८७ | मू- २ | च्छ | च्छ् |
| ८७ | मू- ७ | व्यम | व्यम् |
| ९० | मू. ६ | य | या |
| ९१ | टी, ६ | सूर्ये | सूर्यो |
| ९२ | टी- १ | ब्रह्म | ब्रह्म |
| ९२ | टी- २ | दरा | दर |
| ९२ | टी- ३ | शंक | शंका |
| १०४ | टी- ३ | आगरा | आगरा |
| १११ | मू. ६ | घार | धार |
| १३४ | मू- ११ | पा | पां |
| १५३ | मू- ८ | वार्पि | वार्षि |
| १९७ | मू- ६ | तादृकशाद्र | तादृक्शूद्र |
| २०० | मू- ६ | लस्या | लस्य |
| २०१ | मू- ७ | च्छ | च्छ् |
| २०५ | मू- ९ | अह | आह |
| २०६ | टी. ३ | त्रके | रात्रके |
| २०७ | टी, ५ | वांधादि | वंधादि |
| २०८ | टी;१ | घोडा | घोडा |
| २१० | मू- ६ | वह | वाह |
| २१० | मू- १ | पातपातयेत् | पातयेत् |
| २१० | मू- ७ | तिघ्नां | तिघ्नी |
| २१९ | मू- ७ | तथ | तथा |
| २२९ | मू- ३ | रत्रं | रात्रं |

| पृ० पं- | अशुद्ध | शुद्ध |
|---|---|---|
| २३० मू- ८ | सामा | मासा |
| २३२ मू० ७ | गोष्ट | गोष्ठ |

एह उपपातक प्रकरण श्रीसरकारजीकी आज्ञानुसार संस्कृतसे भाषा कर्के लोकोंके उपकारके लिये छपाया गयाहै अव इसके पठन पाठन कर्के जो अल्पवुद्धिभी लोकहैं सो भी प्रायश्चित्त समझहांक कहें गे जकर संस्कृतहि हुंदा तां पंडित लोक जो शास्त्रज्ञ हैं सोई कह सक्तेथ परन्तु एह ग्रंथ संस्कृतके साथ रक्षणे कर्के तिनोंकोभी प्रिय है और संस्कृत के और ग्रंथ किसे २ जगा अशुद्ध होणे गे इसकी शुद्धि अच्छी तरहा होई है और साथ शुद्धिपत्रभीहै और वहुत ग्रंथोंसें संग्रह होआहै इस कर्केभी प्रियहै इसकर्के सभलोकोंकों एह अपूर्व ग्रंथ पडना विचारणा चाहिए और इसमे एह स्थापन कीया गयाहै कि जो कोई प्रायश्चित्त की इच्छा करे तिनां सभनांको प्रायश्चित्त कराया जावे गा



ॐश्रीगणेशायनमः ॥ अब महापातक प्रकरणका प्रारंभ है तिसमे आदिविषें मंगलके अर्थ राजाधर्म्मकास्मरण कर्तेहैं ककुभांति दिशापति जो इंद्रादिहैं तिनके मध्याविषें अति उत्तमहै और सभलोकोंके प्राप्तहोनेका एकहि स्थानहै और ब्रह्मा विष्णु शिव इनोने दीयाहै सभका स्वामित्व अधिकार जिसको और धैर्य गति बुद्धि इनका कारण ऐसा जो धर्ममूर्त्तिहै तिसकामैं स्मरण करता हुं किसवास्ते पदपद विषें कठिन जो पातकहैं तिनके प्रगट करणे वास्ते और इसमे गति शब्द करके सामान्य ज्ञान और मतिशब्द करके विशेष ज्ञान जानणा १ । अब प्रायश्चित्त कदंबादिके विषें (अकुर्वन्विहितंकर्म्म) इत्यादि तीनहेतु अर्थात् वेदविषे जो विहित

ॐश्रीगणेशायनमः ॥ ककुभिपतिपुरस्थंसर्वलोकैकगम्यं विधिहरिहरदत्तस्वाम्यसर्वाधिकारम् प्रतिपदकठिनानां पातकानांविवृत्यै धृतिगतिमतिहेतुं धर्म्ममूर्त्तिंस्मरामि ॥ १॥ अथ प्रायश्चित्तकदंबादौ अकुर्वन्विहितं कर्म्मेत्याद्युक्तहेतुत्रयोत्पन्नपापपातकभेदानां जातिभ्रंशकरसंकरीकरणापात्रीकरण मलावह प्रकीर्णकोपपातकानुपातक महापातकातिपातकानां प्राप्तावसरतया महापातकातिपातकेनिरूप्यते अत्रेयं नवविधत्वगणनाऽतिपातकपार्थक्यबुद्धा प्रायश्चित्तरत्नाद्युक्तातिपातकस्य महापातकांतर्गतत्वेनाऽष्टधात्वमेवोक्तम्

तहै तिसका नहि करणा १ और जो तिसमे निषिद्धहै तिसका करणा २ और इन्द्रियों को न रोकणा ३ इनसें उत्पन्न जो पाप और पातक भेद हैं तिनके मध्यविषे जातिभ्रंशकरादि नवविधपापके निरूपण करके पश्चात् अवसरको प्राप्तहोकर महापातक और अतिपातक एह निरूपण करतेहैं ॥ ३ ॥ इसविषें जातिभ्रंशकरादि नव प्रकारके भेद होतेहैं जेकर अतिपातकको भिन्न करें नहि तो आठहैं और प्रायश्चित्त रत्नादि विषें अतिपातकको महापातकके अंतर्गत लिखाहै इसतें आठहि प्रकार कहेहैं अर्थात् महापातकका नामहि अतिपातकहै

एतदिति एहिपक्ष बहुतयांकों सम्मतहोणेतें असांकों प्रमाणहै ॥ प्रायश्चित्तेति प्रायश्चित्त प्रकरण विषे अतिपातकांकों कह करके कात्यायनजीने तो महापातकांके समान जो विष्णु प्रभृतियांने अनुपातकता करके कहेहैं तिनकी पातक संज्ञा कहीहै महापापमिति महापाप और अतिपाप तैसेहि पातक और प्रासंगिक और उपपाप एह पंजां पापांका गण कहाहै इसमें पातक संज्ञा कहीहै इति १ पातयतीति यथा गिडादेवे सो कहिए पातक इसव्युत्पत्ति करके तो महापातकहि पातक होताहै और अभ्यास करके उपपातकभी पातकहै कै ऐसें क. हतेहैं ॥ और जातिभ्रंशकरादियांके लक्षणादि तो तिसातिस निरूपणके अवसर विषे लिखेहैं और वाकी रहे जो महापातकांके भेद और लक्षण जैसे मनुजीने कहे है तैसें दिखांदेहां ब्रह्म-

एतदेवबहुसम्मतत्वाद्युक्तंप्रतीमः प्रायश्चित्तप्रकरणेऽतिपातकान्युक्त्वाकात्यायनस्तुमहापातकसमानांविष्णुप्रभृतिभिरनुपातकतयोक्तानांपातकसंज्ञामाह महापापंचातिपापंतथापातकमेवच प्रासंगिकंचोपपापमित्येवंपंचको गणइति पातयतीतिपातकमितिव्युत्पत्त्यातुमहापापमभ्यासेतूपपातकमपि पातकमितिकेचित् १ जातिभ्रंशकरादीनांलक्षणादीनिततन्निरूपणावसरएवलिखितानिअवशिष्टानिमहापातकभेदलक्षणानियथाहमनुः। ब्रह्महत्यासुरापानंस्तेयंगुर्वंगनागमः महान्तिपातकान्याहुःसंसर्गश्चापितैःसह १ एतल्लक्षणान्यपि तत्तन्निरूपणावसरेवक्ष्यन्ते इमान्येवयाज्ञवल्क्यापरार्कप्रायश्चित्तप्रकरणप्रायश्चित्तमयूखप्रायश्चित्तरत्नावल्यादौ अतिपातकानितु जनन्यांचभगिन्यांचस्वसुतायांतथैवच स्नुषायांगमनंचैवविज्ञेयमतिपातकम् १

ति ब्राह्मणको मारणा और मदिराका पीणा और स्वर्णकी चोरी करणी और गुरुकी स्त्रीसाथ गमन करणा एह महापातक कहेहैं तिनांके साथ जो संसर्गहै सोभी महापातक कहाहै ॥ १ ॥ लक्षणेति इनके लक्षणांकों तिस तिस निरूपणके अवसर विषे कहेंगे इमेति और एहि महापातक याज्ञवल्क्य और अपरार्क और प्रायश्चित्त प्रकरण प्रायश्चित्त मयूख और प्रायश्चित्त रत्नावली आदि ग्रंथां विषे भी लिखेहैं ॥ अब अतिपातक कहतेहैं ॥ जेतिमाता और भगिनी और कन्या और पुत्रकीस्त्री इनके साथ जो गमनहै सो अतिपातक जानणा १ इसमें एभी वातजानणी चाहिए जो माता और भगिनी और कन्या और पुत्रकी स्त्री वहुत प्रकारकीयां होतियां हैं परंतु इसजगा माता पिताकी स्त्री और गुरुकी स्त्री जानणी ऐसें और भी जानो

इदमिति ॥ एही अतिपातकांके लक्षण प्रायश्चित्तेन्दुशेखर ग्रंथविषे लिखेहैं और महा पातकतें कुछक जादै संभावना करके अतिपातक भिन्न किहाहै॥ महापातकेति ॥ बहुते ऋषियोंका एह मतहै कि जो महापातक है उसीका पर्य्याय वाचक अतिपातक है इति ॥ शूलपाणिने ऐसा कहाहै महेति महापातकतें भी अतिपातक वडाहै किसकरके विष्णुनें पापों की गणनाविषे पहलें गिणयाहै इस करके वडाहै कुछ औरभी अतिपातक वडा होनेकाकारण कहतेहां जाणकरके अथवा न जाणकरके जो अतिपातकको करे सो मरजावे ऐसाप्रायश्चित्त सुणीदाहै जैसे स्मृतिवचन है अतीति मातादिविषे गमनकरणे वाले इतने अतिपातकी अग्नि विषे प्रवेश करें तां शुद्धहोतेहैं और किसी प्रकारकरके कदाचित् भी शुद्धनहिं होते १ (कथंचन)इसका

इदमेवप्रायश्चित्तेन्दुशेखरे ॥ महापातकात्किंचिदाधिक्यसंभावनयापृथ गुक्तिः महापातकपर्य्यायमेवातिपातकमिति बहवः॥ शूलपाणिना ॥ महापातकादप्यतिपातकंगरीयः विष्णुना प्रथममुद्दिष्टत्वादित्युक्तम् किंच ज्ञानतोऽज्ञानतश्चात्र मरणांतिकमेवप्रायश्चित्तंश्रूयतेयथा ॥ अति पातकिनस्त्वेतेप्रविशेयुर्हुताशनम् अन्यथानिष्कृतिस्तेषांविद्यतेनक थंचनेति ॥ १ ॥ कथंचनेतिज्ञानतोऽज्ञानतश्चेत्यर्थः अन्यथा तदन र्थकंस्यात् ॥ भविष्ये॥ अतिपातकयुक्तानांप्राणान्तिकमुदाहृतम् अत्र सकृद्गमनेऽपि प्राणांतिकम् यथापूयतइत्यनुवृत्तौ हारीतेन ।सर्वोऽग्निं प्रविशेयुरतिपातकिन इति भणितम्॥ वृद्धविष्णुनातु । उत्तरोत्तरलघी यांसिपापानिगणितानि तत्र महापातकानंतरमेवातिपातकंगणितमतोम हापातकादतिपातकंलघीयः विज्ञानेश्वरमतेप्येवं सा स्मृतिःप्रथमप्रकर णे पापगणनायांद्रष्टव्या एषामवांतरभेदाअपि तत्रैवावगंतव्याः ॥

अर्थ एहहै कि अतिपातकको जाण करके अथवा न जाण करके करे [illegible] ऐसा न मानो तो कथंचन पद अनर्थक होजावेगा और भविष्य पुराण विषे भी लिख्याहै अतीति अतिपातकियोंको मरजाणा ऐसाहि प्रायश्चित्तहै । इसविषे एकवार गमन करने करके भी मरणांत प्रायश्चित्तहै जैसे पवित्र होवें इसअनुवृत्तिविषे हारीतने किहाहै अतिपातकी सतावी अग्नि विषे प्रवेश करे ॥ और वृद्धविष्णुने तो पहलेथे दूसरा छोटा दूसरे तें तीसरा छोटा इसी प्रकार पापोंकी गिणती करीहै तिस विषे महापातकतें पीछे [illegible] अति पातक गिणयाहै इस करके महापातकतें अतिपातक छोटाहै ॥ और विज्ञानेश्वरने भी अति पातकको छोटाहि कहाहै सो स्मृति पहले प्रकरण विषे और पापोंकी गिणती विषे देख लैणी इनां अतिपातकांके अवांतरभेद भी तिसी प्रकरण विषे देख लैणे इति

अथ ब्राह्मणवातिके लक्षण कथन करणवास्ते प्रथम ब्राह्मणका लक्षण कहतेहैं जन्मेति प्रथम जन्मकर्के शूद्रहोनाहै फेरजातकर्म यज्ञोपवीत संस्कार होने कर्के द्विजसंज्ञा होतीहै और वेदका अभ्यास करणे करके विप्रसंज्ञाहोतीहै और ब्रह्मको जाने तद ब्राह्मणहुंदाहै ॥ १ ॥ इसविषें संयोग पृथक्त्व न्यायकरके ब्राह्मणमें जन्महोना फेर संस्कार फेर वेदाभ्यास फेर ब्रह्मज्ञान एहसंपूर्ण यथासंभव कर्के भिन्न २ होवें अथवा एकत्रहोवेंतदभी ब्राह्मणत्व करदेतेहैं अर्थात् इनमेसें कोई एकभी संस्कारहोवे तदभी ब्राह्मण हुंदाहै और जन्म उत्पत्तिसें और तपसेंजानणा किस वास्ते कि वाल्मीकि ऋषि जन्मका भील था सो तपकर्के ब्राह्मण होता भया इस कर्के विश्वा

ब्रह्मब्रलक्षणमभिधातुं प्रथमंब्राह्मणलक्षणमुच्यते ॥ जन्मनाजायतेशूद्रः संस्काराद्द्विजोत्तमः वेदाभ्यासीभवेद्विप्रोब्रह्मजानातिब्राह्मणः १ अत्र संयोगपृथक्त्वन्यायेन ब्राह्मणाज्जन्म संस्कारोवेदाभ्यासोब्रह्मज्ञानंचेमानिसमुदितानि यथासंभवं व्यस्तानि मिलितानि वाब्राह्मणत्वप्रयोजकानि जन्मतु योनिस्तपसोवाबोध्यम् वाल्मीक्यादेस्तथास्मरणात् एतेनविश्वामित्रादावव्याप्तिर्व्याहता यद्वा विश्वामित्रोहिब्राह्मणीयमंत्राभिमंत्रितचरुभक्षणेनक्षत्रियोत्पन्नोपि ब्राह्मणएवेत्यभिध्येयम् ॥ क्षत्रियांतरब्राह्मणीभूताऽव्याप्तिस्तूक्तयुक्तेरेवमार्या क्षत्रियसंस्कारादौ किंचिद्भेदश्रवणात्तत्र नातिव्याप्तिः जन्मनाजायतेशूद्र इत्यत्र शूद्रसदृश इत्यर्थः

मित्रादि विषें अतिव्याप्ति दूर होजातीहै अथवा विश्वामित्र ब्राह्मण वनाने वाले मंत्रों कर्के मंत्रित चरुको क्षत्रियाणी भक्षण करती भयी तिस क्षत्रियाणीते उत्पन्नभीसा तदभी ब्राह्मण भावको प्राप्त हुंदा भया एह भी जानणा ॥ क्षत्रीति औरभी क्षत्री ब्राह्मण होते भये इस विषें अव्याप्ति तपरूप जो पूर्व युक्ति तिसीसें दूर करनी और क्षत्रिय संस्कार विषें ब्राह्मण संस्कारते कुछकभेदहै इसवास्ते तिस विषें दोष नहिहै और जो कियाहै जन्म कर्के शूद्र होताहै इस विषें शूद्र पद कर्के शूद्र समान जानना

और सादृश्यविषे भी एह पुरुष सिंहहै इत्यादि प्रयोगभी होनेहै अर्थात् जैसे पुरुष सिंहसमान क्रूरता कर्के युक्तहै कुछ सिंहाहि नहिहै इसीप्रकार जन्म कर्के शूद्र समान जानणा और वेदाभ्या स रहित जो ब्राह्मणहै सो जातिमात्र ब्राह्मण किहाहै १ इसी प्रकार जोवेदपाठीहै सो अनूचा न किहाहै २ और वेदपढना पढाना यज्ञ करणा और कराणा और दानदेना और दानलेना इनां छेयां कर्मां कर्के युक्त जो ब्राह्मण सो षट्कर्मा किहाहै ३ और जिसकी ब्रह्म विषे स्थि तिहै उसका नाम ब्रह्मनिष्ठ है ४ और यज्ञ सभको जो करावे उह याजक होताहै ५ इत्यादि ब्राह्मण भेद जानने योग्य है और शूद्र द्विज विप्र ब्राह्मण एह संज्ञा पूर्व पूर्व संज्ञातें

सादृश्येपि सिंहोयंमाणवकइत्यादौ प्रयोगदर्शनात् यत्र वेदाभ्यासादिविर हःसतुजातिमात्रोब्राह्मणः १ एवमनूचानः २ षट्कर्मा ३ ब्रह्मनिष्ठः४याजकः ५ इत्यादयोब्राह्मणभेदाज्ञातव्याः ॥ शूद्रद्विजविप्रब्राह्मणसंज्ञास्तुपूर्वस्मा दुत्तरोत्तरसंज्ञाप्रयुक्तगुणोत्कर्षाधायका नतु जात्यंतरप्रयोजकाः एवंविध ब्राह्मणवधे गुणापेक्षयाप्रायश्चित्ततारतम्यंवक्ष्यते अतएव सर्वोत्तमब्राह्मण लक्षणमाहवसिष्ठः योगस्तपोदमोदानं सत्यंशौचंदयाघृणा विद्याविज्ञा नमास्तिक्यमेतद्ब्राह्मणलक्षणम् १ स्वार्थमनपेक्ष्यपरदुःखप्रहरणेच्छा दया

आगे २ संज्ञाप्रयुक्त अधिक गुणका प्रति पादकहै कुछ और जाति प्रति पादक नहिहैं अर्था त् शूद्रतें आगे द्विजमें वहुत गुणहैं और ऐसेहि विप्रसें ब्राह्मणमे भी जानना और ऐसे ब्राह्म ण वध विषे जैसे २ गुणहे तिनके अनुसार प्रयश्चित्त आगे कहेंगे और इसी कारणतेंसभमे उत्तमजो ब्राह्मणहै तिसका लक्षण किहाहै वसिष्टजीने सो जैसे योग इति प्राणांको रोक कर चित्तको स्थिर करणा एह योगहै और तपकरणा कि शीत और उष्णको सहारणा और इ न्द्रियांको दुष्टविषयते रोकणा और अपने वित्तानुसार दानको कुछदेणा और सत्य बोलणापवि त्ररहणा और सभ ऊपर दयाकरणीकि अपने अर्थको त्याग कर दूसरेके दुःख दूरकरणकी इच्छा

परेति जोदूसरेके धन वृद्धिकी इच्छाकरणी अथवादूसरेके दुःखीहोयांर आपको दुःख जानणा अथवा निंदित वस्तुतें मनको हटाणा एह घृणाहै और विद्या पठन करणी और ब्रह्मज्ञानहो णा और आस्तिकभाव होणा ११ एह एकादश लक्षण जिसमें होवें सो उत्तमब्राह्मण किहाहै १ इति और एह योगादिगुण करके रहित जो ब्राह्मण है सो गौण किहाहै और ब्राह्मण कल्पका लक्षण चतुर्विंशति मतमें लिखाहै ब्रह्मेति ब्राह्मणवीर्यते उत्पन्न होवे और मंत्रसंस्कारतें हीनहै केवल ब्राह्मण जाति करके जो उपजीवका करे सो ब्राह्मण समान कि हाहै १ इस कारणतें गुणभेदकरके ब्राह्मणके भेद कहेहैं सोजैसे सममिति संस्कारहीन जो है सो अब्राह्मण किहाहै उसको जोदानदेणाहै तिसका समानाहि फलहोताहै अधिकफल न हि होता और जिसके केवल संस्कारहोएहैं उह ब्राह्मणब्रुव किहाहै उसको दान दिता हो

परसंपत्त्युदयेच्छा घृणा यद्वा परदुःखेपि दुःखित्वंघृणा जुगुप्सितेभ्योम नसोपसर्पणंवा एतदित्येकवचननिर्देशात्समुदितानां ब्राह्मणलक्षणत्वं त दभावेगौणोब्राह्मण इति। ब्राह्मणकल्पलक्षणं चतुर्विंशतिमते ब्रह्मवीजस मुत्पन्नोमंत्रसंस्कारवर्जितः जातिमात्रोपजीवीच सभवेद्ब्राह्मणःसमः १ अतएव गुणभेदेनब्राह्मणभेदायथा सममब्राह्मणेदानंद्विगुणंब्राह्मणब्रुवेअ धीतेशतसाहस्रमनंतंवेदपारगे १ अथब्रह्महलक्षणमपरार्के ब्राह्मणप्राण वियोगफलकव्यापारकर्ता सब्रह्महा कर्त्ताच स्वतंत्रस्तत्प्रयोजकश्च तत्र स्वतंत्रोनाम द्वारभूतकर्त्रंतरमनपेक्ष्य क्रियाप्रवर्त्तकः परतु स्वतंत्रस्यक रनुकूलमाचरंस्तत्साध्यांक्रियां साधयति सप्रयोजकः

या दूणाहोताहै और कुछपढाहोवे सो अधीतकिहाहै उसको दित्ता होया दान हजार गुणाहोता है और संपूर्ण वेदपढाहोवे उह वेदपारगहै उसविषे दानका अनंत फलहोताहे ॥ १ ॥ अथ ब्राह्मण हतकरण वालेकालक्षण अपरार्कमें लिखाहै कि जो पुरुष ब्राह्मणके प्राणवियोग करण वाला व्यापार करे सो ब्रह्महा किहाहै अर्थात् जिसकर्म करके ब्राह्मण मृत होजावे उस कर्मके करणवाला ब्रह्महा होताहै सोकर्त्ताभी दो प्रकारकाहै एक स्वतंत्र दूसरा प्रयोजक और तिस विषें स्वतंत्र तिसका नामहै कि जो द्वारभूत दूसरे कर्त्ताको त्याग करके केवल आ पहि कर्ममें प्रवृत्त होवे अर्थात् दूसरेकी सहायताते विना अकलाहि कामकरे और प्रयोजक उसका नामहै कि जो स्वतंत्रकर्त्ताके अधीनहोकर तिसकरके सिद्धकरणवाले कार्यको सिद्धकरे अर्थात् कार्यकरणवालेको अच्छीतरां प्रेरणाकरे उसको प्रयोजक कर्त्ता कहतेहैं

(प्रश्न) इसविषें स्वतंत्रतासे ब्राह्मणवध करणवालेका ब्रह्महा शब्द अंतरंग होताहै क्या साक्षात् तिसकावाचकहै और प्रेरक वहिरंग कहाताहै पूर्व २ जोहोवे उसकानाम अंतरंगहै और उसके पीछे २ जोहोवे उसकानाम वहिरंगहै पूर्वकार्यकासिद्धहोयां वहिरंग असिद्धहोताहै ) उत्तर ) एहनहि कहना किसवास्ते कि प्रयोजककाभी ब्रह्महा शब्द अंतरंगहै । सोकिहाहै आपस्तम्बजीने प्रयोजयितेति प्रेरणा करणवाला और कार्यमें प्रवृत्तको पीछे से प्रेरणा करण वाला और कार्य करणे वाला एह स्वर्ग नरक फल वाले कर्म विषे फल भागी होतेहैं अर्थात् शुभ कर्म विषे प्रेरक अनुमंता कर्ता एह स्वर्गको प्राप्त होतेहैं और अशुभ कर्म विषें एह नरकको प्राप्त होतेहैं इसवास्तें इनको भी ब्रह्महा कहतेहैं ॥ और जो बार बार शुभाऽशुभ कर्मका आरंभकरे तिस विषें अधिक फल होताहै (प्रश्न) अनुमंता जो है सोआपतो कुछ काम नहि क

तत्रस्वातंत्र्येणब्रह्मवधकर्त्तारं ब्रह्महेतिशब्दोंतरंगत्वादेवाचष्टे नतु प्रयोजकं वहिरंगत्वादितिनवाच्यंतस्यापितद्वाच्यत्वात् ॥ यदाहापस्तम्बः ॥प्रयोजयिताऽनुमंताकर्त्तावेतिस्वर्गनरकफलेषुकर्म्मसु फलभागिनःयोभूयआरभते तस्मिन्फलविशेषइति ॥ नचानुमन्तुःकथंकर्त्तृत्वमकर्त्तुश्चकथंस्वर्गनरकफलयोगइतिवाच्यम् प्रयोजकतयातस्यापि कर्त्तृत्वात् प्रवलेहिदण्डप्रणेतरि राजादौ तेनाननुमतःसत्यपि ब्रह्मवधरागे कश्चित्कर्त्तुं नशक्नुयात् अनुमतस्तुशक्नुयादितिवधादौ भवत्येवानुमन्तुः प्रयोजककर्तृत्वम् गोवलीवर्दन्यायेन प्रयोजककर्त्तुःपृथगनुमन्तोपात्तः

ता सोकर्ता कैसे होया और स्वर्ग नरक फल तिसको कैसे होगा ॥ ( उत्तर ) एह नहि कहना किसवास्ते कि प्रेरणा करणे करके हि तिसको कर्ताभाव होताहै उसते अर्थात् जो पुरुष प्रेरकर किसीसे कुछ कार्य करावे उसविषे प्रेरककाहि नाम होताहै इसवास्ते प्रयोजक भी वधहोताहै । जैसे कि तेजस्वीदंडदेनेवाले राजाके विद्यमानहोयां यद्यपि अननुमंताको अर्थात् राजाआज्ञाहीनको ब्रह्मवध करणेकी इच्छा है भी तदभी कोई करणेको समर्थ नहि होता और अनुमंता समर्थ होजाताहै । और वधादि विषे अनुमंताको प्रयोजक कर्ताभावहै ॥ और इस स्थानमें गोवलीवर्दन्याय करके अनुमंताका भिन्न ग्रहण कियाहै ॥ गोवलीवर्द न्याय एह है कि गामानय वलीवर्दंच इसमें गामानय करके वलीवर्दकाभी बोध था परंतु वलीवर्द शब्द भिन्न कहणे करके पूर्वला शब्दगोकाहि वाचक रहा ... भी जाणो ॥

श्रोर प्रयोजकका लक्षण प्रथम किइाहै ॥ श्रौर कार्य विषे प्रवृत्तकों जो उपदेश करे तिसका नाम अनुमंताहै ॥ श्रौर उपदेष्टाभी उसीको कहतेहैं ॥ एह केवल उदाहरण दिखानेवास्ते लिखाहै॥श्रौर जिसते विना कर्त्ता अपने कार्य करणेको समर्थ न हो सो सपूर्ण हननसिद्धिके वास्ते अनुरक्त घातक होताहै श्रौर इसीकारणते हि हंताके साथहि चतुर्दश १४ पैठीनसीनेकहे है हंतेति हन्ता १ मन्ता २ उपदेष्टा ३ संप्रतिपादक ४ प्रोत्साहक ५ सहाय ६ मार्गानदेशक ७ आश्रय ८ शस्त्रदाता ९ भक्तदाता १० उपेक्षक ११शक्तिमान् १२ दोषवक्ता १३ अनुमोदक १४ इनका अर्थ जो है सो दिखायीदा है साक्षात् जो मारे सो हंता कहाहै १

प्रयोजकस्तूक्तः अनुमंता प्रवृत्तप्रवर्त्तकः उपदेष्टेतियावत् प्रदर्शनार्थंचैतत् ततश्चयेनविनाकर्त्तास्वाक्रियांकर्त्तुनशक्नुयात्ससर्वोपिहननासिद्धयेव्याप्रियमाणोघातकोभवति ॥ अतएव हंत्रासहान्ये चतुर्दशोक्ताः पैठीनासिना हंता मन्तोपदेष्टाच तथासंप्रतिपादकः प्रोत्साहकःसहायश्चतथामार्गानुदेशकः १ आश्रयःशस्त्रदाताच भक्तदाताविकर्मणाम् उपेक्षकःशक्तिमांश्च दोषवक्तानुमोदकः अकार्यकारिणस्तेषां प्रायश्चित्तं प्रकल्पयेदिति २ हंता साक्षाद्धंता १ मन्ता ऽनुमन्ता प्रवृत्तप्रवर्त्तकः २ उपदेष्टा मर्मोद्घाटनादिकृत् ३ संप्रतिपादकः ॥ पलायमानममित्रमुपरुंधन् परेभ्यो हंतारं परिरक्षंश्च हंतुर्वृद्धिमानमुपनयन्नुपकरोतिसः ४ प्रोत्साहकःस्तावकः ५ सहायः सहगंता ६ अनुमादको हन्तुर्हर्षमनुयोक्ष्यति ॥ भक्तपदमौषधादेरप्युपलक्षकम् ॥ अन्यत्स्पष्टम्

श्रोर जो पुरुष कार्यमे प्रवृत्तको प्रेरणाकरे सो मंता किहाहै २श्रौर जो यथार्थ अभिप्रायको प्रकटकरे उसका नाम उपदेष्टाहै ३श्रौर मारणे वालेतें भयकरके आगे नसदा जो शत्रुहै तिसको भी रोकलेवे श्रौर श्रौर पुरुषांते मारणे वालेकोभी रक्षाकरके फेर मारणमे उसको दृढकरके उपकार करे तिसकानाम संप्रतिपादक है ४ श्रौर जो मारण वाळेकी स्तुतिकरे उसकानाम प्रोत्साहकहै ५ श्रौर साथ जो गमन करे उसकानाम सहायहै ६ श्रौर हंताके हर्षको प्राप्त होया २ हर्षको प्राप्तहोवे तिसकानाम अनुमोदकहै ७ श्रौर हंताको भत्त कया भोजन देवे उसकानाम भक्तदाताहै इसमे भक्तशब्दकरके औषध इत्यादिकाभी ग्रहण करणा श्रौर सभ स्पष्ट है

यह सभ पापी होते हैं इस वास्ते इनको भी प्रायश्चित्त देणे योग्यहै और इनका प्रायश्चित्त न्यूनाधिक भाव करके आगे किहा जावेगा इसमे अनुमंता उसका नाम है कि जो अनुमति देवे सो अनुमति दो२ प्रकारकी है एक तो जिसको विरोध करके हत करणा होवे उस विषे अनुमंताको भी कुछ विरोध होवे और सो अपने विरोधते मारण वाले को तिसके मारण विषे युक्ति कहे १ और दूसरा किसीने कहा है कि मै अमुक पुरुष को मारताहुं इस प्रकार तिसके वाक्य को सुनकर तिसका वधते निषेध न करे ॥ इस प्रकार तिसके योगते अनुमंता दो प्रकारका होता है ॥ और इसी प्रकार उपदेष्टा भी दो २

प्रायश्चित्ततारतम्यंवक्ष्यते अत्रानुमंताऽनुमतिकर्त्ता सानुमतिर्द्विविधा यद्वि रोधाद्धननंसंभवति तत्रानुमंतुरपि विरोधस्तत्प्रयुक्तिः १ अपरा एतं हन्मीति वचने शक्तस्याप्रतिषेध एवेति तद्योगादनुमन्ता द्विविधः एवमुपदेष्टापि स्वभृत्यं वेतनदानादिना स्वतःप्रवृत्तमेव मंत्रोपायादिना प्रयोजकत्वाद्द्विविधः आभ्यांभेदाभ्यांसहानुमंत्रादयश्चतुर्दश १४ हंतात् पंचदशकः १५ इतिशूलपाणिमतेनोक्तम् तत्र ये भक्तदाता विकर्मणामित्यादयस्तेतु परमरणमभिसंधाय यदि भक्तादि प्रयच्छंति तदा वधहेतवो न भक्तादिदानमात्रेण यदि तन्मात्रेणापि हेतुता स्यात्तदा पित्रोरपि पुत्रंजनयतोस्तत्कर्तृकासु कुशलाकुशल क्रियासु हेतुता स्यात्

प्रकारका है कि एक तो अपने भृत्यको धन दे करके वध करवाणा १ और दूसरा स्वतंत्र जो उद्यत है तिसको मंत्र अर उपायादि करके वध विषे प्रवृत्त करणा २ इन भेदोंके साथ अनुमंतादि १४ होते हैं और हंता १५ वां होताहै एह शूलपाणिजी के मतमे कहाहै अनंति और तिसविषे दुष्टको जो अन्नदाता हैं सो जेकर किसीके मारणे वास्ते दुष्टको अन्नादिदेवें तद उहभी वध विषे कारण होते हैं कुछ अन्नादि दने करके हि नहि पापीहोते और जेकर अन्नमात्र देणे करके वधकी कारणता होवे तद पुत्रको उत्पन्न करते जो माता पिता हैं तिनको भी पुत्रकृत शुभाऽशुभ क्रिया विषे कारणता होनी चाहिए

और ऐसे होयां योनि संसर्गका निषेध दूर होजंदाहै एह मिताक्षरा में लिखयाहै॥और पतिततें उत्पन्न जो कन्याहै तिसकोभी प्रायश्चित्त बौधायन जीने किहाहै कि अपवित्र वीर्यतें जो उत्पन्न कन्याहैं तिनको जेकर प्रायश्चित्त करणेकी इच्छा होवे तद तिनको पतित प्रायश्चित्त का तीसरा हेस्सा प्रायश्चित्त करणा किहाहै क्या कि पतित पिताके जितने पतित होनेवाले कर्महैं तिनकर्मोंका जो प्रायश्चित्त किहाहै तिसका तीसरा हेस्सा पतिततें उत्पन्न जो पुरुषहै तिनकोहै और तिसका तीसरा हिस्सा स्त्रीयोंको हुंदाहै ॥ किंचेति और पतित पुरुषतें अथवा पतित स्त्रीतें जो उत्पन्न कन्याहै तिसको जान्नणा॥किसवास्ते कि पुरुषकी न्यायीं स्त्रीयांकोभी पातकी इत्यादिके संसर्गतें पतित भाव हुंदाहै॥और जैसे शौनक जीने किहाहै कि पुरुषको जितने पत

एवंचसतिपतितयौनसंसर्गप्रतिषेधोऽपिपरिहृतोभवतीतिमिताक्षरा। कन्यायाश्चपतितोत्पन्नायाःप्रायश्चित्तमाह बौधायनः॥अशुचिशुक्रोत्पन्नानामिच्छतां प्रायश्चित्तानि पतनीयानांतृतीयांशःस्त्रीणामंशातृतीयः॥ अयमर्थः जनकस्य पतितस्ययानि पतनीयानि कर्म्माणि तत्प्रायश्चित्तानांतृतीयांशः पतितोत्पन्नानांपुंसांप्रायश्चित्तम् तस्यापि तृतीयोभागःपतितोत्पन्नानांस्त्रीणामिति॥ किंचपतितोत्पन्नायाः पतितात्पुरुषात् पतितायाःस्त्रियोवोत्पन्नायाइत्यर्थः॥ पुरुषवत्स्त्रीणामपि महापातक्यादिसंसर्गात्पातित्यमविशिष्टम्॥यथाह शौनकः॥पुरुषस्ययानिपतननिमित्तानिस्त्रीणामपितान्येव ब्राह्मणी हीनवर्णसेवायामधिकं पततीति॥अतस्तासामपिमहापातकिप्रभृतीनांमध्ये येनसहसंसर्गस्तदीयमेव प्रायश्चित्तमर्धंकृत्वा योजनीयम्।एवं बालवृद्धातुराणामपिकामतोऽर्धमकामतःपादः॥तथानुपनीतस्यापिबालस्य कामतःपादोऽ कामतस्तदर्धमित्येवमादिकं ॥

न करण वाले कर्महैं ओहि स्त्रीयांकोभी पतित करणे वाले कहेहैं ॥ और ब्राह्मणी हीनवर्णकी सेवा करके अधिक पतित होतीहै इसकारणतें तिनकोभी महापातकी अतिपातकी इत्यादिके मध्य विषे जिसके साथ संसर्ग होवे उसके प्रायश्चित्तका अर्ध करणा चाहिये ऐसी योजनाकरणी योग्यहै॥और इसी प्रकार बालक वृद्ध रोगी इनकोभी कामनाते आधा और कामनाते विना चौथाहेस्सा प्रायश्चित्त जान्नणा ॥ और तैसेहि यज्ञोपवीततें रहित जो बालकहै तिसको कामनातें चौथा हेस्सा और कामनाते विना आठवां हेस्सा प्रायश्चित्तहै इति दिक् क्या इसी मार्गसे आगे विचार करणा ॥

और प्रायश्चित्तेंदु शेखर विषें माधव जीका वाक्यहै कि संसर्ग दोष कलियुग विषें पतित भावको नहि प्रति पादन करता किंतु पापमात्रकों प्रतिपादन करताहै किंस वास्ते कि संसर्ग दोष कलि युग विषें त्यागकरणे योग्यहै इस वचन कर्के कलि वर्ज्य प्रकरण विषे गणना होणेते। और वास्तवते सत युग विषें पाप होवे उस देशकोंहि त्याग देवे और त्रेता विषें उस ग्रामकों त्याग देवें। और द्वापर युग विषें उस एक कुल कों त्याग देवे। और कलि युग विषें पाप करण वालेकों त्याग देवे १ इस पराशरजीके वचनतें सत्य युग विषे देशका और त्रेता विषें ग्रामका और द्वापर विषें कुलका यो त्यागहै सो कलि युग विषें नहोवे इस कारणते संसर्ग की कलि वर्ज्यों के मध्य विषें गिणती योग्यहै। और एह और कलि युग विषें विशेष किहा है कि जो सत्य युग विषें पापीके साथ संभाषण मात्र करणेतें पतित भाव होजाताथा। औ

प्रायश्चित्तेन्दुशेखरेमाधवः॥संसर्गिदोषः कलौपातित्यापादकोनकिंतुपाप मात्रापादकः।संसर्गदोषःपापेष्वितिकलिवर्ज्येषुगणनादित्याह॥वस्तुतस्तु त्यजेद्देशंकृतयुगेत्रेतायांग्राममुत्सृजेत् द्वापरेकुलमेकंतुकर्त्तारंतुकलौयुगइ तिपराशरवचनात्॥कृतयुगादौदोषजनकत्वेनोक्तदेशादिसंसर्गस्यैवकलिव र्ज्येषुगणनंयुक्तम्॥ अयंचापरः कलौविशेषः। यत्कृतेसंभाषणमात्रादेवपा तित्यम्॥त्रेतायांस्पर्शमात्राद् द्वापरेतत्स्वामिकान्नमात्रग्रहणात् तत्कलौस्ने हेन समुदितेनैव संभाषणादिकर्मणा नत्वेकेनेतिदिक्॥किंचसंसर्गिसंसर्गि णांपादपादहानिः ॥ तथाच मुख्यमहापापिनांसंसर्गवतोद्वादशाब्दम्॥ तत्संसर्गिणोमुख्यात्ततीयस्यनवाब्दम् ॥

र त्रेता युग विषें पतितके साथ केवल स्पर्श मात्र करणेते पतित भाव हो जाताथा और द्वापर विषें पतितका अन्नमात्र ग्रहण करणेतें होजाताथा। और सोयी पतित भाव कलि युग विषें पतितके साथ स्नेह कर्के होताहै क्या एकत्र संभाषणादि कर्म कर्केहै एक कर्के नहि अर्थात् कलि युग विषें पतित के साथ संभाषण स्पर्श अन्नग्रहण स्नेह इन संपूर्ण कर्मों कर्के पतित भाव होजाताहै। और किहाहै कि संसर्गीके जो संसर्गीहैं तिनको पाद पाद हानि कर्के प्रायश्चित्त करणा योग्यहै। तथेति और तैसेहि मुख्य जो महापापीहैं तिनके साथ संसर्ग करण वालेकों बारां १२ वर्षका व्रत करणा किहाहै और तिसके संसर्गिकों मुख्यपापीतें तीसरेकों नव ९ वर्षका व्रत करणा किहाहै ॥

और तीसरे के साथ संसर्ग करण वाले कों क्या मुख्य पापीतें चौथे कों छे ६ वर्ष व्रत करणा योग्यहै ॥ और मुख्य पापीते पांचमे संसर्गीकों तीन वर्ष व्रत करणा किहाहै । और मुख्य पातकीतें जो दूसराहै क्या मुख्य पापी का जो संसर्गीहै तिसको हि पतित भाव होनेतें श्रौत स्मार्त कर्म की हानि होतीहै अर्थात् पतितको वेद विहित कर्म और स्मृति विहित कर्म नहि करणे योग्यहै ॥ और तीसरेते आदिक जो हैं तिनकों केवल प्रायश्चित मात्र होताहै और वेदोक्त कर्म की हानि नहि होती ऐसे मिताक्षरा विषे लिखयाहै । और प्राचीनों के मत विषे पाद हानि क्रम करके तीसरेने संसार्गिव्रत का आधा मात्र व्रत करणे योग्यहै ॥ और चौथेकों पाद व्रत जाणणा और पांचवेको कुच्छ प्रायश्चित्त नहिहै अर्थात् मुख्यपापीको जो प्रायश्चित्त है तिसते आधा तिसके संसर्गीको हुंदाहे ॥ और संसर्गीके संसर्गीको तिसते आधा॥ और आगे तिसके संसर्गीको चौथा हिस्सा ॥ और आगे तिसके संसर्गीको पांचवे स्थान कुछ व्रत नहि करणा किहाहै ॥ और प्रायश्चित्त कदंव विषे व्यास देव जी का वाक्यहै येऽइति कि जो जिस पातकीका अन्न भक्षण करण वाले ब्राह्मण हैं तिनको कृच्छ्र विधान कीयाहै और आगे तिन ब्राह्मणोंका जो अन्नभक्षण करण वालेहैं तिनको अर्ध कृच्छ्र करणा किहाहै फेर आगे तिनका जो अन्न भक्षण करण वालेहैं तिनको चौथाहिस्सा प्रायश्चित्त करणाकिहाहैं ॥ १ ॥ और तैसेहि आप स्तंव जीनें किहाहै भुक्तमिति कि जिनोने पातकीके घर विषे पक्का न भक्षण कीयाहै तिनके वास्ते प्रायश्चित्त कृच्छ्र विधान कीयाहै और आगे तिनके घर विषे जिनोनें अन्न भक्षण कियाहै तिनको आधा और आगे चौयाहिस्सा प्रायश्चित्त दिखायाहै। १। और योयेन इत्यादि जो मनुवचन है सो संसर्गी तीनका बोधक जाणणा योग्यहै ॥ और मिताक्षरा विषें तो ऐसालिखयाहै ॥ कि ब्रह्महा मदिरा पीणे वाला स्तेन गुरुतल्पग एह महापातकीहैं इनके साथ जो संसर्ग करे सोभी महापातकी होताहै ॥ १ ॥

तृतीयेनसंसर्गवतोमुख्याच्चतुर्थस्यषडब्दम् । पंचमस्यत्रैवार्षिकम् ॥ मुख्य संसर्गिणोद्वितीयस्यैवपातित्याच्छ्रौतस्मार्तकर्महानिः तृतीयादेः प्रायश्चित्त मात्रं ॥ नतुवैदिककर्महानिरितिमिताक्षरा ॥ प्रांचस्तु पादहानिक्रमेण तृतीयेनसंसर्गिव्रतार्धमात्रंकार्यम् ॥ चतुर्थस्यतुपादः मुख्यात्पंचमस्यनाकिंचिदित्याहुः ॥ प्रायश्चित्तकदंवेतुव्यासः । येतदन्नाशिनोविप्राः कृच्छ्रंतेषां विधीयते तद्भोजिनोर्द्धकृच्छ्रेणतदन्नादाश्चपादतः १ तथाचापस्तम्बः ॥ भुक्तयैस्तत्रपक्वान्नंकृच्छ्रंतेषांविधीयते ॥तेषामपिचयैर्भुक्तमर्द्धंतेषांविनिर्दिशेत् तेषामपिचयैर्भुक्तंकृच्छ्रपादोविधीयते १ तथाचयोयेनेतिमनुवचनंसंसर्गित्रितयपरमितिध्येयम् ॥ मिताक्षरायांतु ॥ ब्रह्महामद्यपःस्तेनस्तथैवगुरुतल्पगः एतेमहापातकिनायश्चतैःसहसंविशेदिति ॥ १ ॥

और ( तैः ) इस पदकर्के सर्वनामका परामर्श होताहै इसकाकारणतें प्रकरण विषें ब्रह्महादि चारोंका जो संसर्गीहै तिसकाहि बोध होताहै और महापातकित्व इस वचनते महापातकीके संसर्गीको महापातकी भावहै औरोंको नहि आवता । प्रश्नः कि महापातकीका जो संसर्गहै सोयी महापातकी भावका कारण है क्यों ब्रह्महादि विशेष संसर्ग नहि व्यभिचारहोनेते अर्थात् चारोंके बीचसे किसेका हि संसर्ग होवेगा कोई सभका नहि इस कारणते ब्रह्महादि संसर्गीकें संसर्गीको भी महापातकी संसर्गहि विद्यमान हुया ॥ इसते तिस महापातकीके संसर्गीके संसर्गीकोभी महापातकी भाव होजावे कुच्छ निषेध नहि है ॥ इसबिषें कहतेहैं । उत्तर । कि जेकर ऐसा होवे तद संसर्गी संसर्गके महापातकी भावमें औरभी कुच्छ प्रमाण होणा चाहिये किसवास्ते एक शब्द कर्के जिसका ज्ञानहो

तैरितिसर्वनामपरामृष्टप्रकृतब्रह्महादिचतुष्टयसंसर्गिणएवमहापातकित्व वचनात्तत्संसर्गिणोनमहापातकित्वम्॥ ननुमहापातकिसंसर्गएवमहापात कित्वेहेतुःनब्रह्महादिविशेपसंसर्गस्तस्यव्यभिचारात् अतोब्रह्महादिसंसर्गिणोपिमहापातकिसंसर्गोविद्यतइतितस्यापिमहापातकित्वंस्यान्नचप्रतिषेधः उच्यते स्यादेवंयदिप्रमाणांतरगम्यंमहापातकित्वंस्यात् शब्दैकसमधिगम्येतुतस्मिन्नैवंभवितुमर्हतीति तैरितिप्रकृतविशेपपरामर्शिनासर्वनाम्नाब्रह्महादिविशेपसंसर्गस्यैवमहापातकित्वेहेतुत्वस्यावगमितत्वात् एवंचसति प्रतिषेधाभावोप्यहेतुःप्राप्तभावादेव॥अतःसंसर्गिसंसर्गिणांद्विजातिकर्मभ्योहानिर्नभवतिप्रायश्चित्तंतुभवत्येव॥ नचसंसर्गिसंसर्गिणःपातित्याभावेकथंप्रायश्चित्तमितिवाच्यम् एनास्विभिरनिर्णिक्तैर्नार्थांकंचित्समाचरेदिति सामान्येनैनस्विमात्रसंसर्गप्रतिषेधनमहापातकिसंसर्गिसंसर्गस्यापि प्रतिपिद्धत्वात्पातित्याभावेपि युक्तमेवप्रायश्चित्तम्

ताहै उस विषें ऐसाहोणा योग्यहै और (तैरिति) एह जो प्रसंग विषें विशेषका परामर्श करताहै इस सर्वनाम कर्के ब्रह्महादि विशेष संसर्गको हि महापातकी भावका कारण जाणणे योग्यहै ॥ इस कारणते और ऐसे होयां प्रतिषेधका अभाव हि कारण होजावे ऐसा नहि प्राप्तिके अभावतें ॥ और इस कारणते संसर्गीके संसर्गियोंको द्विजाति कर्मतें हानि नहि होती और प्रायश्चित्त होताहिहै ॥ कि ऐसा नाहि कथन कारणा कि संसर्गीके संसर्गीको पतित भाव न होनेते कैसे प्रायश्चित्त हुया सोयी लिखयाहै कि जिन पापियोंने पापका प्रायश्चित्त नहि कीता तिनके साथ कुच्छ कार्य न करे इस सामान्य ग्रहण कर्के संपूर्ण पापी मात्र संसर्गके निषेध कर्के महापातकी क संसर्गी संसर्गके निषेध होनेतें पतितभावके अभाव होयांभी प्रायश्चित्त करणा योग्यहै और सो प्रायश्चित्तभी पादहीन जाणना

अर्थात् जो प्रायश्चित्त जिसको किहाहै उसीका पादहीन तिसके संसर्गिको जाननणा और जो पुरुष जिस पापीके साथ एक वर्ष निवास करे सोभी तिसके सामानहि होजाताहै इस कारणते सो ब्राह्मणादितिस२के व्रतको पाद हीन करें ऐसे जो व्यासदेव जोने कथन कीताहै सो देखने योग्यहै और इसी प्रकार चौथा पांचवाजो कामनातें संसर्गी होवें तिनको भी आधा और पाद प्रायश्चित्त जाणणे योग्यहै ॥ इस कारणते साक्षात् ब्रह्महादि संसर्गि कोही ब्रह्महादि प्रायश्चित्त का अधिकारहै और तिसके संसर्गिको नहिहै ऐसा सिद्धहुया इस प्रकार मिताक्षरा विषे व्याख्यान किताहै॥अवनिषिद्ध संसर्ग प्रसंगते निषिद्ध संसर्गते उत्पन्नजो प्रति लोमहैं तिनके वध विषे प्रायश्चित्त याज्ञवल्क्य जोने किहाहै चांद्रायण मिति किवर्णांते जो अवकृष्टहैं

तद्व्रपादहीनम् योयेनसंवसेद्वर्षंसोपितत्समतामियात् पादहीनंचरेत्सोपि तस्यतस्यव्रतंद्विज इतिव्यासोक्तेर्द्रष्टव्यम् एवंचतुर्थपंचमयोरपिकामतः संसर्गिणोरर्धहीनंत्रिपादोनंचद्रष्टव्यम् अतःसाक्षाद्ब्रह्महादिसंसर्गिणएवतदीयप्रायश्चित्ताधिकारोनतत्संसर्गिणइतिसिद्धमितिव्याख्यातम्॥निषिद्धसंसर्गप्रसंगान्निषिद्धसंसर्गोत्पन्नप्रतिलोमवधेप्रायश्चित्तमाहयाज्ञवल्क्यः चांद्रायणंचरेत्सर्वानवकृष्टान्निहत्यतु १ वर्णेभ्योऽवकृष्टान्वर्णवाह्यानंत्यजान्पुरुषान्सर्वान्निहत्यप्रत्येकंचांद्रायणंचरेत् मिताक्षरायांअवकृष्टाःसूतमागधादयः प्रतिलोमोत्पन्नाःतेषांप्रत्येकंहननेचांद्रायणम् तथाचशंखः।सर्वेषामवकृष्टानांवधेप्रत्येकंचांद्रायणामिति यच्चांगिरसोवचनम् । सर्वांत्यजानांगमनेभोजनेसंप्रमापणे पराकेणविशुद्धिःस्यादित्यांगिरसभाषितमितिपराकंकुर्यात्

कृष्ट वर्ण वाह्यहैं तिनको और संपूर्ण अंत्यज पुरुषों को मार करके एक २ के वध करणे विषे चांद्रायण करे।१।और मिताक्षरा विषे अव कृष्ट सूतमागध इत्यादि जो प्रति लोम करके उत्पन्नहैं तिनका नामहै अर्थात् शूद्रते वैश्या क्षत्रिया ब्राह्मणो इन विषे जो उत्पन्न होवें और वैश्यते क्षत्रिया ब्राह्मणी इन विषे जो उत्पन्नहैं और क्षत्रियत ब्राह्मणी विषे जो उत्पन्न होवे एह प्रतिलोमज कहेहै और तैसेहि शंख जीने किहाहै कि संपूर्ण अव कृष्टोंके वधकीतयां अपणी शुद्धिवास्ते चांद्रायणव्रतकरे इति और जो एह अंगिराजीकावचनहै कि संपूर्ण अंत्यजातिका वध कीतियां और इन के साथ मैथुन कीतियां और इनके साथ भोजन कीतियां पराकव्रत करणे करके शुद्धि होतीहैयद्यपि इनके वधादि विषे पराक करे ॥

तदभीतिसस्थानविषेंकामनाते सूतादिविषेंचांद्रायणकरणा किहाहै औरकामनातेविना सूतादिव धविषें पराकव्रतजान्नणा ॥ औरवैदेहके वधविषें एकपादऊन पराककरणा और चांडालकेवध विषें आधापराककरणा औरमागधकेवधविषें भीपादऊन पराककिहाहै। और क्षत्त केवधकीतियां अद्धापराककरणे कर्के पवित्रहुंदाहै और अयोगवकावधकीतियांभी अद्धाहिपराककरणा योग्य है और इसी प्रकारकर्के चांद्रायण कीभीतारतम्यताकल्पना करणे योग्यहै अर्थात् अधिकार पू र्वकसंपूर्ण अर्धएकपाद इत्यादि जान्नणा ॥ और जोएहब्रह्मगर्भकावचनहै प्रतिलोमेति कि प्र तिलोम क्रमकर्के उत्पन्न योस्त्रीयांहै तिनको महीन्योंकी अवधीकर्के प्रायश्चित्त किहाहै और अंतर कर्के उत्पन्नजोसूतादिहै तिनको दोमहीने चारमहीनेछेमहीने भिन्न २ इसक्रम क र्के प्रायश्चित्त करणा किहाहै सोएहआवृत्ति के विषयमे जान्नणा अर्थात् पुनःपुनः वधविषेंजान्न

तत्रकामतःसूतादिवधेचांद्रायणं॥ अकामतस्तुतद्वधेपराकः वैदेहवधेपादो नः चांडालवधेद्विपादः मागधवधेपादोनःपराकः क्षत्तरिद्विपादः आयोगवे चपादद्वयम् अनयैवदिशाचांद्रायणस्यापितारतम्यंकल्प्यं॥यत्तुब्रह्मगर्भव चनम् प्रतिलोमप्रसूतानांस्त्रीणांमासावधिःस्मृतः अंतरप्रभवानांचसूतादी नांचतुर्द्विषडितितदावृत्तिविषयम् तत्रसूतवधेषण्मासाः वैदेहकवधेचत्वारः चांडालवधेद्वाविति योग्यतयान्वयःतथामागधवधेचत्वारःक्षत्तरिद्वैमासिकं आयोगवेचद्वैमासिकमितिव्यवस्था॥ अपरार्कः ननुचांद्रायणपराकादित पोगायत्र्यादिजपमंत्रयुक्तं कथंतत्रशूद्रादेरनधीतवेदस्याधिकारइत्याह

णा तिसस्थानविषेंसूतकेवध विषें छेमहीने व्रतकरणे कर्के पवित्रता होतीहै। और वैदेहके वधवि षें चारमहीनेव्रतकरणा और चांडालकेवधविषें दोमहीनेव्रतकरणायोग्यहै एह योग्यता कर्के ऐ सा संबंधलगायाहै और तैसे हि मागधकेवधकीतियां चारमहीने औरक्षत्ताके वधकीतियां दोमहीने का व्रत और अयोगवके वधविषें भी दो महीने का व्रतकरणा योग्यहै ऐसीव्यवस्था लगायीहै ॥ और अपरार्क विषें लिखयाहै कि चांद्रायण और पराकइत्यादि संपूर्णव्रततपरूप हैं और गायत्री इत्यादि मंत्रोंके जपकर्के भीयुक्तहैं क्या कि इनसभव्रतोंविषें गायत्री मंत्रका जप करणा किहाहै इसकारणते तिसचांद्रायणादि व्रतविषें नहिपढावेदजिसने ऐसे शूद्रकों के से अधिकार होताहै ॥

(उत्तर) इसकारणतें किहाहैं कि यद्यपिशूद्र अधिकार रहितभीहै क्याजपकरणा होमकरणा इस अधिकारते रहितभीहै तदभी सोजैसे कहहैं तैसेहि शरीरकरके कर्मकर्ताहुया इतने काल क कें क्या महीना वर्ष इत्यादि कालकर्के पवित्रहोताहै अर्थात् पापते मुक्तहोजाताहै (प्रश्ण:) ऐसेंहोयां लूलेको विष्णुकी परिक्रमा रहितकर्म विषे और शूद्रको मंत्रहीन दर्शपूर्णमासादि कर्मविषे भी अधिकारहोनाचाहिये (उत्तर) ऐसामतकहो किसवास्ते तिसस्थानविषे शूद्रकिसी वाक्यकरकेभी दर्शादि यज्ञकाकर्ताहोवे ऐसा नहिदिखाया जिसकर्के तिसशूद्रकोमंत्रादिरहित दर्शादि कर्मविषे अधिकारकल्पनाहोवे क्योंमंत्रादि संपूर्ण अंगयुक्त कर्मप्रयोग विषे द्विजाति अधिकारीहोतेहैं इसकर्के (स्वर्गकामो यजेत्) इसश्रुतिते उपसंहारकीताहै ॥ और जैसेस्थपती

शूद्रोधिकारहीनोपिकालेनानेनशुध्यति। जपहोमाद्यधिकारहीनोपिशूद्रोय थोक्तशरीरकर्मकारीकालेनानेनोक्तेनमाससंवत्सरादिनाशुद्ध्यति।विपायो भवति नन्वेवंसतिपंगोर्विष्णुक्रमरहिते शूद्रस्यचमंत्रादिहीनदर्शपूर्णमासा दिकर्मण्यधिकारः स्यात्॥ मैवंवादीः । नहितत्रसाक्षाच्छूद्रः कर्तृत्वेनकाचि द्वाक्येनानिर्दिष्टोस्तियेनतस्यमंत्रादिरहितेदर्शादिकर्मण्यधिकारःपरिकल्पे त । संतिचमंत्रादिसकलांगोपेतकर्मप्रयोगसमर्थाद्विजातयोधिकारिणइति तत्रैवस्वर्गकामादिश्रुतेरुपसंहारः॥ प्रायश्चित्तेतुयथास्थपतीष्टौमंत्रादिरहि तोपिसाक्षाच्छ्रुत्यानिषादःकर्तृतयागृहीतः ॥ तथाशूद्रः प्रायश्चित्तेषु॥ त थाचांगिराः। तस्माच्छूद्रंसमासाद्यसदाधर्मपथेस्थितम्। प्रायश्चित्तंप्रदात व्यंजपहोमविवर्जितम् १ तथा । शूद्रः कालेनशुद्ध्येत्तुगोब्राह्मणहितेर तः ॥ दानैर्वाप्युपवासैर्वाद्विजशुश्रूषयातथा २ ॥ जाबालोप्याह ॥ अका मकृतपापानांवदंतिब्राह्मणाव्रतं ॥

इष्ट यज्ञविशेष मंत्रादिरहितभीहै तद भीसाक्षात् श्रुतिकर्के उसयज्ञविषे कर्ताभावकर्के सोभील ग्रहण कीताहैं तैसेहि प्रायश्चित्त विषे शूद्रहैं तैसहि अंगिराजीने किहाहै कितिसकारणते सदैवधर्ममार्गविषे स्थितजो शूद्रहै तिसको जपहोमादि रहित प्रायश्चित्त देणा योग्यहै ॥ १ ॥ और वचनकहतेहैं तथेति तैसेहि गौ और ब्राह्मण इनकेहितमें प्री तिवाला इतने कालकर्के पापते मुक्तहोताहै दान कर्के और उपवास करणे कर्के ब्राह्मणोंकी सेवाकरणे कर्के पवित्र हुंदाहै ॥ २ ॥ शूद्रविषे और स्मृति कहतेहैं जाबेति और जाबाली भी कहताहै अकामेति कि अकामकृतपापांका ब्राह्मण व्रतकहतेहैं

और कोई मुनि ब्राह्मणोंको और बृषल को क्या शूद्रको कामनाकृत पाप विषेभी प्रायश्चित्त कहतेहै ॥ १ ॥ और कीयेह पाप जिसने और सदाहि धर्ममार्ग बिषे योस्थितहै असे शूद्रको बेद मंत्र वर्जित प्रायश्चित्त देणायोग्यहै ॥ २ ॥ योमार्कंडेय जीने किहाहै कृच्छ्रेति किएह जो संपूर्ण कृच्छ्र कहेहै सोब्राह्मण क्षत्री वैश्य इनतीनो कोई सदैव करणे योग्यहै और इनों कृच्छ्रोंविषे शूद्रको अधिकार नाहिविधान कीया सो शूद्रकोमंत्रयुक्त कृच्छ्रका निषेध कीताहै ॥ १ इसकारणतें मंत्ररहित कृच्छ्र करणाहि शूद्रकोयोग्यहै और जोएह मनुजीने किहाहै न शूद्रेति किशूद्रके तांयां किसी कार्य वास्ते बुद्धिन देवे अर्थात् विद्यानपढावे और अपना उच्छिष्ट अ

कामकारकृतेप्येकेद्विजानांवृषलस्यच ॥ १ ॥ शूद्रंकृतैनसंप्राप्यसदाधर्मपुरस्सरम् प्रायश्चित्तंप्रदातव्यंवेदमंत्रविवार्जितम् ॥ २ ॥ यदुक्तंमार्कंडेयेन कृच्छ्राण्येतानिकार्याणिसदावर्णत्रयेणतु कृच्छ्रेष्वेतेषुशूद्रस्यनाधिकारोविधीयते १ तन्मंत्राविशिष्टकृच्छ्रप्रतिषेधकम् मंत्रवर्जंकृच्छ्रंकुर्यादेव यत्तुमनुनोक्तम् नशूद्रायमतिंदद्यान्नोच्छिष्टंनहविष्कृतम् नचास्योपदिशेद्धर्मंनचास्यव्रतमादिशेदिति। तदंतराब्राह्मण मकुर्वतांप्रायाश्चित्तात्मकव्रतातिदेश निषेधपरम् ॥ अतएवशंखः अन्तराब्राह्मणंकृत्वाव्रतादेशः कार्यइत्याह ॥ न्यायतोमार्गतःक्षिप्रंक्षत्रियादेःकृतैनसः अंतराब्राह्मणंकृत्वाव्रतंसर्वंसमादिशेत् ॥ १ ॥ आयत्तोब्राह्मणानांयोवृत्तिंयश्चप्रयच्छति ब्राह्मणानांचयोभक्तः सतार्यः सर्वयत्नतइति ॥ २ ॥

न्नदेवे और यज्ञकाअन्नभीशूद्रके तांयी नदेवे और शूद्रके तांयीधर्म उपदेश भीनकरे और ब्रतकाभीउपदेश नकरे इति एहमध्यविषे ब्राह्मणको न साक्षी करके प्रायश्चित्त रूप व्रतकरण वालेनोशूद्रहै उनके वास्तेव्रतातिदेशके निषेध पर जानणा।इसकारणते हि शंखजीकहतेहै कि ब्राह्मण कों मध्य विषे साक्षीकरके शूद्रकेतांयी प्रायश्चित्तका आदेश करणेयोग्यहै और क्षत्रि वैश्यशूद्र जेकर पाप करें तद इनकों नीतिमार्गते मध्यविषे ब्राह्मणकों साक्षीकरके संबंधिलोक संपूर्णव्रतउपदेशकरे १ औरजोपुरुष ब्राह्मणोंके अधीनहै औरजोब्राह्मणोंकों उपजीवका देणवाला है और ब्राह्मणोंका जो भक्त है सो इन्होंने यत्नकरकेभी तारणेयोग्यहै इति २

इति श्रीमन्महाराजाधिराज जम्बू काश्मीराद्यनेकदेशाधीश प्रभुवर रणवीरसिंहाज्ञप्तदेविकोपकंठवासिसारस्वत पण्डितदेवीदत्तसुतपंडितगंगाराम संगृहीते पंचविषयात्मक प्रतिरूपके धर्म्मशास्त्रमहानिबन्धेप्रायश्चित्तभागे महापातकिसंसर्गि प्रकरणंचतुर्दशम् १४

एह श्रीमहाराजराजयोंकेराजाकाश्मीरतिब्बतादिदेशोंकेअधिपतिप्रभुवर रणवीर सिंह नाम कर्के तिनकी अज्ञासे देविका के समीप निवास करणे वाले और पांचप्रकारके ब्राह्मणोंमें सारस्वत जो पंडित देवीदत तिसके पुत्र जो पंडितगंगाराम तिनोंने बनायायो धर्म्मशास्त्रमहानिबंध अर्थात् बडाग्रंथ उस विषे प्रायश्चित्त भाग विषे महापातकोंके संसर्गकरणवालेयोंका प्रकरण पूराहोआ चउदमा १४

अबदेवलस्मृति विषेंसंसर्गि प्रायश्चित्तका विशेषदिखायाहै और सोप्रायश्चित्तइससमयमे यवना दिसंसर्ग कर्के जो दूषित होगें तिनकेवास्ते अतिशयकर्के उपयोगीहोगा देवलजीनें किहाहै त्रिशंकुमिति कि प्रथम महानदी जो गंगाहै निसके उत्तर पासे और कीटक जोदेशहै तिसकेद क्षिणपासे संपूर्णबारां १२ योजन प्रमाण विषें जो त्रिशंकुदेशहै तिसकोत्यागदेवे अर्थात् त्रिशं कुदेशविषें कभीनिवासनाहि करणेयोग्य १ इसमे एह अभिप्रायहै कि इस देशविषें जावे विना तीर्थ यात्रा तद उह प्रायश्चित्तकरे त्रिशंकुपद सभ म्लेछदेशोंका उपलक्षणहै चाहे किसेम्लेछदे शमे जावे तद प्रायश्चित्तहुंदाहै तिसप्रायश्चित्तको देवलजी कहतेहैं हेऋषियों अबमें विस्तार कर्के प्रायश्चित्त कथनकरताहुं तुमश्रवणकरो क्या कि मृत सूतक विषें दासियोंकों और भिन्न वर्ण कीयांस्त्रीयांको और अनु लोमक्रम कर्के जो उत्पन्नहैं तिनकों स्वामिके मृतहोयां२स्वामि

देवलस्मृतौतुसंसर्गिप्रायश्चित्तेविशेषः सचाधुनायवनादिसंसर्गदूषितेषु प्राय उपयुज्यतेतत्रदेवलः त्रिशंकुवर्जयेद्देशंसर्वंद्वादशयोजनम् उत्तरेणम हानद्यादक्षिणेनतुकीकटम् १ प्रायश्चित्तंप्रवक्ष्यामिविस्तरेणमहर्षयः ॥ मृतसूतेतुदासीनांपत्नीनांचानुलोमिनाम् २ स्वामितुल्यंभवेच्छौचंमृतेस्वा मिनिसूतकम् अपेयंयेनसंपीतमभक्ष्यंचापिभक्षितम् ३ म्लेच्छैर्नीतेन विप्रेणअगम्यागमनंकृतम् तस्यशुद्धिंप्रवक्ष्यामियावदेकंतुवत्सरम् ॥४ ॥ चांद्रायणंतुविप्रस्यसपराकंप्रकीर्तितम् क्षत्रियस्यपराकैकंपादकृच्छ्रेणसं युतम् ५ पराकार्द्धंतुवैश्यस्यशूद्रस्यादिनपंचकम् नखलोमविहीनानांप्रा ॥ यश्चित्तंविधीयते ॥ ६ ॥

के समान शौचहुंदाहैअर्थात् जिसवर्णका पतिहोवे उसवर्णके अनुसार उतने दिनों कर्के इनका सूतक दूरहोताहै २ और फेर कहतेहै कि जिस पुरुषने पीने योग्य जोद्रव्यनहिंहै मदि रादि तिसकापानकीताहो। और जो भक्षण करणेयोग्यपदार्थ नहिहै निषिद्ध मांसादि तिसका भक्षण कीताहो।३।और म्लेछों कर्के ग्रहण कीताजो ब्राह्मणहै तिसने अगम्या गमनकीताहो तिसकी शुद्धिकथनकरताहुं एकवर्षप्रमाण पूर्वोक्त पापदेहोयांहोयां ४ चांद्रायणमिति ब्राह्मणको पराक व्रतकेसहित चांद्रायण करणा कियाहै और क्षत्रीको पाद कृच्छ्र कर्के संयुक्त एकपराकक रणा योग्यहै ५ और वैश्यको आधा पराक करणा चाहिये और शूद्रको पांचदिन व्रत करणा योग्यहै ॥ एभीनखरोमते रहितहोकर्के प्रायश्चित्त करणा ॥ ६ ॥

अब नि म्नि द्विजके अर्थ कहतेहैं प्राय इति और द्विजातिकों प्रायश्चित्त विषे पवित्र करण वा ला प्राजापत्य व्रत किहाहैं ॥ अर्थात् ब्राह्मण क्षत्री वैश्य एह पूर्वोक्त म्लेच्छोंके ससर्गके प्रायश्चि त्त विषे प्राजापत्य व्रत करणे कर्के पवित्र होतेहैं । और अग्निहोत्री कों चांद्रायण अथवा परा क पवित्र करण वाला होताहै ॥ १ ॥ और एक वर्ष निरंतर म्लेछके साथ निवास करणे कर्के चांद्रायण करें अथवा पराकव्रत करे तद पवित्र होताहैं और शूद्र एक वर्ष निवास कर्के फेर आधा महीना दिन १५ अपनी शुद्धि वास्ते यावक पान करे २ और जेकर शूद्र एक महीना तिन्होके साथ निवास करे तद पाद कृच्छ्र कर्के शुद्ध होताहै और वर्ष ते उपरंत जे कर म्लेछ के साथ निवास करे तद ब्राह्मणोंने उसके वास्ते प्रायश्चित्त कल्पना करणे योग्यहैं ३ अर्थात् दो वर्षके संसर्ग विषे दूणा और तीन वर्षके संसर्ग विषे त्रीणा कल्पना करणा चा हिये ।, संवेति और चार वर्ष कर्के म्लेछ भावको प्राप्त होजाताहै अर्थात् तिसका प्रायश्चित्त

अनग्निसाग्नित्वेनव्यवस्थापयतिप्रायइति प्रायश्चित्तेद्विजातौतुप्राजापत्यं विशोधनं । चांद्रायणंवाहिताग्नेः पराकस्त्वथवाभवेत् । १ । चांद्रायणंपरा कंचर्चरेत्संवत्सरोषितः । संवत्सरोषितः शूद्रोमासार्द्धयावकंपिवेत् २ मा समात्रोषितःशूद्रः कृच्छ्रपादेनशुद्ध्यतिऊर्ध्वंसंवत्सरात्कल्प्यंप्रायश्चित्तंद्विजो त्तमैः ॥ ३ ॥ संवत्सरादूर्ध्ववर्षद्वयंवर्षत्रयंयावत्म्लेच्छससर्गेपूर्वोक्तमेवद्विगु णंत्रिगुणंकल्प्यमित्यर्थः॥ संवत्सरैश्चतुर्भिस्तुतद्भावमधिगच्छति ॥ ४ ॥ स्पृ ष्टारजस्वलान्योन्यंब्राह्मणाशूद्रजायदा ॥ चतूरात्रंनिराहारापंचगव्येनशुद्ध्य ति ॥ १ ॥ ब्राह्मण्यनशनंकुर्यात् क्षत्रियास्नानमाचरेत् ॥ सचैलंवैश्यजा तीनांनक्तंशूद्यांविनिर्दिशेत् २म्लेच्छान्नंम्लेच्छसंस्पर्शोम्लेच्छेनसहसंस्थ ति; वत्सरंवत्सरादूर्ध्वंत्रिरात्रेणविशुध्यति १ इदमज्ञातविषयम् ॥

नहिहै॥४॥और जेकर ब्राह्मणी और शूद्रा एह रजस्वला होकर्के आपसमे स्पर्श करें तद चार रात्रि निराहार करणे कर्के और पंचगव्य पान कर्के शुद्ध होतीहैं । १ । और ब्राह्मणी रजस्वला क्षत्रिया रजस्वलाके साथ स्पर्श करे तद ब्राह्मणी एक निराहार करे क्षत्रिया स्नान मात्र करे तद पवित्र होतीहै । और वैश्य जातीकी रजस्वला सहित कपडेयांके स्नान करे और शूद्र जातीकी रजस्वला नक्त व्रत कर्के पवित्र होतीहै ॥ २ ॥ और म्लेछाति कि म्ले छका अन्न भक्षण करणा और म्लेछके साथ स्पर्श करणा और म्लेछके साथ एक आस न उपर स्थित होना जो कोयी पुरुष ऐसा करताहै सो वर्ष ते उपरंत तीन रात्रि निरा हार कर्के शुद्ध होताहै अर्थात् म्लेछके साथ वर्षते अधिक इतने काम कर्णे कर्के तीन उप वास कर्णे कर्के पवित्र होताहै परंतु एह प्रायश्चित्त अज्ञात विषयमे जानणा जिस कर्के थोडाहै ॥ १ ॥

और जो पुरुष म्लेछां कर्केवा चौरांकर्के अथवा वन विषे किसे लुटगेरे कर्के ताडितहोया २ अथवा अतिक्षुधा कर्के पीडाको प्राप्तहोया अभक्ष्यभक्षण कर लेवे अथवा किसीके भय कर्के अभक्ष्य भक्षण कर लेवे १ तद ब्राह्मणादिचार वर्णांकी शुद्धि इस प्रकार होतीहै क्याकि ओह पुरुष फेर अपने देश को प्राप्तहोकर प्रायश्चित्त करे २ कृच्छ्र मिति ब्राह्मण होवेतो एक कृच्छ्र कर्के पवित्रहुंदाहै और क्षत्री तिसतें पौंणा करे और वैश्य अपनी शुद्धि वास्ते आधा कृच्छ्र करे और शूद्र को एक पाद प्रायश्चित्त देवे तद पवित्र हुंदाहै १ और इस प्रायश्चित्ततें बिना चारवर्णांकी शुद्धि नहि होती २ और जिसने एसा प्रायश्चित्त कीता होवे तद उसके शरीर विषे मेखला और दंड इनते रहित यज्ञोपवीत संस्कार करणा योग्यहै॥इसी अर्थको स्पष्ट कर्के कहतेहै

म्लेच्छैर्हृतोवाचौरैर्वाकांतारेविप्रवासिभिः भुक्त्वाभक्ष्यमभोज्यंतुक्षुधार्तेनभयेनवा १ पुनः प्राप्यस्वकंदेशंचातुर्वर्ण्यस्यनिष्कृतिः २ स्वकंदेशंप्राप्य प्रायश्चित्तार्थीभवेत्तदाचातुर्वर्ण्यस्यापिनिष्कृतिरुच्यतइत्यर्थः॥कृच्छ्रमेकंचरेद्विप्रः पादोनंक्षत्रियश्चरेत् तदर्द्धमाचरेद्वैश्यः शूद्रः पादंसमाचरेत् १ चतुर्णामपिवर्णानामन्यथानैवनिष्कृतिः २ प्रायश्चित्तेविनीतेतुतदातेषांकलेवरेकर्त्तव्यःसूत्रसंस्कारोमेखलादंडवर्जितः ३ म्लेच्छैर्नीतोथशूद्रैर्वाहारितेदंडमेखले संस्कारप्रमुखंतस्यसर्वंकार्यंयथाविधि ४ अस्यसंस्कारेदंडमेखलेहारितेपरित्याज्येइत्यर्थः॥संस्कारांतेचविप्राणांदानंधेनुश्चदक्षिणा दातव्यं शुद्धिमिच्छद्भिरश्वगोभूमिकांचनम् ५ तदासौस्वकुटुंबानांपंक्तिप्राप्नोतिनान्यथा स्वभार्यांगंतुमिच्छेद्वैगच्छेच्चैवविशुद्धितः ६

३ म्लेच्छैरिति म्लेछों कर्के जो ग्रहण कीताहै अथवा शूद्रों कर्के ग्रहण कीता होवे तिसके संस्कार विषे मेखला दंड रहित विधि पूर्वक संपूर्ण यज्ञोपवीत संस्कार करणे योग्यहै ४ फेर संस्कारके अंत विषे ब्राह्मणों कोधेनु दक्षिणा देणीचाहिये और जिनको अपनी शुद्धि की इछा होवे उनोने ब्राह्मणोंके तांई घोडागौ सुवर्ण पृथवी एह अपनी शक्ति अनुसार देणा योग्यहै५तदेतिति और जेकर इस प्रकार प्रायश्चित करे तद अपने कुटुंब की पंक्ति को प्राप्तहोताहै अन्यथा क्या जेकर एह प्रायश्चितन होवे उतना चिर अपनीपंक्ति विषे भोजन करणेयोग्य नहि होता और जेकर अपनी स्त्री पास जाने की इछा होवे तदभी शुद्ध होकर जावे ६ ॥

अव होर पक्ष कहतेहैं अथेति और जिसको म्लेच्छोंने पकडियां होयां एक वर्षते ऊ पर काल होजावे तद उह पुरुष प्रथम प्रायश्चित्त कीतियां होयां फेर गंगा स्नान करणे कर्के पवित्र होताहै ॥ ७ ॥ और सिंधु सौवीर सौराष्ट्र कांवोज शश कलिंग एह जो देशकहेहैं और इनके समीपके जो निवासी देशहैं इन विषे प्राप्त होकर फेर संस्कारके योग्य होताहै अ र्थात् तीर्थ यात्राते विना जो पुरुष इनदेशों विषे चलाजावे सो फेर दूसरी वारी यज्ञोपवीता दि संस्कार कर्के पवित्र हुंदाहै और जो तीर्थ यात्राके अर्थजावे अथवा दिग्विजय के अर्थ राजाजावे तिनको कोई दोष नहि ॥ ८ ॥ वलादिति और जो पुरुष म्लेछोंने अथवा चांडा लोंने अथवा चोरोंने वल कर्के अपना दासवनालेयाहोवे और तिसीते गौ इत्यादि जीवों

पक्षांतरंदर्शयति अथसंवत्सरादूर्ध्वंम्लेच्छैर्नीतोयदाभवेत् प्रायश्चित्ततुसं चीर्णेगंगांस्नात्वाविशुध्यति ॥ ७ ॥ सिंधुसौवीरसौराष्ट्रांस्तथाप्रत्यंतवासि नः कांवोजशशकाल्गिानूगत्वासंस्कारमर्हति ८ अत्रायमभिप्रायःएषु म्लेछप्रायदेशेषुगतानांम्लेछसंसर्गभावनयाप्रायाश्चितमुक्तम् यत्रतु दिग्वि जयार्थंगतानांरघुप्रभृतिवद्राज्ञां तीर्थाटनार्थं गतानांसाधूनांनतत्संसर्गभा वना नतत्रप्रायश्चित्ताभिधानमिति॥ वलाद्दासीकृतोम्लेच्छैश्चांडालाद्यैश्च दस्युभिः अशुभंकारितंकर्मगवादिप्राणिहिंसनम् ९ उच्छिष्टमार्जनंचैवत थातस्यैवभक्षणम् तत्स्त्रीणांचतथासंगस्ताभिश्चसहभोजनम् १० कृच्छ्रा न्संवत्सरंकृत्वासांतपनान्शुद्धिहेतवे व्राह्मणःक्षत्रियस्त्वर्धंकृच्छ्रान्कृत्वावि शुध्यति ११ मासोषितश्चरेद्वैश्यःशूद्रःपादेनशुध्यति १२ अथस्त्रीविषये किंचिदुच्यते॥गृहीत्वास्त्रीवलादेवम्लेच्छैर्गुर्वीकृतायदि गुर्वीनशुद्धिमाप्नोति त्रिरात्रेणेतराशुचिः १

की हिंसा करवायीहोवे ॥ ९ ॥ अथवा म्लेछोंकी जूठ हाथ कर्के मार्जन कीतीहोवे अथ वा म्लेछादिकी जूठ भक्षण कीतीहोवे अथवा तिनकी स्त्रीसाथ मैथुन कीताहोवे अथवा तिनकी स्त्रियोंके साथ भोजन कीताहोवे ॥ १० ॥ तद व्राह्मण अपनी शुद्धि वास्ते एक वर्षत क कृच्छ्रसांतपनकरे और क्षत्री व्राह्मणते आधे कृच्छ्र करणे कर्के शुद्धिको प्राप्त होजंदाहै ११ और एक महीना उपवास कर्के पीछे वैश्यभी अर्ध कृच्छ्र कर्के शुद्धहोजंदाहै और शूद्र चौथा हेस्सा प्रायश्चित्त करणे कर्के पवित्र हुंदाहै ॥ १२ ॥ अवस्त्री विषेभी कुछ कहतेहैं गृहीति और म्लेछोंने वलते ग्रहण कर्के जेकर किसीकी स्त्री गर्भ वाली कीतीहोवे तद गर्भ वाली स्त्री नहि पवित्र होती और इतराक्या गर्भ रहित जोस्त्रीहै सो तिन्नं रात्रां कर्के पवित्र होजातीहै । १ ।

योषेति श्रौर जोस्त्री कामनाते श्रथवा कामनाते विना म्लेच्छ पुरुषते गर्भको धारण करतीहै सो यद्यपि ब्राह्मणीहो श्रथवा क्षत्रिया वैश्या शूद्रा होवे २ श्रौर जोस्त्री श्रभक्ष्य वस्तुको भक्षण करे तिसकी शुद्धि किसप्रकार होवेगी सो कहतेहैं कि सोस्त्री श्रपनी शुद्धि वास्ते सांतपन कृच्छ्र करे श्रौर शुद्ध घृत करके श्रपनी योनिको पका देवे श्रर्थात् घृत गर्म करके श्रपनी योनि विषे पावे तद पवित्र होजातीहै ॥ ३ ॥ श्रौर जो श्रसवर्णी पुरुषते स्त्रीयोकी योनि विषे गर्भका निषेक होताहै उतना चिर सो स्त्री श्रपवित्र रहतीहै जितना चिर उसगर्भको नहि त्यागतीहै ४ श्रौर गर्भके निकलयां होयां श्रौर पीछे रजका दर्शन होयां श्रर्थात् जेकर गर्भ वाहर निकल जावे श्रौर रजका दर्शन होवे तद सो स्त्री पवित्र होतीहै जैसेकि शुद्ध सुवर्ण होवे उसकी न्या

योषागर्भंविभर्त्तियाम्लेच्छात्कामादकामतः ब्राह्मणीक्षत्रियावैश्यातथावर्णेतराश्रपि ॥ २ ॥ श्रभक्ष्यभक्षणंकुर्यात्तस्याःशुद्धिःकथंभवेत् कृच्छ्रंसांतपनंशुद्धघृतैर्योनिविपाचनम् ॥ ३ ॥ श्रसवर्णात्तुयोगर्भःस्त्रीणांयोनौनिषिच्यते श्रशुद्धासाभवेन्नारीयावच्छल्यंनमुंचति ॥ ४ ॥ विनिःसृतेनशल्येनरजसोवापिदर्शने तदाशुद्ध्यतेसानारीविमलंकांचनंयथा ॥ ५ ॥ तद्गर्भोदीयतेऽन्यस्मैस्वयंग्राह्योनकर्हिचित् स्वजातौवर्जयेद्यस्मात्संकरःस्यादतोन्यथा ६ पुनरपिप्रकारांतरेणपुरुषविषयेप्रोच्यते ॥ गृहीतोवावलान्म्लेच्छैः स्वयंवामिलितस्तुवः वर्षाणिपंचसप्ताष्टौशुद्धिस्तस्यकथंभवेत् १ प्राजापत्यद्वयंतस्यशुद्धिरेषाप्रकीर्त्तिता

यी शुद्धहै ॥ ५ ॥ श्रौर सो गर्भभी श्रौर किसेके तांईदेणा चाहिये श्रापउस गर्भको कभीन हि ग्रहण करणा योग्य इस कारण ते श्रपनीजाति विषे उसका त्यागहि करणा योग्यहै जेकर उसका त्याग नहोवे तद श्रागे उसते संकर उत्पन्नहोगा इसवास्ते उसका त्याग करणाहि योग्य है ॥ ६ ॥ श्रव होर प्रकार करके पुरुष विषे कुछ कहतेहैं गृहीत इति ( प्रश्न ) श्रौर जो पुरुष वलते म्लेछोंने ग्रहण कीताहो श्रथवा श्रपनी इच्छा करके म्लेच्छोंके साथ मिल गयां होयां पंच वर्ष श्रथवा सातवर्ष श्रथवा श्राठ वर्ष श्रर्थात् जो पुरुष पांच ५ सात ७ श्राठ ८ वर्ष पर्यंत म्लेच्छोंके साथ रहे सो किसप्रकार पवित्र होताहै १ ( उत्तर ) तिसकी शुद्धि वास्ते दो प्राजा पत्य कहेहैं श्रर्थात् उह पुरुष दो २ प्राजापत्य व्रत करके शुद्ध होताहै

इसतें परे और कोयी शुद्धि नहिहै ॥ और म्लेछके साथ निवासमात्रहै और तिनके अन्नादिकाभ क्षण नहि तद तिसकें पवित्र करण वाला कृच्छ्रहि किहाहै क्योंकि जो पुरुष म्लेछकेसाथ नि वासकरताहै सो विना कृच्छ्रते पवित्र नहिहोता२ और पांच वर्षते आदिलेकर वीस २० वर्ष पर्यंत जो पुरुष म्लेछके साथ निवास करताहै तिसको एह प्रायश्चित्त किहाहै क्या कि सोपुरु ष दो ॥ २ ॥ चांद्रायण करणे कर्के पवित्र होताहै ॥ ३ ॥ और प्रथम कछकेवाल और लिंग केवाल और शिखाके वाल श्मश्रुक्या मुछां इनको त्यागकर और संपूर्णरोम मुनादेवे और हाथोंके और पैरोंके सभनख कटा देणे तद तिस कारणेत उह शुद्ध होजंदाहै ॥ ४ चत्वेति और इसमै कोइ पाठांतरते कहतेहैं कि उक्त ४ चार जगाके भीरोम उत्तारदेवे ॥ और

अतःपरंनास्तिशुद्धिःकृच्छ्रमेवसहोषिते । २ ॥ सहोषितेसहवासमात्रेनत्व न्नभक्षणादिसंसर्गे ॥ म्लेच्छैः सहोषितोयस्तुपंचप्रभृतिविंशतिं वर्षाणिशु द्धिरेषोक्तातस्यचांद्रायणद्वयम् ३ ॥ कक्षागुह्यंशिखाश्मश्रुचत्वारिपरिवाप येत् परिवर्जयेदितिक्वाचित्पाठः ॥ प्रहृत्यपाणिपादांतान्नखान्स्नातस्ततःशु चिः ॥ ४ चत्वारिपरिवापयेत् चतुर्ष्वपिस्थानेपुवपनंकुर्यादित्यर्थः ॥ इ दमपिसमस्तदेहवपनोपलक्षणंवोध्यम् ॥ पाणिपादांतान्नखान्प्रहृत्यउत्ता र्यस्नातःशुचिरिति प्रायश्चित्तांताविधिः ॥ योयथानैवजानातिप्रायश्चित्तं द्विजोत्तमः शुद्धिंददातिचान्यस्मैतदशुद्धेः सभाजनम् ॥ ५ सब्राह्मणःत स्यपापिनोऽशुद्धेर्भाजनमित्यर्थः॥संभाषणात्स्पर्शनाच्चम्लेच्छेनसहसंगमा त् कुर्यात्स्नानंसचैलंचदिनमेकमभोजनम् ॥ ६ ॥ माताम्लेच्छत्वमापन्ना पितरौवाकथंचन श्राद्धंषोडशवर्षेतुदेवलस्यवचोयथा ॥ ७ ॥

जोपुरुष यथार्थ प्रायश्चित्तको नहि जानता और पुरुषको प्रायश्चित्त देताहै सो तिसकेपाप का भांडाहै ॥ ५ ॥ और तिसके संगते भी सभामे स्थित पुरुष अपवित्र होताहै । और म्लेछ के साथ वात करणे ते और तिसके साथ स्पर्श करणेतें और तिसके एकआसन ऊपर स्थित होणेते पुरुष वस्त्र सहित स्नान करे और एक दिन उपवास करे तद पवित्रहोताहै ॥ ६ ॥औ र जिसकी माता म्लिछनी होजावे अथवा माता पिता एह दोनो म्लेछ भावको प्राप्त होजावें सो पुरुष सोलांवर्ष विषे शुद्ध होताहै क्या श्राद्ध करणेके योग्यहोताहै अथवा तिनांम्लेछोंका पुत्र श्राद्ध कीया चाहे तद १६ वर्षमै करे एह देवल जीका वाक्य है अर्थात् जिसके मा ता पिता म्लेछ होजावेंसो १६ वर्ष प्रायश्चित्त करणे कर्के पवित्रहोताहै । ७ ।

और स्त्रीयोंको और शूद्रोंको और पतित जोहैं तिनको पंचगव्य नहिदेणे योग्य और जेकर अवश्य देणाहो तद मंत्र रहित इनको पंचगव्य देणा ॥ १ ॥ अब पंचगव्यके देवता कहतेहैं किगोमूत्रका वरुण देवताहै और गोमयका अग्नि देवता किहाहै और दुग्धका चंद्रमा देवता जानणा और दधिका वायु देवता जानणा और घृतका सूर्य देवता किहाहै ॥ २ ॥ और पंचगव्य विषे गोमूत्र ताम्र वर्णकी गौका ग्रहण करणा किहाहै और श्वेतवर्णकी गौका गोमयलेना चाहिये और सुवर्णकी न्यायींहै वर्ण जिसका ऐसी जोगौहै अर्थात् पीत वर्ण गौका दूध ग्रहण करणा किहाहै और नील वर्णकी गौका दधि ग्रहण करणा ॥ ३ ॥ और कृष्णवर्णकी गौका घृत ग्रहण करणा इस वर्ण विभाग कर्के पंचगव्य एकत्र करणा योग्यहै और जेकर एह संपूर्ण वर्ण वर्णकी गौयां न प्राप्तहोवें तद कपिला गौका पंचगव्य बनालेना।

स्त्रीणांचैवतुशूद्राणांपतितानांतथैवच पंचगव्यंनदातव्यंदातव्यंमंत्रवर्जितम् १ वरुणोदेवतामूत्रेगोमयेहव्यवाहनः सोमःक्षीरेदध्निवायुर्घृतेरविरुदाहृतः २ गोमूत्रंताम्रवर्णायाःश्वेतायाश्चैवगोमयं दुग्धंकांचनवर्णायानीलिकाया श्चवैदधि ३ घृतंवैकृष्णवर्णायाविभक्तिर्वर्णगोचरा उदकंसर्ववर्णंतुकस्यव र्णोनगृह्यते ४ एकमात्रंतुगोमूत्रंगोमयंतुद्विमात्रकम् त्रिमात्रकंघृतंक्षीरंद ध्नःस्यादर्धमात्रकम् ५ व्रतेषुसर्वकर्मेषुपंचगव्यस्यसंख्यया ६ अथप्राय श्चित्तप्रकारंवक्तुंतावद्वक्तुःकर्तव्यतांदर्शयति॥प्रायश्चित्तंयथोक्तंहिदातव्यं ब्राह्मणैःसह अन्यथादापयेद्यस्तुप्रायश्चित्तीभवेद्द्विजः १

एह पिछे कह आएहैं और जिस जगा पंचगव्य किसे गौकाभी नाहि मिले उसजगा केवल जलहि पंचगव्योंके मंत्र कर्के ग्रहण करणा और तिसमें वर्णका विचार नाहि करणा ॥ एह कहतेहैं उदक मिति उदक यो जल है सो सर्ववर्ण साधारणहै ४ ॥ औरइस विषे भी एक भाग गोमूत्र और दोभाग गोमय और तीन भाग घेउ और । दूध और आधा भाग दधि इस क्रम कर्के एकत्र करणा किहाहै ॥ ५ ॥ और संपूर्ण व्रतों विषे और संपूर्ण कर्मो विषे इसी संख्या कर्के पंचगव्य एकत्र करणा योग्यहै ॥ ६ ॥ अब प्रायश्चि त्तके प्रकारको कहनेनुं पहिले कहणवालेकी कर्त्तव्यताको कहतेहैं प्रायइति और जैसा पापी को प्रायश्चित्त किहाहै सो ब्राह्मणोंके साथहि होकर देणा चाहिये और जो ब्राह्मणांते बिना आपहि पापीको प्रायश्चित्त देताहै सो आपहि प्रायश्चित्ती होताहै, इस वास्ते ब्राह्मको साक्षी रख कर्के यथार्थ प्रायश्चित्त देणा चाहिये ॥ १ ॥

और कपिला गौका दूध दोहन कर्के जो पुरुष गरम२धारा दुग्ध पान करे एह व्यासदेव जी ने कृच्छ्र किहाहै कैसा एह कृच्छ्रहै चांडालको भी शुद्ध करताहै॥ इसमै कितने दिन पीणाहै एह संख्या अपणे चित्तसे विचार कर कहणी और दूधका प्रमाण भी आहारते चतुर्थांश जानणा २॥ तिलांका हवण करणा और विष्णो रराट मासि इस मंत्र कर्के जप करणा सावधान होकर तद प्रायश्चित्ती पवित्र होताहै॥ ३ और इसी वास्ते बहुत क्या कहनाहै कि प्रायश्चित्त विषे तिल होम अवश्य विधान कीताहै किस वास्ते प्रायश्चित्ती पुरुष तिल दान कर्के और तिल भक्षण कर्के पापको निवारण करताहै॥ ४ और ब्राह्मण जो कुछ तीर्थ विषे स्नान कर्के जिस फलको संपादन करताहै और जो फल तप कर्के प्राप्त होताहै उस फल कर्के सभ पाप दूर होतेहैं ॥ ५ एह तृतीयादि प्रकरण विषे भीहै परंतु इत्थे प्रसंगते किहाहै ॥ प्रायइति और जिस

कपिलापायसंदुग्ध्वाधारोष्णंयःपयःपिवेत् एषव्यासकृतःकृच्छ्रःश्वपाकमपिशोधयेत् ॥ २ ॥ तिलहोमंतुकुर्वीतजपंकुर्यादतंद्रितः विष्णोरराटमंत्रेणप्रायश्चित्तीविशुद्ध्यति ॥ ३ ॥ बहुनात्रकिमुक्तेनतिलहोमोविधीयते तिलान्दत्त्वातिलान्भुक्त्वाकुर्वीतापनिवारणम् ४ संपादयतियद्विप्रःस्नानंतीर्थफलंतपः समाक्रामयतेपापंतस्यसंपद्यतेफलम् ॥ ५॥ प्रायश्चित्तंसमाख्यातंयथोक्तंदेवलेनतु इतरेषामृषीणांतुनान्यथावाक्यमर्हति ॥ ६ ॥ सुवर्णदानंगोदानंभूमिदानंतथाह्निकं ॥विप्रेभ्यःसंप्रयच्छेतप्रायश्चित्तीविशुद्ध्यति ७ ॥ अथसंसर्गविषयेपंचगव्यप्रदानप्रकारः ॥ पंचद्व्यहसहवासेन संभाषणसहासनैः ॥ संप्राश्यपंचगव्यंतुदानंदत्त्वाविशुद्ध्यति ॥ ८ ॥

प्रकार देवल जीने प्रायश्चित्त किहाहै सोयी प्रायश्चित्त इस स्थान विषे किहाहै इस वास्ते और ऋषियोंका वाक्य भी व्यर्थ होने योग्य नहिहै अर्थात् होरना ऋषियोंको भी एह प्रमाणहै इसमे समयानुसार व्यवस्था करणी चाहिए॥ ६ और सुवर्ण दान करणा और गौदान कर्के ब्राह्मणोंके तांयी देणा और भूमि दान कर्के ब्राह्मणोंके तांयी देणी और नित्यं प्रति संध्या वंदनादि कर्म करणे इनको विधि पूर्वक करणे कर्के प्रायश्चित्ती पुरुष पवित्रताको प्राप्त निश्चय कर्के होजाताहै ॥ ७ अथसंसर्ग विषयमै पंचगव्यके देणेकाप्रकार कहतेहैं और जो पुरुष म्लेच्छके साथ पंच ५ दिन अथवा दो २ दिन एक स्थान विषे निवास करे अथवा संभाषण करे अथवा एक आसनके ऊपर स्थित होवे सोपुरुष पंचगव्य पान कर्के और ब्राह्मणके तांयी यथाशक्ति कुछ दान दे कर्के शुद्ध होताहै ॥ ८ ॥

और जो उत्तम ब्राह्मण म्लेछके साथ एक दिन दो २ दिन तीन ३ दिन चार ४ दिनपंच ५ दिन जेकर निवास करे तदक्रम कर्के पंच गव्यकी वस्तुयोंका योग करे ॥ ९ ॥ सोई कहतेहैं एकेति एकदिन म्लेछके साथ निवास कर्के एक दिन गोमूत्र पान करे औरजेकरदोदिन करे तद दोदिन गोमूत्र और गोमय एहदोनो एकत्र कर्के भक्षण करे और जेकर तीन दिनकरेतद गोमूत्र गोमय दुग्ध एह एकत्र कर्के तीनदिन पान करे और चार दिन विषे संबंधकरेतद इन केसाथ दधि मिलाकर चार दिनभक्षण करे । १० ।और पांच दिनके संबंधविषे इनके साथ घृत मिला कर संपूर्ण पंचगव्यदेवे तद उह ब्राह्मण पांचदिन मे पवित्र होताहै ॥ ११ ॥ और जिस स्थान विषे पांच५दश १० पंदरह १५ वीसदिन २० म्लेछ के साथ निवास होवेति

एकद्वित्रिचतुःपंचवासरान्संवसेद्यदिम्लेच्छवासंद्विजश्रेष्ठः। क्रमात्तद्द्रव्ययोगतः ९ एकाहेनतुगोमूत्रंद्व्यहाच्चैवतुगोमयम् त्र्यहात्क्षीरेणसंयुक्तंचतुर्थेदधिमिश्रितम् १० पंचमेघृतसंपूर्णंपंचगव्यंप्रदापयेत् ११ । पंचयत्रदशाहानिपंचादशचविंशतिम्। संवासंतत्रवक्ष्यामिदेहशुद्धिंद्विजन्मनम् १२ ॥ पंचाहेः पंचगव्यंस्यात्पादकृच्छ्रंदशाहकैः पराकंपंचदशाभिःविंशत्याकृच्छ्रमेवच १३ उदरं प्रविशेद्यस्यपंचगव्यंविधानतः यत्किंचिद्दुष्कृतंतस्य सर्वंनश्यतिदेहतः ॥ १४ पंचसप्ताष्टदशवाद्वादशवाथविंशतिः म्लेच्छत्वंतस्यविप्रस्यपंचगव्यंविशोधनम् ।१५ अथव्रतप्रकारः ॥ पंचगव्यंचगोक्षीरंदधिमूत्रशकृद्घृतं प्राश्यान्येद्युरुपवसेत्कृच्छ्रंसांतपनं चरेत् ॥ १

सस्थान विषे ब्राह्मणों किदेह शुद्धि कथन करताहुं १२ ॥ क्याकि पांच दिन कर्के पंचगव्य पान करणा । और दश दिन विषे पाद कृच्छ्र करणा और १५ दिन कर्के पराक करणा और २० वीसदिन कर्के एक कृच्छ्र करणा योग्यहै॥ १३॥ किस वास्ते एह पंचगव्य विधि पूर्वक जिसके उदर विषे प्रवेश करे तिसके संपूर्ण पाप नाशहो जातेहैं । १४ ॥ और पाच ५ सात ७ आठ ८ दश १० बारां १२ वीस २० दिन जिस ब्राह्मणको म्लेछका संग होवे उसको पंचगव्य पवित्र करदेताहै ॥ एह प्रकार भी केवल ब्राह्मण वास्ते हिहै १५ अथव्रत स्वरूप कहतेहैं पंचेति किपंच गव्य क्या गौका दूध दधि घृत गोमूत्र गोमय इनको एक २ दिन भक्षण कर्के फेर एक दिन उपवास करणा एह सांतपन कृच्छ्रहै तिसको अपनीशुद्धि वास्ते करे ॥ १ ॥

और एहसांतपनके द्रव्यों कर्के भिन्न २ छे दिनका व्रतहै उपवासकेसहित और एहिजेकरसात ७ दिनकर्के होवेतद इसका नाम महासांतपन किहाहै सोछे दिन इस तहां कर्के हुंदेहैं किपंचगव्यकियांवस्तुभिन्न २ कर्के होए ५ छेवें दिन कहे ५ इसकर्के होए ६ और एकउपवास कर्के ॥ २ ॥ और ढंबल पत्तर १ कमल २ विल्वपत्र ३ कुशाकाजल ४ इनको भिन्न २ एक२दिनभक्षणकरणा इसकानाम पर्ण कृच्छ्र किहाहै एहचारदिन कर्के होताहै ॥ ३ और गरम पात्रविषें स्थित जो घृत एहपूर्वोक पर्णादि५और घृतएहाभिन्न२कए२ दिनपान करे और एकदिन उपवास करे इसकानाम तप्तकृच्छ्र किहाहै अथवाचार दिन ढंबलके पत्रके साथ जितना घृत आवे उतनाखावे तदतप्तकृच्छ्र व्रत हुंदाहै ॥ ४ और एकदिन एककाल भोजनकरणा और एक

दिनद्वयसाध्यमिदम्) पृथक्सांतपनद्रव्यैः षडहः सोपवासकः सप्ताहेनतुकृच्छ्रोयंमहासांतपनःस्मृतः २ पर्णोदुंबरराजीवविल्वपत्रकुशोदकैः प्रत्येकं प्रत्यहंपीतैःपर्णकृच्छ्रउदाहृतः ॥ ३ ॥ चतुर्दिनसाध्यमिदम् । तप्तभांडघृतपर्णमेकेकंप्रत्यहंपिवेत् एकरात्रोपवासश्चतप्तकृच्छ्रस्तुपावनः ॥ ४ ॥ ... भांडघृतादौदुंवरपर्णपूरयित्वाप्रत्यहंदिनचतुष्टयं यावत्पिवेदित्यर्थः । एक भक्तेननक्तेनतथैवायाचितेनच उपवासेनचैकेनपादकृच्छ्रउदाहृतः ॥ ५ ॥ कृच्छ्रातिकृच्छ्रःपयसादिवसानेकविंशतिं द्वादशाहोपवासेनपराकः... ग्कीर्त्तितः ॥ ६ ॥ पिण्याकशाकतक्रांबुसक्तूनांप्रतिवासरं एकरात्र... ॥ सश्चकृच्छ्रसौम्यःप्रकीर्त्तितः ॥ ७ ॥ एषांत्रिरात्रमभ्यासादेकैकस्ययथाक्रमं तुलापुरुषमित्येषज्ञेयःपंचदशाहिकः ॥ ८ ॥ तिथिवृद्ध्याचरेत्पिंडान्शुक्ले शिख्यंडसम्मितान् एकैकंह्रासयेत्पिंडंकृष्णेचांद्रायणंचरन् ९

दिन रात्रिमे भोजनकरणा और एकदिनअयाचित और एकदिन उपवास इसकानाम पादकृच्छ्र किहाहै ॥ ५ ॥ कृच्छ्रेति और इक्कीस २१ दिनकेवल दूधपानकर्के व्यतीत करणा इसकानामकृच्छ्रातिकृच्छ्रकिहाहै और बारां १२ दिनविषें उपवासकरणा इसकानामपराककिहाहै ॥ ६ और तिलोंकी खल १ शाक २ छाछ ३ जल ४ सत्तू ५ एहएक २ दिनभक्षणकर्के फेरएकदिनउपवास इसकानामसौम्य कृच्छ्र किहाहै ॥ ७ औरइनवस्तूमेहि एकवस्तु तीन २ दिनअभ्यास करनेते पंदरहादिनका तुलापुरुषजाणणा ॥ ८ औरशुक्ल पक्षविषें मोरके अंडेजितना एक२तिथिक्रमकी वृद्धिकर्के भक्षण करे और कृष्ण पक्षविषें एक २ ग्रास कमती करताजावे ॥ ९ ॥

ऐसेहि २४० ग्रासमहीनेमे होतेहैं इसकानाम चांद्रायण किहाहै और विशेष व्रत प्रकरण विषें देषना एह इहां प्रासंगिकहै १० एह देवलजीकाधर्म्म शास्त्रहै ॐ और इसप्रकार महापातकों करके पतित जो पुरुषहै उसकेवास्तेजो प्रयश्चित्त किहाहै और जो पुरुष अभि मानतें प्रायश्चित्त करणे की इछा नाहिक रेतिसको क्या करणायोग्यहै इसविषे मनुजीने किहाहै पतितस्येति कि महापातकोंके जीवतेंहितिस केयोसपिंडहैं और समानोदकहैं तिनोंने एकत्र होकर इसरीतीसे प्रेतकी उदक क्रिया करणी चाहिये क्याकि ग्रामतें बाहर करके अपने सभजाती और ऋत्विज गुरु इनके समीप रिक्तातिथि जोन वमी तिथिहै तिसदिन सायं काल विषें जैसे मृत होयेकी उदक क्रिया होतीहै तैसेहि तिसप तितकी प्रेत संबंधी उदक क्रिया करणे योग्यहै १ और तैसेहि याज्ञवल्क्यजीने किहाहै दासी

यथाकथंचित्पिंडानांचत्वारिंशच्छतद्वयम्१०इतिदेवलकृतंधर्मशास्त्रम् ॥ॐ एवंमहापातकादिभिःपतितस्यप्रायश्चित्तमुक्तम् ॥। यस्त्वौद्धत्यान्नचिकीर्षे तितस्यकिंकार्य्यमित्याहमनुः॥ पतितस्योदकंकार्यं सपिंडैर्बांधवैः ॥ निंदितेहनिसायाह्नेज्ञात्यृत्विग्गुरुसन्निधौ ॥ १ पतितस्येतिमहापातकिनो जीवतएवप्रेतस्योदकक्रियावक्ष्यमाणरीत्या सपिंडैःसमानोदकैर्ग्रामाद्ब हिःकृत्वाज्ञातिऋत्विक् गुरुसन्निधानेरिक्तायांनवम्यांतिथौदिनान्तेकर्त्तव्या तथाचयाज्ञवल्क्यः॥ दासीकुंभं वहिर्ग्रामान्निनयेरन्स्वबांधवाः पतितस्यव हिःकुर्युःसर्वकार्येषुचैवतामिति अत्रमिताक्षरा एतच्चनिनयनमुदकपिंडदाना दिप्रेतक्रियोत्तरकालंद्रष्टव्यम् तस्यविद्यायोनिगुरुसंबंधाश्चसन्निपात्यसर्वा एयुदकादीनिप्रेतकर्माणिकुर्युः पात्रंचास्यविपर्यस्येयुः

कुंभ मिति किपतित के जो संबंधीहैं सोसभ एकत्रस्थित होकर ग्रामते बाहर एकदासी कुंभक्या अपवित्र घडाजलसे पूर्णकरें फेर उस पतितकानाम लेके करके पैरकेसाथ उसघडेको उलटा कर देवें फेर उसदिन तें आदिलेकर तिसपतित कों सभकार्यविषें बाहर निकालदेवें और ऐसातद करणा जेकर उहपतित किसीके वाक्यकरकेभी प्रायश्चित्तनकरे इति ॥ और मिताक्षरामे ऐसालि षयाहै एह जोनियमहै क्याजलकुंभकाविपर्यय करणा सोसभ उदकापिंडदानादि प्रेतक्रियाहै ति सतें उत्तरकाल विषें जान्नणा अर्थात् प्रथम प्रेतक्रिया करके पीछेघटविपर्यय करणा चाहिये और तिसपतितकी विद्या जन्मगुरु संबंधि एहसभ कठेहोकरकेफेरसंपूर्ण उदकादि प्रेतक्रिया करें और फेर पात्रका विपर्ययभीकरें॥

श्रोर दास अथवा श्रोर कोयी कामकरणे वाला चकारते ऐसाहैकि अपवित्र पात्र लिया कर्के दासी घटाकों पूर्ण कर्के दक्षिण पासे मुखकर्के पैरके साथ उसघटको उलटा देवे श्रोर मुख ते एह संकल्प पडे कि अमुक जो पतितहैं तिसको जलक्रियाते रहित करताहुं॥ फेर तिसके पीछे सभ तिसका नाम उच्चारण करें। श्रोरप्राचीनावीतिनोक्या अपसव्यहोकर्के श्रोर शिखाको खोलकर्के पतितकी प्रेतक्रिया कर्के फेर योनिसंबंधादि लोक उसको कुछ न देखें श्रोर जलकों स्पर्श कर्के ग्राम विषे प्रवेश करें एह गौतम स्मृति विषे किहाहि इसतें॥अयमितिकि इस प्रकारत्याग तद करणा चाहिये जेकर संबंधियों कर्के प्रेरणाकों प्राप्त हो कर्के भी अपनी शुद्धि वास्ते प्रायश्चित्तनकरें॥ श्रोर स्मृति कहतेहैं तस्येति तिस पापीके गुरु श्रोर संबंधि ऐसे करें कि राजाके सन्मुखदोष प्रकट कर्के उस पापीको इस प्रकार कथन करें कि तुम अपने आचार

दासःकर्मकरोवा चकारात् अमेध्यपात्रमानीय दासीघटान् पूरयित्वादक्षिणाभिमुखःपदाविपर्य्यस्येदिदं अमुकमनुदककरोमीति नामग्रहांतंसर्वेऽन्वालभेरन् प्राचीनावीतिनोमुक्तशिखाविद्यागुरवोयोनिसंबंधाश्चनवीक्षेरन् अपःस्पृश्यग्रामंप्रविशेयुः इतिगौतमस्मरणात्॥ अयंचत्यागोयदाबंधुभिःप्रेर्यमाणोपिप्रायश्चित्तंनकरोतितदाद्रष्टव्यः तस्यगुरुबांधवाःराजसमक्षंदोषानभिख्याप्यानुभाष्यपुनःपुनराचारंलभस्वेति सयद्येवमप्यनवस्थितमतिःस्यात्ततोस्यपात्रंविपर्यस्येदितिशंखस्मरणात्। दासीघटमपांपूर्णंपर्य्यस्येत्प्रेतवत्पदा अहोरात्रमुपासीरन्नशौचंबांधवैःसह ॥ १ ॥ दासीतिसपिंडसमानोदकप्रयुक्तादासीउदकपूर्णंघटंप्रेतवदिति दक्षिणाभिमुखीभूयपादेनक्षिपेत्। यथासनिरुदकोभवति। तदनुतेसपिंडाःसमानोदकैः सहाहोरात्रमशौचमाचरेयुः

कों प्राप्तहों श्रोर ऐसे तिनके वाक्य कर्के भी जेकर तिस पातकीकी मति स्थिर न होवे तद तिसका पात्र विपर्यय करणा योग्यहै एह शंखस्मृति विषे लिखयाहै इस कारणते॥श्रोर स्मृति कहतेहैं दासीति तिसके जो सपिंड क्या भाई बंधु श्रोर समानोदकहै तिनां सभसंबंधियां कर्के प्रयुक्त जो एकदासीहै सो ऐसे काम करे कि एकघडेको जलके साथ पूर्ण कर्के प्रेत की न्यायी दक्षिण दिशामे मुख कर्के अपने पैरके साथ उस घटको उलटा कर देवे ॥ १ ॥ श्रोर जैसे सो पापी निरुदकहो जाताहै अर्थात् फेर तर्पण विषे श्राद्ध विषे सभसंबंधियाकों उसवास्ते जलदेणका अधिकार नहि रहिना कि फेर कोयी संबंधीभी उसके निमित्त जलनदेवे॥ श्रोर तिसकेपीछे सो संपूर्ण सपिंड समानोदकोंके साथ एक दिन रात्रि अशौच करें॥

और प्रेतवत् एह शब्द इस अभिप्राय कर्के किहाहै कि दाक्षिणाभि मुखहो कर्के और अपसव्य यज्ञोपवीत कर्के पूर्वोक्त कार्य करणा इसीकी प्राप्तिवास्तेहै एह मिताक्षरा विषे लिखयाहै ॥ निवर्त्तेश्चेति कितिस पतिततें सपिंडादियों के मध्य विषे इतने कामनिवृत्त करणे चाहिये किफेर उस पतितके साथ संभाषण और एक आसन ऊपर स्थिति और तिसके तांयी हेस्सा देना और वार्षिक श्राद्धादि विषे और विवाह विषे निमंत्रण रूपजो लोकव्यव हारहै सोसंपूर्ण कार्य दूर करदेवें अर्थात् सभ संबंधि उस पतिततें सभ व्यवहारका त्याग करे ३ और जेकर हितकर्के तिसके साथ जो पुरुष संभाषण करे तद तिसने प्रायश्चित्त करणा योग्यहै सोयी गौतम जीने किहाहै अतइति इसते उपरंत कि इस प्रकार पतितका त्याग कीतियां होयां फेर जेकर ज्ञानतें विना उस पतितके साथ संभाषण करे सो एक रात्रिगाय

प्रेतवदिति दक्षिणामुखापसव्ययोः प्राप्त्यर्थमितिमिताक्षरा॥ निवर्त्तेरंश्च तस्मात्तुसंभाषणसहासने दायाद्यस्यप्रदानंचयात्राविवाहलौकिकी ३ निवर्त्तेरन्निति तस्मात्पतितात् सपिंडादीनांसंभाषणमेकासनोपवेशनंच तस्मैरिक्थप्रदानंसांवत्सरिकादौनिमंत्रणादिरूपोलोकव्यवहार एतानिनि वर्त्तेरन् ३ यदिस्नेहादिनासंभाषणंकरोति तदाप्रायश्चित्तंकार्य्यम् गौत्तमः अतऊर्ध्वंतेनसंभाष्यतिष्ठेदेकरात्रंजपन्सावित्रीमज्ञानपूर्वंज्ञानपूर्वंचेत्त्रिरात्र म्॥ज्येष्ठताचनिवर्त्तेतज्येष्ठावाप्यंच यद्धनं ज्येष्ठांशंप्राप्नुयाच्चास्ययवीयान्गु णतोधिकः ॥ ४ ॥ ज्येष्ठतेतिज्येष्ठस्ययत्प्रत्युत्थानादिकं कार्य्यं तत्तस्यन कार्य्यम् ज्येष्ठलभ्यंचतस्याविंशत्युद्धारादिकंधनंनदेयम् यद्यपि ऋक्थ प्रदानप्रतिषेधादेवाप्युद्धारप्रतिषेधः सिद्धः ॥

त्री जप कर्के पवित्र होताहै और जेकर जान कर्के तिस पतितके साथ संभाषणादि व्यवहार करे तद तीनरात्रि गायत्री जप करणे कर्के शुद्धिको प्राप्तहोताहै ४ ज्येष्ठता इत्यादि योस्मृति है इसका अर्थ आपहि मूलविषे स्पष्ट करेंगे ॥ ज्येष्ठेति कि अपनेतें वडे को जो प्रत्युत्था नादिक करणा किहाहै सो तिस पतित को फेर नहि करणा योग्य । और ज्येष्ठ को जोधन अपने विभागतें अधिक ग्रहण करणा किहाहै सोभी तिसको विंशति उद्धारादि क रूप धन नहि देणा योग्य अर्थात् जितने भ्राताहैं उन सभ विषे ज्येष्ठको संपूर्ण पिता के धनका वीसवां हिस्सा अधिक देणा शास्त्रमे लिखयाहै सो उसकोनहिदेणा और यद्यपि दूसरस्थानविषें धनदानके निषेध तेंहि उद्धार निषेध सिद्ध होजाताहै

तदपि तिसते छोटेकों तिसधनकीप्राप्ति वास्तेलिखाहै क्या कि तिसज्येष्ठ संबंधि जोधनहै उद्धारकेसहित सोसभधन तिसते जो अधिकगुणवालाकनिष्ट भ्राताहे तिसने ग्रहणकरणा ४ । प्रायश्चित्तेति कि फेर पतितने प्रायश्चित्तकीतियांहोयातिसके जो सपिंडसमानोदकहैं सोसंपूर्णकीयाहै प्रायश्चित्तजिसने तिसकेसाथ पवित्र जलाशय विषे स्नानकर्के जल पूर्णजो नवीन घटहै तिस' का प्रक्षेपकरें ५ और इसस्थानविषे नवीनघट ग्रहणते दासीघटकाहि उपयोगकीयाहै ऐसाप्रतीतहोताहै अर्थात् तिसनवीन घटको पतितकेतांयींदेणा और पीछेघरको ल्याउण इसकर्के दासीघटका परिहारप्रतीतहुंदाहै ॥ और गौत्तमजीने इसविषे विशेषकिहाहै कि जोपुरुष प्रायश्चित्त

तथापियवीयसस्तत्प्राप्त्यर्थमनूद्यते तस्यैवज्येष्ठस्यसंबंधिधनं सोद्धारांशं तदनुजोगुणाधिकोलभते ४ पुनः पतितसंग्रहायाह प्रायश्चित्तेतुचरितेपूर्णकुंभमपांनवम् तेनैवसार्द्धंप्रास्येयुः स्नात्वापुण्येजलाशये ५ प्रायश्चित्तेति कृतेपुनः पतितेन प्रायश्चित्तेसपिंडसमानोदकास्तेनैवकृतप्रायश्चित्तेनसहपवित्रेजलाधारेस्नात्वाजलपूर्णनवंघटं प्रक्षिपेयुः इहनवघटग्रहणा द्दासीघट एव कृतोपयोगघटः प्रतीयते ( प्रक्षिपेयुः पतितायदद्युः ततश्चगृहं निनयेयुः) गौत्तमेनात्रविशेषउक्तः। यस्तुप्रायश्चित्तेनशुध्येत्तस्मिन् शुद्धेशातकौंभमयंपात्रं पुण्यतमाद्ध्रदात्पूरयित्वा स्रवंतीभ्योवाततएनमुपस्पर्शयेयुः अथास्मैतत्पात्रंदद्युः तत्संप्रतिगृह्यजपेत् शांताद्यौः शांतापृथिवीशांतंशिवमंतरिक्षंयोरोचनस्तमिहगृह्णामीत्येतैर्यजुर्भिस्तरत्समंदीभिः पावमानीभिः कूष्मांडैश्चाज्यंजुहुयात् ब्राह्मणायवादद्यात् गांचार्याय ॥

कर्के शुद्धहोताहै तिसके शुद्धहोयां सुवर्णका पात्र पवित्र हृदतेपूर्ण कर्के तिसके जो सपिंडसमानोदकहैं सोसभस्रवंतीभ्यो वा क्या अथवा नदीते पूर्ण कर्के तिससुवर्णपात्रने इसकों जलकास्पर्श करवावें और इसते अनंतर फेर उसी तांयीं उह पात्र देदेवें सो पुरुष पात्रकों ग्रहण कर्के इसमंत्रका जपकरें सोमंत्र शांताद्यौः इत्यादि मूलविषे लिखयाहे और इसीमंत्र कर्के और यजुर्वेदके जो मंत्रहैं और तरत् समंदीभिःइत्यादि जो मंत्रहैं और पवमानादि जो ऋचाहैं और कूष्मांडऋचाहैं तिन कर्के भिन्नभिन्न घृतका हवन करें फेर सुवर्णब्राह्मणके तांयींदेवे आचार्यकेतांयीं गौदान देवे तब पवित्रहोताहै ॥

और जिसकों प्राणांत प्रायश्चित्त किहाहै सो मरणे कर्के हि शुद्ध होताहै ॥ और तिसकेसंबंधीयो हैं सो तिसके मृत होयां तिसके निमित्त जलदानादि संपूर्ण प्रेत कर्म करें और एहिशांति जल सभ उपपातकोंविषेभी जानणा इति । सत्वेति किकीताहै प्रायश्चित्त जिसने सो पुरुष तिस पूर्वोक्त घटकों जलके मध्य विषे गिराय कर्के फेर तिसतें अनंतर अपने घर विषे प्रवेश कर्के जैसे पूर्वकार्य करताहो तैसे अपने संबंधियोंकेसाथकार्यां कों करे ॥ ६ ॥ और ऐसेहि विधिको पतित स्त्रीयां विषे करे अर्थात् जेकर स्त्री पतित होजावे और संबंधियोंके कहेसेभी जो प्रायश्चित्त न करे उसके वास्तेभी इसी प्रकार पूर्वोक्त विधि करणी योग्यहै । क्या कि पतितका उदक कार्य करणा योग्यहै इत्यादि विधिकों तिसस्त्रीका पति और सपिंड समानोदक वर्ग जो हैं सो करे ॥ और उन पतित स्त्रीयोंका इस विधि कर्के त्याग कीतियां भी भोजन वस्त्र फेर भी

यस्यतुप्राणांतिकंप्रायश्चित्तंसमृतःशुद्ध्येत् सर्वाण्येवमस्मिन्नुदकादीनि प्रेतकर्माणिकुर्युःएतदेवशांत्युदकंसर्वेपूपपातकेष्विति ॥ सत्वप्सुतंघटंप्रास्यप्रविश्यभवनंस्वकं सर्वाणिज्ञातिकार्याणियथापूर्वंसमाचरेत् ६ सत्वितिसकृतप्रायश्चित्तःतंपूर्वोक्तघटंजलमध्येक्षिप्त्वाततःस्वकीयभवनंप्रविश्य यथापूर्वंसर्वाणिज्ञातिकर्माणिकुर्यात् ॥ ६ ॥ एतमेवविधिंकुर्याद्योषित्सुपतितास्वपि वस्त्रान्नपानंदेयंतुवसेयुश्चगृहांतिके ७ ॥ एतमिति स्त्रीष्वपि पतितासुएतमेवपतितस्योदकंकार्य्यमित्यादिविधिंभर्त्रादिसापिंडसमानोदकवर्गःकुर्यात् ग्रासाच्छादनानिपुनराभ्योदयानि गृहसमीपेचासांवासार्थंकुटीर्दद्युः ॥ कास्ताःपतिताइतिपतितगणनायांज्ञेयम् ७ अकृतप्रायश्चित्तिनासंवसतःकृतप्रायश्चित्तिनासहावसतोदोषमाहयाज्ञवल्क्यः ॥एनस्विभिरनिर्णिक्तैर्नार्थंकंचित्सहाचरेत् कृतनिर्णेजनांश्चैवनजुगुप्सेतकर्हिचित्

तिनकों नांगी देनेंहि योग्यहै । और उनके संबंधी अपने घरके समीप इनको निवास करणे वास्ते कुटिया बना देवें और कौनसीयां पतितहैं एह विचार पतितोंकी गिनती विषे जानने योग्यहै इति ॥ ७ ॥ जिनोंने प्रायश्चित्त नहिकीता तिनके साथ यो व्यवहार करण वालेहैं तिनको और जिनोंने प्रायश्चित्त कीताहै तिनके साथ जोव्यवहार नहि करदे तिनका दोष कहतेहैं याज्ञवल्क्यजी एनस्विभिरि तिकेनाहि कीयाहै प्रायश्चित्त जिनोंने ऐसे पापीयोंके साथ दान प्रतिग्रहादिक अर्थ कुछभी नकरे अर्थात् पापीको नदान देणा और नपापीतें प्रतिग्रह ग्रहण करे इत्यादि और भी व्यवहार पापीके साथ कुछ नहि करे और जिनोंने अपनी शुद्धि वास्ते प्रायश्चित्त कीयाहो तिनको कदाचित् भी पूर्वकृत पाप कर्के निंदा न करे ॥ १ ॥

किंतु पूर्वकी न्यायीं उसके साथ व्यवहार करे अर्थात् जिन पुरुषोंने पाप निवृत्ति वास्ते संबंधियोंके वाक्य कर्के अपनी जाति विषे भोजनादि व्यवहारके निमित्त प्रायश्चित्त कीयाहै तिनको ऐसा निंदावाक्य कभी न कहे कि तुमने एह अमुक पाप कीताहै और जैसे आगे उनके साथ व्यवहार होताहो फेर भी तैसे हि करणा योग्यहै ॥ ८ ॥ और कैयोंने प्रायश्चित्त कीता भी है तथापि तिनां साथ व्यवहार नहि करणा एह कहतेहैं वालघ्नानिति बालक मारणे वाला जो पुरुषहै और किसीके कृत उपकारको दुष्ट आचरण करणे कर्के जो पुरुष नाश करणे वाला और अपनी प्राण रक्षा वास्ते जो शरण को प्राप्त होवे तिसको जो मारण वालाहै और जो

एनस्विभिरितिपापकारिभिरकृतप्रायश्चित्तैः सहदानप्रतिग्रहादिकमर्थंकिंचिन्नानुतिष्ठेत् कृतप्रायश्चित्तान्नैवकदाचिदपि पूर्वकृतपापत्वेन निंदेत्किंतुपूर्ववद्व्यवहेरत् ८ कृतप्रायश्चित्तिभिरपिकैश्चिन्नव्यवहार्य्यमित्याहसएववा लघ्नांश्चकृतघ्नांश्चविशुद्धानपिधर्मतःशरणागतहंतॄंश्चस्त्रीहंतॄंश्चनसंवसेत् ९ वालघ्नानिति वालंयोहतवान् कृतोपकारमपकाराचरणेनयोविनाशितवान् प्राणरक्षार्थमागतंयोहतवान् स्त्रियंचयोव्यापादितवान् एतान् यथावत्कृत प्रायश्चित्तानपि संसर्गितया न परिवसेत् ९ चरितव्रतविधौविशेषमाहमनुः उपवासकृतंतंतुगोव्रजात्पुनरागतं प्रणतंप्रतिपृच्छेयुः साम्यंसौम्येच्छसीति किं । १ । सत्यमुक्तातुविप्रेषुविकरेद्यवसंगवाम् गोभिःप्रवर्त्तितेतीर्थेकुर्युस्तस्यपरिग्रहम् २ केवलक्षीराहारेणेतरभोजनव्यावृत्त्या कृशदेहंगोष्ठात्प्रत्यागतंप्रणतंनम्रीभूतंकिमस्माभिः साम्यमिच्छसि पुनरसत्प्रतिग्रहंनकरिष्यसीतिएवंधर्मब्राह्मणाःपरिपृच्छेयुः ॥

स्त्रीको मारण वालाहै इनोंने विधि पूर्वक प्रायश्चित्त यद्यपि कीता भी होवे तदपि संसर्गि भाव कर्के इनके साथ न व्यवहार करे ॥ ९ ॥ प्रायश्चित्त कीतियां होयां फेर तिस विधि विषे मनुजीने विशेष किहाहै ॥ उपवासेति कि केवल दुग्ध पान करणे कर्के अतिकृश है शरीर जिसका और गोष्ठमें विधि पूर्वक निवास कर्के फेर आकर प्राप्त होयाहै और नमस्कार कर्के सन्मुख जो स्थितहै तिसको सभाके विद्वान् ऐसा कहे कि तुम असांके साथ साम्यताकी इच्छा करताहैं और फेर दुष्ट प्रतिग्रह न करें गा इस प्रकार ब्राह्मण धर्मको पूछें ॥ १

इसीका स्पष्ट अर्थहै॥प्रेत कार्य क्या पिंड दानादि क्रिया और उदक दान क्रिया अर्थात् तिलांजलि नहि देंणी इसकी मरण निमित्त सद्यः शुद्धि कथन कीतीहै। इसमें यह अभिप्रायहैं कि जो जातमृत इत्यादि के निमित्त मरण अशौच निषेध करण वाले वचनहैं सो मरण निमित्त जो पिंड दानादि क्रिया तिनके निषेध करण वालेहैं ॥ और संपूर्ण जो अशौच तिसकेनिषेध करणवाले नहि॥इसमें क्या कारण कितिसमें जन्म और मरण निमित्त जो अशौचहैं तिनकेएकत्र होयां २अर्थात् दोनोंके प्राप्त होयां २ मरण निमित्त तात काल शुद्धि होतीहै और जन्म निमित्त दश १० दिन अशौच होताहै इसअर्थ परायण जानणे ॥ जद मरण और जन्म निमित्त अशौच इकठेहोवें तद मरण निमित्त अशौच वलवान् है अर्थात् शाव शुद्धि करके जन्म

प्रेतंप्रेतकार्य्यंपिण्डदानादिनकार्य्यमुदकदानाक्रियाचनेत्यर्थः किन्तुशावाशौचनिमित्तंसद्यःशौचमेव अत्रायंभावः जातमृतादिनिमित्तशावाशौचनिषेधवचनानि मरणनिमित्तपिंडदानादिनिषेधपराणि नतुसर्वाशौचनिषेधकानि किंतुतत्राशौचयोर्जननमरणनिमित्तकयोःसंपातेमरणनिमित्तसद्यःशौचं जनननिमित्तंदशाहमित्यर्थपराण्यवगंतव्यानि मरणोत्पत्तियोगेतुगरीयोमरणंभवेदित्यादिवचनानिजातमृतमृतजातनिमित्तेतरविषयाणीतिज्ञेयम् ॥ अत्रविज्ञानेश्वरः॥ यदातुनप्रेतंनैवसूतकमितिपाठस्तदासूतकमस्पृश्यत्वंनैवभवतिपित्रादीनामित्यर्थः अथवायमर्थःअंतर्दशाहेयदिशिशूपरमःतदानप्रेताशौचंयदितत्रसपिंडजननं तदासूतकमपिनभवति किंतुपूर्वाशौचेनैव शुध्यतीत्यर्थइति ॥ नालच्छेदात्पूर्ववालमरणेविशेषोबृहन्मनुबृहत्प्रचेतसोः।

शुद्धि होतिहै इत्यादि जो वचन है सो जात मृत और मृत जात इनते जो भिन्न विषय है तिसमें जानने॥इसमें विज्ञानेश्वर जी कथन करतेहैं ॥ किजद(नप्रेतंनैवसूतकं)यहपाठहोवे तद पित्रादि यों को अस्पृश्यता नहि होतीहै अर्थात् स्पर्श के योग्य होतेहैं॥अथवा यहभी अर्थहै कि दश दिनके मध्यमें जदवालक मृतहोजावे तद पिंडादि क्रिया और अशौच नहि होता॥ और जेकर कोई सपिंडी उत्पन्न होवे तद सूतकनहि होना ॥ क्या होताहै किपूर्वले अशौच करकेशुद्धि होतीहै ।नाल छेदन तेपहले वालकके मरणेके विषे बृहत्मनु और बृहत् प्रचेतसजी इसमें विशेष कथन करतेहैं ॥

जीवेति । किजद वालक जीता उत्पन्न होवे और पीछे मृत होजाए तद सूतकनिमित अशौच होताहै और मरणनिमित अशौच नहि होता १ ॥ इसमे व्यवस्थाकहतेहैं । किसारा सूतकमाता को होताहै और पित्रादियों को तीन ३ रात्र अशौचहोताहि ॥ मुहूरिति ॥ दोघडी जीव कर्के पश्चात् जद मृत होजाए तद माता की शुद्धि दश दिन कर्के होतीहै और स्वगोत्री तातकाल शुद्धहोतेहैं इसमें यहतातपर्य्येहे ॥ किपित्रादियोकों जन्मनिमित्त अशौचहै ३ दिन । और अगले वाक्यमें सद्यः शुद्धि कथन कीतीहै सो अग्नि होत्रके वास्ते कहीहै । तिस प्रकार शंख जीने भी कहाहे ॥ अग्नि होत्रकें अर्थ वास्ते स्नान और आचमनतें तात काल शुद्धि होतीहै ॥ नालछेद नते उपरंत वालकके मृत्युके विषें जैमनि जीका वाक्यहे । कि जितना काल नालनाछेद न क

जीवन्जातोयदिततोमृतःसूतकएवतुसूतकंसकलंमातुःपित्रादीनांत्रिरात्रकमिति ॥ १ ॥ सूतकएवनमरणनैमित्तकम् तत्रव्यवस्थासूतेतिमुहूर्तंजीवितोवालःपंचत्वंयदिगच्छति मातुःशुद्धिर्दशाहेनसद्यःशुद्धास्तुगोत्रिणइति । पित्रादीनांजननिमित्तं दिनत्रयंउत्तरवाक्येसद्यः शौचमग्निहोत्रानुष्ठानाद्यर्थं ॥ तथाचशंखः अग्निहोत्राद्यर्थंस्नानोपस्पर्शनात्तत्कालंशौचमिति नाभिवर्द्धनानंतरंवालविपत्तौतुजैमिनिः ॥ यावन्नछिद्यतेनालंतावन्नाप्नोतिसूतकम् छिन्नेनालेततःपश्चात्सूतकंतुविधीयतइति ॥ नालच्छेदात्पूर्वं अल्पाशौचंपूर्वोक्तवाक्यात् ईपदर्थवाचकत्वान्नञःतदनंतरं संपूर्णाशौचमित्यर्थः मनुनंदं रजस्वलासप्रसंगमुक्तम् ॥ रात्रिभिर्मासतुल्याभिर्गर्भस्रावेविशुद्ध्यति रजस्युपरतेसाध्वीस्नानेनस्त्रीरजस्वलेति रजसिदृष्टे शीघ्रमेवोपरतेसासाध्वी स्नानेनविशुद्ध्यति दैवादिकर्म्मयोग्याभवति

रियें तितना काल सूतक नहि होता और नाल के छेदन कीतियां होयां तिसतें पश्चात् सूतक विधान कीताहे ॥ यहकथनकीयाहैं ॥ परंतु इसका एसा अर्थ हैं कि नाल छेदनते पहले थोडा अशौच कहाहे । क्यों कि । अग्नि होत्राद्यर्थं मित्यादि वाक्यतें ॥ और नञ् को थोडे अर्थका वाचक होणेतें और नाल छेदनतें उपरंत सारा सूतक होताहै ॥ और मनुजीनेयहरजस्वलाके साथ कथन कीयाहैं रात्रीति ॥ गर्भ स्राव के होयां २ मासोंके तुल्यदिनोंकरके माता शुद्ध होतीहै और ऋतुआकर तात काल जद दूरहोजावे तद सो रजस्वलास्त्री स्नानकरके शुद्धहोतीहै । इसीका स्पष्ट अर्थहै ॥ किऋतु केदेरयांहोयां शीघ्रही दूरहोजावे तद स्नानकर्के शुद्ध होतीहै अर्थात् देवतादि कर्म्मके योग्यहोतीहै

और ऋतु जेकर दूर नाहोवें तद चौथेदिन विषे स्नान करके शुद्ध होतीहैं यह वृहन्मनुजीने कहाहै अर्थात् चौथे ४ दिन व्यवहारके योग्यहोतीहै तिस वचनको कहतेहैं ॥ चतुरिति चौथेदिनमें स्नान करके शुद्धहोतीहैं ( व्यावहारिकी ) क्या व्यवहारमें विधान कीये जोक र्महैं तिन के योग्य होतीहैं ॥ तिसी प्रकार और स्मृतिमें भी कथन कीयाहै ॥ शुद्धेति कि रज स्वला स्त्रीचौथे दिन स्नान करके शुद्ध होईहोई भर्त्ताके योग्य होतीहै और पांचमें ५ दिनदेव कर्म और पितृ कर्म के योग्य होतीहै यह कहाहै इसीका स्पष्ट अर्थ है ॥ किचौथे दिनके विषे भर्त्ताके मैथुनकें योग्य होतीहै ॥और देव और पितृ कर्म के योग्य पांचमे दिन होतीहै(इ सश्लोकमें पंचमे) यह जोपदहै सोऋतु का जो निवृत्ति कालहै तिसका उपलक्षणहै उपलक्ष ण उसका नामहै जोसब्द अपने अर्थको कह कर और के अर्थ कोभी जनाये तिसकारणतें

रजस्यनुपरतेतु चतुर्थेहनिस्नानादितिवृहन्मनुः ॥ चतुर्थेहनिसंशुद्धाभवति व्यावहारिकीति ॥चतुर्थेहनिसंशुद्धयास्नाताव्यावहारिकी व्यवहारोचितक र्म्मयोग्याभवतीत्यर्थः स्मृत्यंतरमपितथा शुद्धाभर्त्तुश्चतुर्थेह्निस्नानेनस्त्रीर जस्वलादैवेकर्म्मणिपित्र्येचपंचमेहनिशुद्ध्यतीति ॥ चतुर्थेह्निभर्त्तुर्मैथुनार्हा भवतिदैवादिकर्म्मार्हापंचमेह्नीत्यर्थः अत्रपंचमइति रजोनिवृत्तिसमयोप लक्षणम् तेनपष्ठेसप्तमेवादिनेतत्संभवे तत्रैवदैवादिकर्म्मयोग्यताज्ञेया ॥ अत्ररजोदर्शनानंतरं पुनारजोदर्शनेविशेषमाहात्रिः रजस्वलायदास्नातापु नरेवरजस्वला अष्टादशदिनादर्वागशुचित्वंनविद्यते ॥१॥एकोनविंशतेरर्वा गेकाहंस्यात्ततोद्व्यहम्॥ विंशत्प्रभृत्युत्तरेपुत्रिरात्रमशुचिर्भवेदिति॥२॥अयम र्थः॥ १७ सप्तदशदिनपर्य्यंतं अशौचाभावः १ ततएकोनविंशतिदिनं यावत् द्व्यहम् ततस्त्र्यहम्

छेवें ६ अथवा सातमें ७ दिन रज कि निवृत्ति होंजाये तदहि देवतादि कर्म को यो ग्यता होतीहै ॥ इसके विषे ऋतु दर्शनते उपरंत फेर ऋतु दर्शनमें अत्रिजीने विशष कहाहै॥रजे ति कि रजस्वला स्त्री चोथे दिन स्नान करके फेर जेकर अठारां १८ दिनाते उरे उरे रजस्वला होजाए तद अशुद्ध नहि होती॥१॥और जेकर उन्नीस १९ दिनमें होवे तद एक दिन अपवित्र रहतीहै ॥ और उन्नीस दिनतें उपरंत होवे तद दो २ दिन और वीसदिन तें उपरंत रजस्वला होवे तद तीन ३ दिन अपवित्र रहतीहै॥२॥इसमें यह तात्पर्यहै कि सतारह १७ दिन पर्य्यंत अशौच नहि होता ॥ तिसते उपरंत १९ दिन पर्यंत १ दिन फेर वीसतक २ दिन और तिसते उपरंत तीन ३ दिन अशौच होताहै ॥

और कैयोंनें चौदा दिनतें उरे अशौचका अभाव मन्याहै सो स्नानकेदिनतें लेकर जनना॥१८ अठारा दिन वाला जो पक्षहै तिसमें रजो दर्शन दिनतें लेकर जानना इसतें विरोध नहिहै और जिस स्त्रीकी ऋतुनियमहै तिसमें एह नियम जानना और जिस स्त्रीकी कदे ऋतुका नियम नहि तिसके विषे यह नहि जानना यह विज्ञाने श्वरजीने कथन कीयाहै॥और वसिष्टजी रजस्वला स्त्रीके अशौचमें नियमाको कहतेहैं रजेति किरजस्वलास्त्री ३ दिन अशुद्ध रहतीहै और रजस्वला स्त्री अंजनना पावे और वुटणा नामले और जलमें स्नान नाकरे किंतु निकाल कर्के वाहर स्नान करे और पृथवीमें शयन करे और दिनमे नाशयन करे और तारेयोंको नादेखे और अग्निको नास्पर्श करे और अन्न नाभक्षण करे किंतुथोडाखाये और रस्सीकोना वटे और

कैश्चित्तु चतुर्दशादिनादर्वागशौचाभावइत्युक्तं तत्स्नानदिनमारभ्यगणन यावोध्यं पूर्वकंतुरजोदर्शनमारभ्योक्तमित्यविरोधः यस्याः प्रौढयौवना याउक्तदिषयेनियतंरजोदर्शनं तद्विपकमिदं नतुकादाचित्केषीतिविज्ञा नेश्वरादयः रजस्वलायाअशौचेनियमानाह वशिष्टः।रजस्वलात्रिरात्रमशुचिर्भवति साचनांजीत नाभ्यंजीत नाप्सुस्नायादधः शयीतनदिवास्वप्यात् नग्रहान्वीक्ष्येत नाग्निंस्पृशेत् नाश्नीयान्नरज्जुंसृजेत् नचदंतान्धावयेत् नहसेन्नचकिंचिदाचरेत् अखर्वेणपात्रेणपिवेदंजलिनावा पात्रेणलोहिताय सेनवेति ॥ नांजीत अंजनेननेत्रेनसंस्कुर्यात् नाभ्यंजीत तैलेनांगानि नमर्दयेत् नरज्जुंसृजेत् रज्जुसर्ज्जनं तदुत्पादन विस्तारणत्रोटनादिरूपंतन्न कुर्यादित्यर्थः॥अखर्वेण अधातुजेन विशेषआंगिरसे॥हस्तेश्नीयान्मृण्मयेवाऽहविर्भुक्क्षितिशायिनी रजस्वलाचतुर्थेह्निस्नात्वाशुद्धिमवाप्नुयादिति ॥

वीडोना करे हस्से भीनहि और कुछकामभीना करे और तूंवीके पात्र कर्के अथवा हाथ कर्के जलपीवे वा तांवेके पात्रमे अथवा लोहेके पात्रमें जलपीवे ॥ पूर्वश्लोकका स्पष्टअर्थहै(नांजीत) क्यासुर्मे कर्के नेत्रोंको भूषित नाकरे(नाभ्यंजीत) क्यातैल करके शरीरको मर्दन नाकरे (नरज्जुंसृजेत्) क्यारस्सिको नावट्टे और नातोडे ( अखर्वेण ) क्याकाष्टके पात्र करके अथवा मृतकाके पात्र कर जल पान करे अथवा खर्वनाम छोटे पात्र काहै तिस कर्के जल नापीवे और अंगिरसाके शास्त्रमें विशेष कथन कीयाहै॥हस्तइति। किरजस्वला स्त्री हस्त कर्के अन्न खाये अथवा मृतकाके पात्रमे खाये और घृतना खाये और पृथवीमें शयन करे और चौथे दिनमें स्नान कर्के शुद्ध होतीहै ॥

और स्मृति का वाक्यहै ॥ उदेति । कि रजस्वला स्त्री मांस और मखीर और सुगंधी वाली वस्तु और पुष्प और घृत इनको त्यागे और काष्ठ अथवा मृतकाके पात्रमें अन्न खाये और वृक्षसाथ जलपीवे ॥ १ प्रसूता अथवा रजस्वलास्त्री तारेयोंको नादेखें और दिनमें निद्रा और सुपारि अथवा पान और परवे आदिका बांधना इनको त्याग देवे ॥ २ इसीमें स्कंदपुराणका वाक्यहै स्त्री इति कि रजस्वला स्त्री तीन रात्र अपने मुखको न दिखावे और अपने वाक्यको न सुनावे रजस्वला जितना काल स्नान कर्के शुद्ध नहिहोती। तिसी प्रकार और कथन कीयाहै तस्मेति कि तिस कारणतें रजस्वला स्त्री के साथ एक घरमें निवास न करे और दान और वातां और रजस्वला का अन्न इनको त्यागे ॥ १ ॥ स्मृति मंजरी ग्रंथमें निषिद्ध वस्तु के सेवन में खोटे फल दिखाएहैं ॥ रजेति ॥ कि रजस्वला स्त्री जेकर पतिको प्राप्त होवे तद

स्मृत्यंतरे । उदक्यापललंक्षौद्रंगंधंपुष्पंघृतंत्यजेत् अखर्वपात्रेभुंजीयात्तोयमंजलिनापिवेत् १ प्रसवासार्त्तवानारीग्रहाणामीक्षणंत्यजेत् दिवानिद्रांच तांबूलंतालवृंतादिबंधनम् २ स्कांदे । स्त्रीधर्म्मिणीत्रिरात्रंतुस्वमुखंनैवदर्शयेत् स्ववाक्यंश्रावयेन्नापियावत्स्नानेनशुध्यति १ तथा ॥ तस्मादुदक्यया सार्द्धमेकगेहेनसंवसत् प्रतिग्रहंचसंवादमस्याश्चान्नंविवर्जयेत् १ निषिद्धसेवने दुःफलान्यपि दर्शितानिस्मृतिमंजर्य्याम् ॥ रजस्वलापतिंगच्छेच्चांडालोजायतेसुतः आलवालक्ष्वस्नाता जातस्त्वप्सुमरिष्यति ॥ १ ॥ तैलेनाभ्यंजनंकुर्य्यात् कुष्टरोगीप्रजायते आर्त्तवेचेत्खनेद्भूमिमल्पायुर्जायतेनरः ॥ २ ॥ नेत्रयोरंजनंकुर्य्यात्काणश्चांधश्चजायते पुष्पिणीदंतधावी स्याज्जायतेश्यावदंतकः ॥ ३ ॥ नखानांकृंतनंकुर्य्यात्कुनखीजायतेसुतः ऋतौरज्ज्वादिकच्छेदंकुर्य्यात्क्लीवः प्रजायते ॥ ४ ॥ इत्यादिसंस्कारभागे वोध्यम् ॥

तिसका पुत्र चांडाल होताहै और जेकर क्यारेके जलमें स्नान करे तद उसका पुत्र जल मे डूब के मरताहै ॥ १ ॥ तैलेति ॥ जेकर तेल शरीरमें मले तद कुष्ट रोग वाला होताहै ॥ और ऋतु समयमें पृथिवीको पुटे तद थोडी आयुषा वाला पैदा होताहै २ और जेकर नेत्रोंमे सुरमा पावे तद काणा अथवा अंधा होताहै ॥ और जेकर रजस्वला स्त्री वीडी करे तद श्याम दंदों वाला होताहै ॥ ३ ॥ नखेति ॥ जेकर नखां को कटे तद खोटे नखां वाला होताहै ॥ और जेकर ऋतु समय में रज्ज्वादिका छेदन करे तद नपुंसक उत्पन्न होताहै ४ ॥ इत्यादि संस्कार भागमें जाणलैणा ॥

और विशेष कथन कीयाहै पाराशर के ग्रंथमें ॥ स्नेति ॥ जद कदाचित् नैमित्तक स्नान प्राप्त होवे ॥ अर्थात् सूर्यादि ग्रहण आजावे तद रजस्वला स्त्री और पात्रमें स्थित जो जलहै तिस जल कर्के स्नान करे और व्रत करे ॥ १ ॥ सिक्तेति । और जल कर्के जद सांगोपांग गिल्ले श रीर वाली होवे तद वस्त्रोंको न निचोडे और और वस्त्रको भी न धारण करे अर्थात् उोहि गिल्ला वस्त्र ऊपर रखे यह कथन कियाहै ॥ २ ॥ शुक्रके ग्रंथमें और भी विशेष कहाहै ॥ ज्वरेति ( प्रश्न ) कि जो स्त्री ज्वर वाली जद रजस्वला होजाये तिस स्त्रीकी पवित्रता किसप्रकार होवेगी और किस कर्म कर्के तिसकी शुद्धि होवेगी ॥ १ ॥ चतुरिति ॥ उत्तर ॥ चौथे दिनके प्राप्त होयां होयां और स्त्री तिस रजस्वला स्त्रीको स्पर्श करे ॥ और पश्चात् सो स्त्री सहित वस्त्रों के स्नान करे फेर रजस्वलाको स्पर्श करे इसी प्रकार पुनः पुनः स्नान कर्के स्पर्श करे ॥ २ ॥

अन्योविशेषः पराशरीये स्नानेनैमित्तके प्राप्तेनारीयदिरजस्वला पात्रांतरिततोयेनस्नानंकृत्वाव्रतंचरेत् १ सिक्तगात्राभवेदद्भिः सांगोपांगाकथंचन नवस्त्रपीडनंकुर्य्यान्नान्यद्वासश्चधारयेदिति २ अन्योपिविशेषऔशनसे ज्वराभिभूतायानारीरजसाचपरिप्लुता कथंतस्याभवेच्छौचंशुद्धिः स्यात्केनकर्म्मणा १ चतुर्थेहनिसंप्राप्तेस्पृशेदन्यातुतांस्त्रियम् सासचैलावगाह्यापः स्नात्वास्नात्वापुनः स्पृशेत् २ दशद्वादशकृत्वोवाआचामेच्चपुनः पुनः अंतेचवाससांत्यागस्ततः शुद्धाभवेच्चसा दद्याच्छक्त्याततोदानं पुन्याहेनविशुद्ध्यतीति २ अन्यारजस्वलेतराशुद्धा तांरजस्वलां पुनः पुनः स्नात्वाचम्यस्पृशेत्तदासाशुद्ध्यति प्रकारोयमातुरमात्रेज्ञेयः। रजस्वलासूतिकयोर्मृतौविशेषमाह पराशरमाधवः सूतकायांमृतायांतुकथंकुर्वंतियाज्ञिकाः कुंभे सलिलमादायपंचगव्यंक्षिपेत्ततः ॥ १ ॥

दशेति ॥ दश १० वार अथवा वारां १२ वार फेर फेर आचमन करे । और अंतमें वस्त्रोंका त्याग करदेवे । तिसते उपरंत शुद्ध होतीहै ॥ ३ ॥ दद्येति ॥ तिसते उपरंत शक्ति कर्के दान करे। पश्चात् पुण्याह वाचन कर्के शुद्ध होतीहै यह कथन कीयाहै ॥ पूर्व श्लोकका स्पष्ट अर्थहै ॥ कि रजस्वला स्त्रिति इतर और कोई शुद्ध स्त्री वारं वार स्नान कर्के और आचमन कर्के तिस रजस्वला स्त्रीको स्पर्श करे तद सो रजस्वला स्त्री शुद्ध होतीहै ॥ परंतु जद रोग कर्के स्त्री बहुत दुःखी होवे तद यह प्रकार करणा योग्यहै ॥ रजस्वला और प्रसूता स्त्री बहुत दुःखी होवे तद यह प्रकार करणा योग्यहै ॥ रजस्वला और प्रसूता स्त्रीकी मृत्युमें पराशर माधव जी विशेष कहतेहैं ॥ सूतेति कि प्रसूता स्त्रीके मृतहोयां २ ब्राह्मण किस प्रकार करतेहैं ॥(प्रकार)॥ घटमें जलपायकर पश्चात् पंचगव्य पाय देवे ॥ १ ॥

पुण्येति ॥ पवित्र ऋचों करके जलोंको मंत्र करके और ब्राह्मणकी वाणी करके शुद्ध होतीहै तिसे जल करके स्नान कर वाके पश्चात् विधिसे दाह करे ॥ २ ॥ इसीका स्पष्ट अर्थहै ॥कि आपोहिष्ठा और उपपातक प्रकरणमें लिखीयां जो पावमान्यादि ऋचां तिन कर्के जलको मंत्र कर पश्चात् यह मृतहोई २ स्त्री शुद्ध होगीहै इस ब्राह्मणकी वाणी करके शुद्धिको प्राप्त होतीहै ॥ सोई कथन कीयाहै इति ॥ कि लोकोंकी कृत्यके वास्ते देववा ब्राह्मणोंके वास्ते तीन ३ पवित्र कल्पन करते भये ॥ क्या दानादि करके जो रोगादिका दूर करवा देणा

पुण्यर्ग्भिरभिमंत्र्यापोवाचाशुद्धिंलभेत्ततः तेनैवस्नापयित्वातुदाहंकुर्य्याद्यथोविध पुण्यर्ग्भिः आपोहिष्ठापावमान्यादिभिः अपोजलानिअभिमंत्र्यततः वाचाब्राह्मणोक्तया इयंमृताशुद्धाइत्येवंरूपयाशुद्धिंलभेदित्यर्थः तदुक्तं त्रीणिदेवाःपवित्राणिब्राह्मणानामकल्पयन् अदृष्टमद्भिर्निर्णिक्तंयच्चवाचाप्रशस्यतेइतिअदृष्टंपुण्यं१ मंत्रेणजलसेकः२ शुद्धिवचनंचेति रजस्वलायास्तुवृद्धशातातपः पंचभिःस्नापयित्वातुगव्यैःप्रेतांरजस्वलाम् वस्त्रांतरावृतांकृत्वा दाहयेद्विधिपूर्वकामिति प्रेतांमृतांपंचगव्यस्नानानंतरंसामान्यविधिनादाहयेदित्यर्थः।निर्णयसिंधौतुविशेषः अब्लिंगाभिर्मंत्रिताभिर्वामदेव्याभिरेवच अन्यैश्चवारुणैर्मंत्रैःसंस्नाप्यविधिनादहेत् १

अथवा मंत्रेहोए जल कर्के शुद्ध करणा और वाणी करके जिसको श्रेष्ट कथन करणा ॥ ३ ॥ रजस्वलाके विषे वृद्ध शातातपजीने विशेष कथन कीयाहै ॥ पंचेति ॥ कि मृत रजस्वलाको पंच गव्य करके स्नान कराके और और वस्त्र करके आछादन करे पश्चात् विधि करके दाह करे ॥ यह मिताक्षरामें कहाहै ॥ १ ॥ निर्णयसिंधुमें विशेषहै ॥ आबेति ॥ आपोहिष्ठादि और मंत्रित और वामदेवी सहस्रशीर्षा इनमंत्रों कर स्नान करवाये पीछे विधिसे दाह करे ॥ १

गृह्य कारिकामे प्रसूता होई स्त्रीके मरण विषें विधि कहीहै ॥ सूतिकाके मृत होयां२ सर्वौषधी कर्के तिसको लेपन करे परंतु जिसको सूतक नहि सो लेपन करे और पिच्छे तिसके स्पर्शके दोष दूर करणे वास्ते एक १०० सउ छज्ज मिट्टिका जलाशयतें बाहर निकाले ॥ १ ॥ और सूतिका मरणके प्रायश्चित्त विषें विशेष किहाहै तिसी स्थान विषें । जद सूतिका स्त्री विना स्नानतें मरजावे तद तिसकी क्रियाका अधिकारी तिन्न वर्ष तक कृच्छ्र करदा रहे ॥ २ ॥ यह प्रा० प्रसूति होया त्रय दिनके अंदर मरणे का है ॥ और अगले त्रेदिन के अंदर मरें तां दो वर्ष कृच्छ्र करणा चाहिये ॥ ३ ॥ और छे दिन के आगे ९ दिनके अंदर मरे तद एक वर्ष का कृच्छ्र करणा चाहिये ॥ ४ ॥ जेकर इसमें असमर्थ होवेतो भी तिसमें कहतेहैं ॥ कि पूर्वोक्त पक्ष त्रय

गृह्यकारिकायां । सूतिकामरणेप्राप्तेसर्वौषध्यनुलेपनं असूतकीतुसंस्पृष्टः शूर्पाणांतुशतंक्षिपेत् १ प्रायश्चित्ते विशेषस्तत्रैव सूतिकातुयदासाध्वीवि स्नातामरणंगता त्रिवर्षपूर्णपर्य्यंतंशुध्येत्कृच्छ्रेणसर्वदा २ इदंचाद्यत्र्यहे।सूतिकातुयदानारीरजसानुपरिप्लुता म्रियतेचेत्तुसानारीद्विवर्षंकृच्छ्रमाचरेत् ३ इदंद्वितीयत्र्यहे । सूतिकातुयदासाध्वीविस्नातामरणंगता अब्दकृच्छ्रेण शुद्धेतव्यासस्यवचनंयथा ४ इदंतृतीयत्र्यहे अत्राशक्तौपक्षांतरमुक्तं तत्रैव सूतिकातुयदानारीविस्नातामरणंगता।त्रिपएनवदिनादर्वागेकाब्देनविशुध्यति५ऊर्ध्वंतु।सूतिकातुयदानारीप्राणांश्चैवपरित्यजेत् मासमेकावधिंयावत्रिभिः कृच्छ्रैर्विशुध्यति ६ रजस्वलामरणेतुचांद्रायणत्रयमेवप्रायश्चित्तं तत्प्रत्याम्नायोवाकार्य्यः ॥अत्र रजोजननमरणानांगणनोपयोगितयादिन प्राथम्येविकल्पमाह कश्यपः॥ उदितेतुयदासूर्य्येनारीणांदृश्यतेरजः जननंवाविपत्तिर्वा यस्याहस्तस्यशर्वरी १ यस्यवारस्याहः प्रवृत्तं तस्यैव शर्वरी रात्रिंसर्य्योदयमारभ्याष्टपंचशद्दंडपर्य्यंतंपूर्वमेवाहोज्ञातव्यम्॥अर्धरात्रावधिः कालः सूतकादौविधीयते ॥

विषें भी एक वर्ष काहि प्रायश्चित्त करणा ॥ ५ ॥ और ९ दिनके आगे महीने तक सूतिका मृत होवे तद त्रे कृच्छ्र कर्के शुद्ध हुंदाहै ॥ ६ ॥ और रजस्वलाके मरणमें त्रे चांद्रायण व्रत करणे कहेहैं अथवा प्रत्याम्नाय जो व्रत प्रकरणमेंहै सो करणा ॥ और ऋतु ॥ और जन्म । मरण इनका क्रम कर्के दिनको प्रथमतामें कश्यपजीने विशेष कहाहै ॥ उदीति ॥ सूर्यके उदय होयां २ स्त्रीयोंकोऋतु । बालकका जन्म और मरण जद देखें तद ओही दिन ग्रहण करणा । क्यों जिसका दिनहै उसीकी रात्रिहै १ इसीका स्पष्ट अर्थहे॥ जिस वारका दिनहो उसीकी रात्री होतीहै सूर्योदयतें लेकर ५८ घडी तक पूर्वला दिनही जानणा ॥ इसमें भेद कहतेहैं । अर्धेति । कि । जन्म । मरण और ऋतु इनमें आधिरात तक काल विधान कीयाहै ॥

इसीका स्पष्ट अर्थहै ॥ अर्द्धरात्रतें पहले जद रजहोवे अथवा जन्म और मृत्यु होवे तद पूर्व लादिन ग्रहण करणा और जद अर्द्ध रात्रनें उपरंत होवे तद अगलादिन ग्रहण करणा ॥ २ ॥ और भेद कथन करतेहैं ॥ रेति ॥ कि रात्रिके तिन भाग करणे पहले दो भाग पूर्व दिन साथ जोडने ॥ और पिछलाभाग प्रातःकालसाथ लगाणा ऋतु और सूतकमें यहव्यवस्थाकीतीहै ३ और व्यवस्थाकहतेहैं ॥ रात्रिविषे जदमृतहोवे और ऋतुहोवे और जन्महोवे तद जितनाकाल सूर्य उदे ना होवे तितना काल पूर्वला दिनाहि ग्रहण करणा ॥ ४ ॥ पूर्वला यह पक्ष विषय भेद करके कथन कीयाहे ॥ इनमैंदेशाचार नें व्यवस्था जाननी ॥ और त्रिगर्त्तादिदेशोंमें पूर्वला हि प्रवृत्तहे ॥ रजस्वलास्त्रीके स्पर्शका शुद्धि विस्तार प्रकीर्ण प्रकरणमें देखलेणा ॥ अवसामान्य

अर्द्धरात्रात्प्रागुत्पन्नेरजआदौपूर्वतदनंतरं परमहः प्रथमंग्राह्यम् ॥ २ ॥ रात्रिंकुर्य्यात्रिभागांन्तुद्वौभागौपूर्वएवतु उत्तरांशंप्रभातेन युज्यते ऋतुसूतके ३ रात्रेःपूर्वभागद्वयंयावत्पूर्वतदनंतरं परमहःप्रथमम् ॥ रात्रावेवसमुत्पन्नेमृतेरजसिसूतके पूर्वमेवादिनंग्राह्यंयावन्नाभ्युदितोरविः ४ पूर्वएवायंकल्पोविपय भेदेनोक्तः॥देशाचारतोव्यवस्था त्रिगर्त्तादौ पूर्वएवपक्षःप्रवर्त्तते॥ रजस्वलास्पर्शादिशुद्धिप्रपंचस्तुप्रकीर्णकप्रकरणेद्रष्टव्यः ॥ सामान्यतोमृतकाशौचमाहमनुः शुद्ध्येद्विप्रोदशाहेनद्वादशाहेनभूमिपःवैश्यःपंचदशाहेनशूद्रोमासेन शुद्ध्यति ॥ १ वर्णसंकरविषयेब्रह्मपुराणम् । शौचाशौचेप्रकुर्वीरन्शूद्रवद्वर्णसंकराःहीनवर्णेनउत्तमवर्णासुस्त्रीषुजाताःवर्णसंकराः॥ बृहस्पतिनाविशेषोभिहितः॥ दशाहेनसपिण्डास्तुशुद्ध्यंतिप्रेतसूतके त्रिरात्रेणसकुल्यास्तु स्नात्वाशुध्यन्तिगोत्रजाः १

तें मनुजी मृतके अशौच को कथन करते हैं ॥ कि प्रेताशौचमें ब्राह्मण दश १० दिन करके और क्षत्रीबारां १२ दिनकरके । वैश्य पंदरां १५ दिन करके । और शूद्रएकमास ३० दिनकरके शुद्ध होताहै ॥ १ ॥ वर्णसंकरके विषे ब्रह्मपुराण का वाक्यहै ॥ शौचेति ॥ वर्णसंकर शूद्र कीन्याईं शौच और अशौच करण ॥ वर्णसंकरवोह होतेहैं जो हीन वर्ण पुरुषतें श्रेष्ठ वर्ण की स्त्रीयोंमें उत्पन्न होवें ॥ इसमें बृहस्पतिजी विशेष कहते हैं ॥ दशेति कि प्रेतसूतक में सपिंडी पुरुष दश १० दिनकरके शुद्ध होतेहैं ॥ और तीन ३ रात्रीकरके सकुल्य शुद्ध होतेहैं और गोत्रज स्नान करके शुद्ध होते हैं ॥ १ ॥

इसश्लोकमें(दशाह)यहजोपदहै सो अपने २ वर्णमें कथनकीयाजो अशौचहै तिसको कहताहैं। अर्थात् क्षत्री १२ वारां दिन करके और वैश्यपंदरा दिन करके और शूद्र तीस ३० दिनकरके शुद्धहोतेहैं। और सत ७ पीडीयां पर्यंत सपिंडीहोतीहैं ॥ तिसते उपरंत दशपीडी पर्यंत सकुल्य होतेहे॥ और तिसते उपरंत जांताहैं नाम और जन्मजिनका ऐसे जो कुलज इसप्रकारज्ञानका विषेहे ॥ तिसते उपरंतसगोत्र और सजातीय यहतीनसंज्ञावालेंहै।इसमें यहव्यवस्थाहै। किब्राह्मण के सपिंडी ब्राह्मणके मृत होयां २ दश १०दिन करके शुद्धि होतीहैं ॥ और सकुल्यकेमृतहोयां २ तीन दिन ३ करके शुद्धिहोतीहै ॥ और तिसते उपरंतजांताहै जन्म और नाम जिसका ऐसे कुलजके मृतहोयां २ वारां१२ पहर करके ॥ और गोत्रजके मृतहोयांहोयां स्नानकरके शुद्धिहोती

अत्रदशाहपदंस्वस्ववर्णोचिताशौचोपलक्षणम्। सप्तपुरुषाविधिःसपिण्डाः ततोदशमपुरुषपर्य्यंतस्ववंश्याःसकुल्याः तदूर्ध्वंज्ञातजन्मनामानःकुलजा इत्येवज्ञानविषयाः तदूर्ध्वंसगोत्राः १ गोत्रजाः २सजातीयाइतिसंज्ञात्रय संज्ञिनः॥ अत्रेयंव्यवस्था॥ ब्राह्मणस्य सपिंडे ब्राह्मणेमृतेदशरात्रेणशुद्धिः सकुल्येमृते त्रिरात्रेण ॥ तदूर्ध्वंज्ञायमानजन्मनामकेकुलजेमृतेपक्षिण्या गोत्रजेमृतेस्नानेन ॥ एवंक्षत्रियस्यसपिण्डमरणेद्वादशाहेन ॥ सकुल्येत्रिरात्रेण तदूर्ध्वंज्ञातनामादिकेपक्षिण्या गोत्रजेस्नानमात्रेण एवंवैश्यसपिण्डेवैश्यस्य१५ पंचदशभिःअन्यत्समानम् । शूद्रस्यसपिण्डेशूद्रेमृतेमासेनशुद्धिरन्यत्समानम्

है॥ इसी प्रकार क्षत्रीके सपिंडी के मृत होयां २ वारा १२ दिन करके और सकुल्यकेमृतहोयां २ तीन ३दिन करके और ज्ञात नामके मृतहोयां २ वारा पहर १२ करके। और गोत्रजके मृत होयां २ स्नान करके शुद्धि होतीहै ॥ इसी प्रकार वैश्यके सपिंडी मृतहोयां २ वैश्यकीशुद्धि १५ दिन करके ॥ और सकल्यके मृतहोयां २ तीन दिनकरके और ज्ञात नामादिके मृतहोयां २ वारां १२ पहर कर्के और गोत्रजके मृतहोयां २स्नानकरके शुद्धिहोतीहै । इसीप्रकार शूद्रके सपिंडीके मृत होयां २ एकमास कर्के और सकल्यके मृत होयां २ तीन दिन कर्के और ज्ञातनामादिके मृतहोयां २ वारां २१ पहर करके शुद्धि होतीहै

निर्णयसिंधुमें यह कहाहै कि सप्त पिंडी पर्यंत दश १० दिन और चौदह पिंडी पर्यंत तीन ३ दिन और तिसते उपरंत स्नान मात्र ही सूतक होंताहै । सपिंडी समानोदक और सगोत्र इस भेद कर्के तीन प्रकार का निर्णय कीयाहै॥स्पर्शके विषे अंगिराजीने विशेष कहाहै ॥चेति कि ब्राह्मणके मृतहोयां २ ब्राह्मणको चौथे ४ दिन स्पर्श करणा कहाहै ॥ और क्षत्रीकोपांच मेदिन और वैश्यको सप्तम ७ दिन और शूद्रको दश १० दिन बुद्धिमानोंने स्पर्श करणाक हाहै।२।इसमें यह वात पर्यहै॥कि अशौचके होयां होयां२भी अशौचके तीसरे भागके व्यतीत होयां २ अंगस्पर्श करणेयोग्यहै॥क्योंकि अशौच दिनतें लेकर तीसरे भागके व्यतीतहोयां २

निर्णयसिंधौतु सप्तपुरुषपर्य्यंतंदशरात्रंततआचतुर्दशांत्रिरात्रंततःस्नानमि ति । सपिण्डसमानोदकसगोत्रेतिभेदेनत्रिविधं निर्णीतम् ॥ स्पर्शेविशेषमा हांगिराः ॥ चतुर्थेहनिकर्त्तव्यःसंस्पर्शोब्राह्मणस्यतु पंचमेहनिविज्ञेयःसंस्प र्शःक्षत्रियस्यतु १ सप्तमेहनिवैश्यस्यविज्ञेयंस्पर्शनंवुधैःदशमेहनिशूद्रस्यका र्य्यंसंस्पर्शनंवुधैरिति २ अयंभावः अशौचेविद्यमानेपितत्तृतीयभागेऽतीते ऽङ्गस्पर्शःकर्त्तव्यः।अशौचकालाद्विज्ञेयंस्पर्शनंतुत्रिभागतः शूद्रविट्क्षत्रवि प्राणांयथाशास्त्रप्रदर्शनादितिदेवलस्मरणात्॥अत्रमनूक्तेब्राह्मणाद्याशौचवि षये ऋष्यंतरवचसा क्वचित्तारतम्यमुपलभ्येततदागुणवद्गुणवद्विषयंवो ॥ ध्यम् सूतकाल्पतापक्षोगुणवद्विषयः तदितरोऽल्पगुणविषय इतिव्यवस्था निर्णयसिंधौत्वियमंङ्गस्पर्शव्यवस्थापि युगांतरविषयिण्येवेत्युक्तम्॥

शूद्र और वैश्य और क्षत्री और ब्राह्मण इनको स्पर्शकरणा कहाहै॥क्योंकि यथायोग्य शास्त्रके देखणेंते १ इसदेवलके बचनते इसमें मनुजीने कहाहै॥ कि ब्राह्मणादिके अशौचमें किसे ऋषि के वचन कर्के किसी स्थानमें जद न्यूनाधिक अशौच देखिए तद सो न्यून और अधिकता गुण वालेमें और निर्गुणमें जाननी अर्थात् गुणवालेको अशौच थोडा और निर्गुणको बहुत होताहै यह व्यवस्था मनुस्मृतिमें कथन कीतीहै ॥निर्णय सिंधुविषे यह अंगस्पर्शकी व्यवस्था और युगोंमेंहैं कलि युगमें नहि ऐसा लिखाहै ॥

अब अशौचोंका मिश्रीभाव कथन करतेहैं ॥कूर्म्मपुराण का वाक्यहै।कि अथेति।जद वहुते अशौच होवे तद जो वहुते दिनावाला अशौचहै तिसकरके शुद्धि होतीहै॥और जिस स्थानमें मरणा शौच और जानना शौचदोनोहोवे तद तिनमें मरणाशौच वली होताहै॥इसीकास्पष्टअर्थ है ( अघानां ) क्याएकअशौच वहुत काल होण वाला है और एक अशौच थोडे कालकाहै उहनोंकीयोगपद्यता ग्रहण करणी॥क्योंकि ( आद्यभागे )इत्यादि वाक्यतें( यौगपाद्यं ) क्याएक अशौचमेंजो और अशौच पडजावे उसकानाम यौगपद्यहै ( गरीयसा ) क्यावहुते दिन होण वाला जो अशौचहै तिसके निकलने करके दूसरे कीभीशुद्धि होतीहै॥अर्द्धश्लोककरके ( अघानां ) इसकाअपवादकहतेहैं ॥कि मरणा शौच और जन्माशौचके एकत्र होयांहोयां २ मरणाशौच थोडे कालकाभी होवे तदभी मरणाशौच वली होताहै॥और जन्माशौच वहुते दिन होण

॥ अथाशौचसंकरः॥कूर्म्मपुराणे अघानांयौगपद्येतुज्ञेयाशुद्धिर्गरीपसा मरणोत्पत्तियोगेतुगरीयोमरणंभवेदिति अत्राघानामशौचानांयौगपद्यं विषमकालव्यापिनांवोध्यमुत्तर वाक्यात् एकस्मिन्नपरोपनिपतनंयौगपद्यंगरीयसाऽधिकदिवसव्यापिनाऽशौचेननिर्गतेनशुद्धिर्भवति उत्तरार्द्धेनास्यापवादमाहमरणजननिमित्तयोःसन्निपातेमरणनिमित्त मल्पकालव्याप्यपिगरीयोवलवत् तेनजननाशौचमधिकमपिनिवर्त्यतइत्यर्थः समानदिनव्यापकसजातीयाशौचव्यवस्थाव्रह्मपुराणे ॥ आद्यभागद्वयंयावत्सूतकस्यतुसूतकेद्वितीयेपतितेत्वाद्यात्सूतकाच्छुद्धिरिष्यते १ । अतउर्ध्वंद्वितीयात्तुसूतकान्त्याच्छुचिः स्मृतः एवमेवविचार्य्यंस्यान्मृतकेमृतकान्तरे २ अत्राशौचकालेचतुर्द्धाविभक्ते प्रथमभागद्वयपर्य्यंतं समानदिनव्यापिसजातीयाशौचांतरसन्निपाततदाद्याशौचव्यपगमनेनशुद्धिः ॥

वाला भी होवे तदभी तिसकरके निवृत्तक्या दूरहोजाताहैं ॥ अर्थात् मरणाशौचकरके शुद्धिहोतीहैं ॥ तुल्यादिनमें होण वाले जोसजातीय अशौचहैं तिनकी व्यवस्था व्रह्मपुराणमें कथन कीतीहैं ॥ आद्येति किसूतक के दोभाग पर्यंत अर्थात् साडेचार दिन तक जद तुल्यादिन वाला और सूतक पडजावे तद आदलेसूतककरके शुद्धिहोतीहै ॥१॥अतइति। दोभागतें उपरंत जद सूतकमें सूतक पडजाये तदपिछले सूतक करके शुद्धिहोतीहै और मरणा शौच में मरणाशौचजद पडजाये तदभी इसीतरा विचारलेणा । २ । इसमें यह तातपर्य्यहै कि अशौच काल के चार भाग करणे पहले दोभागतक तुल्यदिनोंवाला जद और अशौच पडजाये तद आदले अशौच कोनिकाल करके शुद्धिहोतीहै

और दो भागतें उपरंत जद तैसा और अशौच पडजावे तद पिछले अशौच करके शुद्धिहोतीहै ॥ इसमें भी विशेषकहतेहैं किजद अशौच के अंतले दिनमें अर्थात्१ दिनमे और अशौच पडजाये तद और दोदिन कर्के शुद्धि होतीहै क्योंकि शेष रिहा जो दिन रात्रि तिसतें अधिक दोदिन करके शुद्धिहोतीहै इसवचनतें जानणा और अशौचके अंतले दि किसाथ नहिंदो दिन ग्रहण करणे ॥ जेकर उसके साथ ग्रहण करणा हुंदा तद एकदिनहि कथन करणे योग्यहै इसमें इसीप्रकार रुद्रधरजीने कहाहै कि अशौचके अंतले दिनरात्रेमें और पूर्ण अशौच पडजाये तद पूर्वले अशौचके अंतलेते अधिक दोदिन कर्के शुद्धिहोतीहै और जदप्रभातकालमें और अशौचांतका एकदिन रात्र शेष रहे और सूर्योदयतें पहले और पूर्वदिशाके प्रका

तदूर्ध्वंतादृगाशौचान्तरसन्निपातस्तदा द्वितीयान्तादेवशुद्धिः । तत्राप्यशौचांतिमेह्निअशौचांतरपातस्तदाधिकेनदिनद्वयेनशुद्धिः अवशिष्टादहोरात्रादधिकंतुदिनद्वयमितिवचनात् तत्राशौचान्तादिनेनसहादिनद्वयमितिनार्थः तथासतिएकमित्येवब्रूयात् अत्रेत्थंरुद्रधरोव्याख्याति अशौचान्तिमेऽहोरात्रेयद्यपरंसंपूर्णाशौचमापततितदापूर्वाशौचांतादाधिकेनादिनद्वयेनशुद्धिः॥ यदाप्रभातेऽशौचांताहोरात्रशेषेसूर्योदयात्प्राक्प्राचीप्रकाशेवृत्ते संपूर्णाशौचांतरोपनिपातितदासूर्योदयानंतरंदिनत्रयेणशुद्धिः अत्रच यदिदशरात्राःसन्निपतेयुराद्यंदशरात्रमशौचमित्यादिवाक्येन परिशेषेणचसंपूर्णसमानसजातीयाशौचोपनिपातेव्यवस्थाविज्ञायते ॥तथाहि गरीयसाऽल्पदिनव्यापकानां सजातीयनांवाध्यत्वविज्ञानात् विजातीयानांजननाशौचानामल्पदिनव्यापकेनापि मरणाशौचेन वाध्यत्वविधानात् ॥

शहोयां२ तुल्यदिन वाला और अशौच पडजाए तद सूर्योदयतें पीछे तीन ३ दिनकरके शुद्धि होतीहै ॥ इसमे विशेष कहतेहैं किजददश दिनदशरात्रके बहुते अशौच पडजायें तदआदले दशरात्रका अशौचहोताहै इत्यादिवाक्य कर्के और परिशेष करके भी संपूर्ण तुल्यदिनोंवाला सजातीय अर्थात् दशदिनके मरणाशौचमें दशदिनका मरणाशौच पडजाये तिसमें यहव्यवस्थाजाणनी योग्यहै क्या सोदिखातेहैं बलवान् अशौच करके थोडे दिन होणवाले और सजातीय अशौचोंकी बाधाजाननेतें और ऊंरजातीवाले जो जन्माशौचहैं तिनकी थोडे दिन होनवालेभी मरणाशौच करके बाधा विधान करणेतें अर्थात् मरणाशौच करके जन्माशौच बाधा जाताहै ॥

और परिशेषतें बाधक रहित तुल्य दिन होन वाले और एक जातीवाले दो अशौच जहां पड जायें तिस स्थानमें यह व्यवस्था जाननी ॥ और विषम दिनमें होणवालेजो भिन्न जातीके दो अशौचहैं अर्थात् जन्माशौचके दो अथवा तीन ३ दिनसें पीछे मरणाशौच पडे और विषम दिनमें होण वाले जो एक जातीके अशौचहैं अर्थात् जन्मा शौचके दो तीन दिनसें पीछे और जन्मा शौच पडजाये अथवा मरणाशौचके दो तीन दिन पीछे और मरणाशौच पडजावे तिनकी यह व्यवस्था नहि जानणी ॥ और इसको संपूर्ण शौच परत्व कर्के और एक कालमें होन वाले जो असंपूर्ण अशौचहैं तिनकी शुद्धि अगलेतें ही होतीहै ॥ कुछ और कहतेहैं॥ कि दोदिनका अथवा तीन दिनका अशौच पडा हुआ होवे तिसमें पश्चात् संपूर्णाशौच अर्थात् दश दिनका अशौच जद पडजाये तद दो और तीन दिनके अशौचको थोडा

परिशेषेणावाध्यं समकालव्यापकं सजातीयं यत्राशौचद्वयंनिपतति तत्रेयं व्यवस्था। विषमदिनव्यापकविजातीययोर्विषमकालव्यापक सजातीय योश्चनेयंव्यवस्था तत्रगरीयसैवव्यवस्थेति एतस्याः। संपूर्णाशौचपरत्वेन असंपूर्णाशौचानांसमकालव्यापकानामुत्तरेणैवशुद्धिः। किंच द्व्यहाशौचेत्र्यहाशौचेवावर्द्धिते तत्रपुनः संपूर्णाशौचांतरपातश्चेत्तदाद्व्यहत्र्यहयोर्लघुत्वाद्गुरुतराग्रिमाशौचापगमेनैवशुद्धिरिति तथाचदेवलः॥ परतःपरतःशुद्धिरघवृद्धौविधीयते स्याच्चेत्पंचतमादह्नः पूर्वेणाप्यनुशिष्यते १ एकस्मिन्नाशौचेत्रशौचांतरपातस्तदसमाप्तौ पुनरशौचांतरंचेत्तदा पूर्वाशौचपंचमदिनादग्रेपरेणैव शुद्धिर्ज्ञेया ॥

होणेतें और वहुत दिनका जो अगला अशौचहै तिसके निर्गम कर्के शुद्धि होतीहै ॥ तिसी प्रकार देवलजीने भी कहाहै ॥ परेति ॥ कि अशौचोंकी वृद्धिमें अर्थात् एक पूर्ण अशौचमें और पूर्ण अशौच पडजाये और ओह अशौच अजे ना निकले होन तो और अशौच पड जाये तद परले परले कर्के शुद्धि होतीहै॥ इह व्यवस्था पंचम दिनतें परे परे जानणी ॥ और जेकर पंचम दिनते पहले अशौचमें अशौच पड जाये तद पूर्वले अशौच कर्के शुद्धि होती है ॥ १ ॥ इसीका स्पष्ट अर्थहै ॥ कि एक अशौचमें और अशौच पडजाये और वोह अशौच अजे निकलेआभी न होवे तो पश्चात् पूर्वले अशौच के पंचम दिनतें आगे जद और अशौच पडजायें तद पिछले अशौच कर्के शुद्धि जानणी ॥

और परतम् । इस पद कर्के पूर्ण अशौच जानना ॥ और पंचम दिनते पहले जद पूर्ण अशौच में और पूर्ण अशौच पड जाये तद पूर्वले अशौचके निकलने कर्के शुद्धि होतीहै ॥ एह वचन ( आद्यभागद्वयमित्यादि ) इस वचन के तुल्यहै ॥ अर्थात् जो उसका अर्थहै सोई अर्थ इसका है ॥कूर्म पुराणमेंभी कथन कीयाहै॥अघेति॥ कि अशौचके वधाने वाला जो अशौचहै सो जद पहले अशौचमे पड जाये ॥ अर्थात् एक अशौच पहले पिया होवे और उपरंत एक और अशौच पडजावे तद पूर्वले अशौच कर्के शुद्धि होतीहै ॥ जेकर पंचमी रात्रिनें उपरंत पडे तद पिछले कर्के शुद्धि होतीहै ॥ १ ॥ इसीका स्पष्ट अर्थहै ॥ अशौचके वधाने वाला अ

परमशौचमत्रसंपूर्णाशौचपरंज्ञेयम् पंचमादह्नः पूर्वेण तादृगशौचान्तरपा तेपूर्वेणैवाशौचनिरासेनशुद्धिः आद्यभागद्वयमित्यादिब्रह्मवचनतुल्यमिदम् कूर्म्मपुराणेपि अघवृद्धिमदाशौचमूर्द्ध्वंचेत्तेनशुध्यति अथचेत्पंचमीरात्रि मतीत्यपरतोभवेत्१ अघवृद्धिमत् अशौचवर्द्धकमशौचंऊर्ध्वंप्रथमाशौचोत्त रंचेत्पतिततदातेनप्रथमेनैवोत्तरमपिशुद्ध्यति ।प्रथमाशौचपञ्चमीरात्र्यनं तरं द्वितीयंपतिततदापरतोद्वितीयेनैवेत्यर्थः विष्णुपुराणमप्येतद्विषयंयथा जननाशौचमध्ये यद्यपरं जननंस्यात्तदापूर्वाशौचव्यपगमेनशुद्धिः रात्रिशे षेदिनद्वयेन प्रभाते दिनत्रयेण मरणाशौचमध्येज्ञातिमरणेप्येवमिति ॥ रा त्रिशेषपदव्याख्यातूक्ताप्राक् ॥

शौच पहले अशौचमें जद पवे तद पूर्वले अशौच कर्के पिछले अशौचकी भी शुद्धि होती है ॥ और पूर्वले अशौचकी पंचमी रात्रिनें उपरंत दूसरा अशौच पावे तद पिछले अशौच कर्के शुद्धि होतीहै ॥ विष्णुपुराणमें भी कथन कीयाहै ॥ सो दिखातेहैं । जन्माशौचके मध्य में जद और जन्माशौच पवे तद पूर्वले अशौच कर्के शुद्धि होतीहै ॥ और एक रात्रि शेष रहे तद अशौचांतमें दो दिन अधिक कर्के शुद्धि होतीहै ॥ जेकर प्रभात कालमें अशौचमें अशौ च पडे तद तीन दिन कर्के शुद्धि होतीहै ॥ इसी प्रकार मरणाशौचके मध्यमें सजातिके मर णमें जानना ॥ और रात्रि शेष पदकी पूर्व व्याख्या कीतीहै ॥

इसमें यद्यपि बौधायनीय ग्रंथमे कथन कीयाहै कि नवम दिन तक जद अशौचमें अशौच प
डे तद पूर्वले अशौच करके अशौचकी समाप्ति होतीहै । यथा । जन्मा अशौचमें जद और
जन्माशौच पडे तद दश १० दिन अशौच होताहै इसते उपरंत दशरात्रके अशौचमें नव
दिन तक जद दश रात्रका अशौच पडे तद आदले अशौच करके शुद्धि होतीहै इसीका स्प
ष्ट अर्थहै ॥ जन्माशौचमें जन्माशौच पडे और मरणाशौचमें मरणाशौच पडे तद दश दिन
ही अशौच होताहै इसमें न्यूनाधिक कल्पना नहि करणी ॥ और दिनाके छिंडेमें नवम दिन
तक पूर्वे कथन कीयाहै तदपि पूर्वलाहि दश रात्र अशौच होताहि यह बौधायन जीने कहाहि
तदपि इह वचन सामान्यहै और पंचम ५ दिनकी अवधिको जनाने वाला जो ब्राह्मका व

अत्रयद्यपिबौधायनीये नवमदिनपर्य्यंतमशौचांतरपातेप्रथमेनैवसमाप्ति
रुक्ता॥यथाजननमरणयोःसन्निपातेसमानेदशरात्रः॥ अथदशरात्रायदिस
न्निपतेयुराद्यंदशरात्रमशौचमानवमाद्दिवसादिति। अर्थः जननेजननान्तर
स्यमरणेमरणांतरस्यचसन्निपाते दशरात्रमेवाशौचंनात्रन्यूनाधिकभावक
ल्पनादिनान्तरे आनवमात्पूर्वोक्तंतदापिप्रथममेवदशरात्रमिति। तथापि
सामान्यमिदंपंचमावधिबोधकब्राह्मवचसाबाध्यते॥बौधानीयंतच्छाखापरं
वावचनांतरमप्येवमेवसमाधेयं। अत्रपूर्वोक्तवचनेपुपंचमपदंसंपूर्णाशौचार्द्ध
परंतेनक्षत्रियादेः षट्सार्द्धसप्तपंचदशदिनानिपूर्वपरबोधकानिज्ञेयानि॥एवं
नवमपदंसंपूर्णाशौचोपान्त्यदिनपरम् दशरात्रपदंसंपूर्णाशौचोपलक्षकमि
तिबोध्यम् असंपूर्णाशौचसन्निपातेयमः

चनहै तिस करके बाध्या जाताहै अर्थात् यह वचन सामान्यहै और ब्राह्म वचन विशेषहै॥और विशे
ष करके सामान्यकी बाधा होतीहै अथवा बौधायनजीका वचन तिनकी शाखाकोहि विषय
करदाहै॥ और वचनभी इसी प्रकार समाधान करणा इसमें पूर्वले वचनमें जो पंचम इह पद
है सो संपूर्ण अशौचके अर्द्धपर है अर्थात् पंच दिन करके अद्धा अशौच ग्रहण करणा॥तिस
कारणतें क्षत्रिके सूतकमें छे६ दिन और वैश्यके सूतकमें साडे सात ७॥ दिन और शूद्रके सू
तकमें पंदरां १५ दिन पूर्वके और परके, जनाने वाले जानने ॥ इसी प्रकार नवम पद कर
के संपूर्ण अशौचांतके आदला दिन ग्रहण करणा और दश रात्र इस पद करके संपूर्ण अ
शौच लेणा ॥ थोडे अशौचके सन्निपातमें यमजी कथन करतेहैं

अघेति ॥ अशौचोंकी वृद्धिमे पिछले अशौचकरके अशौच समाप्त होताहै ॥ इसीका स्पष्ट अर्थ है॥किदो अथवा तीनदिनके अशौचके पिछाड़ी होयां जेकर तैसा और अशौच पडे तद पिछले अशौचकरके शुद्धि होतीहै ॥ यही शुद्धिविवेकमें स्पष्ट करके कहाहै ॥ कि दश १० दिनों के अशौचमें पांचमें दिनतक जेकर दूसरा सजातीय दश १० दिनका अशौचपडजाये तद पहले अशौचके निकलने करके शुद्धि होतीहै ॥ और जेकर पंचमदिनतें उपरंत नवमदिन तक दूसरा अशौच पडजाये तद अगले अशौच करके शुद्धि होतीहै॥ और जेकर दशादिनमें पूर्ण अशौच होर पडजाये तद दशदिनते उपरंत दोदिनकरके शुद्धि होतीहै ॥ और जेकर दशमदिनकीशेष रात्रिमें और सूर्यके उदेकालमें पूर्ण अशौच पवे तद सूर्योदयतें उपरंत तीनरात्रकरके शुद्धि

अघवृद्धावशौचेंतुपाश्चिमेनसमापयेदिति। एकस्मिन्‌द्व्यहत्र्यहादिके अशौचे तादृगशौचांतरपातश्चेत्तदापश्चिमेनैवशुद्धिः।इदमेवविशदीकृतंशुद्धिविवेके दशाहाशौचेपंचमदिनपर्य्यंतंयदिद्वितीय सजातीयंदशाहाशौचमापततित दापूर्वाशौचव्यपगमेनशुद्धिः। पंचमदिनानंतरंनवमदिनपर्य्यंतंद्वितीयाशौचे सत्यग्रिमाशौचव्यपगमेनशुद्धिः दशमदिने संपूर्णाशौचसतितद्दिनानंतर दिनद्वयेनशुद्धिः दशमदिनरात्रिशेषे अरुणोदयवेलायां संपूर्णाशौचोपनिपाते सूर्य्योदयानंतरंत्रिरात्रेणशुद्धिः।एवंक्षत्रियवैश्यशूद्राणां संपूर्णस्वस्वाशौचानिज्ञेयानि पूर्वार्द्धेसमानदिनव्यापकमशौचांतरं यदि भवति तदा पूर्वाशौचव्यपगमेनशुद्धिः।अग्रिमार्द्धेऽग्रिमाशौचव्यपगमेनशुद्धिः अशौचान्तदिनप्रभातकालेऽशौचांतरेऽधिकेनदिनत्रयेणशुद्धिः ॥ त्र्यहाद्यसंपूर्णाशौचे समानकालाशौचांतरोपनिपातेऽग्रिमाशौचव्यपगमेनशुद्धिरिति ॥

होतीहै ॥इसीप्रकारक्षत्री वैश्य और शूद्र इनकेभी संपूर्णअशौचमें अपने अपने अशौच जानने और पहले अर्द्धमें तुल्यदिनहोण वाला अशौच जद अशौचमें पड जाये तदपूर्वले अशौच करके शुद्धि होतीहै॥और जेकर अगले अर्द्धमें पडेतद अगले अशौच करके शुद्धि होतीहै॥और जेकर अशौचके अंतदिनके प्रभात कालमें और अशौच पवे तद और तीनदिनों करके शुद्धि होतीहै और जद दो तीन दिनका जोअसंपूर्ण अशौच है तिसमेंतैसा और अशौच पड जाये तद अगले अशौच करके शुद्धि होतीहै॥

विजातीय अशौच के मिश्री भावमें लघु हारीत जी कहतेहैं ॥ सूतेति ॥ जन्म निमित्त अशौ चमें जद मरण निमित्त अशौच पडे और तैसे जन्म निमित्त अशौचमें मरण निमित्त अशौच पडे ॥ तद मरण निमित्त अशौच करके जन्म निमित्त अशौच निकल जाताहै॥ और जन्मनि मित्त अशौच करके मरण निमित्त अशौच दूर नहि होता और मरणोत्पत्ति ॥ इस वाक्य क रके मरण अशौच की समाप्तिसें अधिक भी होवे जन्माशौच तद भी मरणाशौच करके शुद्धी होतीहै ॥ और जेकर मरणा शौच जन्माशौचकी समाप्तिसें अधिक होवे तद भी जन्माशौच करके शुद्धि नहि होतीहै । क्या होताहै कि मरणाशौच अपने दिनों करके निकलताहै ॥ अ र्थात् मरणा शौच करके शुद्धि होतीहै ॥ एह सभ एक कुलके अशौच का निर्णयहै और भिन्न कुल जो गुरु शिष्य स्वामि सेवकादिका अशौच तिस विषे नहि ॥ इहां दोआं वचना का एकही विषयहै ऐसा भी कई कहतेहैं ॥ इसमें कुछ और कहतेहैं ॥ कि अशौच

विजातीयसंकरेलघुहारीतः ॥ सूतकेमृतकंचेत्स्यान्मृतकेसूतकंतथा मृतेन सूतकंगच्छेन्नेतरत्सूतकेनतु॥मरणोत्पत्तियोगेतुगरीयोमरणंभवेदित्यादिना मृतेनस्वसमाप्त्यधिकमपिसूतकंगच्छेत् । इतरन्मृतकंसूतकसमाप्त्यधि कंसूतकेननगच्छतिकिंतु स्वकालेनैव यातीत्यर्थः ॥ कुलप्रयुक्तोयम शौचानिर्णयः ॥ अशौचसंपातयोर्यंनिर्णयः ससर्वोपि शुद्धिविवेकानुसारी ति यत्रदेशेशुद्धिविवेकानुसार्याशौचनिर्णय एवशिष्टपरिगृहीतस्तत्रैतान्निर्ण यानुसारिणाशौचपरिग्रहव्यवस्थाऽऽस्थेया॥ अन्यत्रतुषडशीतिनिर्णयासिं धुपराशरमाधवत्रिंशच्छ्लोकीव्याख्याकरादिकृतैवव्यवस्थातत्तद्ग्रंथेभ्यो ऽवगन्तव्या ॥ अतःस्त्रीणांस्वप्रसवनिमित्तमशौचंप्रतिव्यक्तिविश्रांतत्वाद न्याशौचेन न वाध्यते॥

के मध्यमें और अशौच पडनेमें जो यह निर्णय कीयाहै सो संपूर्ण शुद्धि विवेक के अनु सा रहै इसी कारणते जिस देशमें श्रेष्ठोनें शुद्धिविवेकके अनुसार अशौच का निर्णय ग्रहण कीयाहै तिस देशमें इस निर्णय के अनुसार अशौच की व्यवस्था स्थित करणे योग्यहै ॥ और और देशमें षडशीति और निर्णयसिंधु और पराशर माधव और त्रिंश च्छ्लोकी इनकी व्याख्या के करण वाले जो हैं तिन करके कीती हुई व्यवस्था जानणी ॥ और सो व्यव स्था तिस तिस ग्रंथतें जाण लैणी ॥ इसी कारणतें स्त्रीयों का जन्म निमित्त जो अशौ चहै सो और अशौच करके नहि वाध्या जाता कंचुके एक २ के प्रति कथन करणे तें ॥ अर्थात् सूतक के वाधनेतें और संबंधियों की शुद्धि होतीहै और प्रसूता स्त्रीयोंकी शुद्धि नहि होती ॥

तिसी कारण तें पुत्र के उत्पन्न होयां २ वीस दिन २० और कन्या के उत्पन्न होयां २ एकमास ३० दिन उपरंत स्त्रीको श्राद्धके अन्न पाकादिमें अधिकार होताहै॥जेकर सूतकमें पतिकी मृत्यु होजाये तदपि कथन कीया जो कालहै तिसी कालमें सूतक का अंत जानना॥कुछ और कहतेहैं ॥मातेति कि पहले माताके मृतहोयां २ जेकर अशौचमें पिता मृत होजाये तद पिता के अशौच के शेष दिनों करके शुद्धिहोतीहै और जेकर पिताके मृतहोयां २ पश्चात् माता मृत होजाये तद पिताके अशौचतें आगे एक रात्रि करके शुद्धिहोतीहै॥यह शंखजीने कहाहै॥इसीका स्पष्टअर्थहै ॥कितीन पादोंका अर्थ स्पष्ट है॥और चौथे पादका यह अर्थहै कि पिताके अशौचके मध्यमें माता मृतहोजाये तद पिताके अशौचांततें अधिक माताके अशौच की एक रात्रि अधिककरे तिसमें(अशुद्धौ)इस पदतें क्या कि जेकर पिता अपने आपको मारण वाला होवे अर्थात्

ततश्च पुत्रे जाते विंशतिदिनात् कन्यायांजातायांमासादूर्ध्वंश्राद्धपाकादावधिकारः अत्रांतरापतिमरणेप्युक्तकालएवसूतकांतोवोध्यः ॥ किंच ॥ मातर्य्यग्रेप्रमीतायामशुद्धौम्रियतेपिता पितुःशेषेणशुद्धिःस्यान्मातुःकुर्य्यात्तु पक्षिणीमिति ॥ शंखस्मरणे पादत्रयंस्पष्टंचतुर्थेत्वयमर्थः ॥ पित्राशौचमध्येमातृमृतौपित्राशौचांतेमातुः पक्षिणीमधिकांकुर्य्यादिति ॥ तत्राशुद्धावित्युक्तेः यदिपितात्महत्यादिमान् तदा तदाशौचाभावात् तत्र मातृमरणे न पक्षिणीवृद्धिःकिंतुसंपूर्णमेवमात्रशौचंकार्य्यमितिनिर्णयसिंधुः ॥ पक्षिणीवृद्धिरपि तृतीयदिनादौ प्रथमदिनद्वये न विधेयेत्यपितत्रैवोक्तं किंच सपिंडाशौचेनमातापित्रोरशौचं नापैयाति एवंभर्त्तुरपिवोध्यं इयंपक्षिणीवृद्धिरपि दशमदिनात्प्राङ्मातृमरणेज्ञेया दशम्यांरात्रौतत्प्रभातेवामातृमरणेदिनद्वयेनसहवर्द्धनीयेतिकेचित् ॥

फांसी विषादि करके आप मृतहोजावे॥और ब्रह्म हत्यादि वाला होवे तद उसका अशौच नहि होता ॥तिसमें माताके मरणके विषे एक रात्रि नहि वधाणी क्या करणा कि माताकाहि संपूर्ण अशौच करणा इह निर्णयसिंधुमें कथन कीयाहै॥एक रात्र की जो वृद्धिहैसोभी तीनदिनतें लेकर के जानणी और जेकर प्रथम दो दिनमें मृत होवे तद नहि एक रात्रि की वृद्धि करणी यहभी निर्णय सिंधुमें कहाहै ॥ कुछ और कहतेहैं कि सपिंडोके अशौच करके माता और पिताका अशौच नहि दूरहोता ॥ इसीतरां स्त्रीको औरके अशौचकरके पतिका अशौच दूर नहिहोता और जेकर दशदिनतें पूर्व माता मृतहोवे तद पक्षिणी वृद्धिजानणी ॥ और जेकर दशमी रात्रिमें अथवातिसके प्रभात में माता मृतहोवे तद और तीन दिनोंकरके शुद्धि होतीहै ॥

षडशीति मतमें स्त्रीकोपति साथजानमें विशेष कहाहै ॥ मृतमिति ॥ किमृतहोये पतिकेपीछे जा करस्त्री जदअग्निमें प्रवेश करे अर्थात् साथ अथवाकिसे दिनपीछे दग्ध हो जाये तद तिसमे एकरात्रि अधिक नहिकरणी ॥ और पिताके अशौच दिनोंकी समाप्तिकरकेहि शुद्धिहोतीहै १ ॥ पुत्रेति। तिससती स्त्रीकोपुत्र अथवा औरकोई अग्निकोदेवे सोताबनमात्र अपवित्रहोताहै ॥ अर्थात् स्नानकरके शुद्धहोताहै तिनदोनोंका श्राद्ध और पिंड भिन्न नाकरे अर्थात् इकठ्ठाहिकरे २ ॥ अथविदेश मृतका अशौच कथन करतेहै । तिसमें मनुजीकावचनहै ॥ विगतेति विदेशमें मृत होये सपिंड को जोदश दिन के मध्यमें श्रवण करे तो दशदिनके मध्यमें जितने दिनशेषरहण तितने दिन अशुचिहोताहै ॥ १ ॥ अतिइति जेकर दशदिन बीतजान तद तीन दिन अशौच

सहगमनेविशेषः षडशीतिमते ॥ मृतंपतिमनुव्रज्यपत्नीचेदनलंगता नतत्रपक्षिणीकार्य्यापितृकोदेवशुध्यति ॥ १ ॥ पुत्रोऽन्योवाग्निदस्तस्यास्तावदेवाशुचिस्तयोः नश्राद्धंनचपिंडंचयुगपत्तुसमापयेत् ॥ २ ॥ न श्राद्धंनपृथक्पिंडमिति पाठान्तरम् ॥ तावदेवग्निदानपर्य्यंतमेवसद्यः शौचमित्यर्थः ॥ २ ॥ अथविदेशस्थाशौचं ॥ मनुः ॥ विगतंतुविदेशस्थंशृणुयाद्योह्यनिर्दशम् ॥ यच्छेषंदशरात्रस्यतावदेवाशुचिर्भवेत् १ ॥ अतिक्रांतेदशाहेतुत्रिरात्रमशुचिर्भवेत् सम्वत्सरे व्यतीतेतुस्पृष्ट्वैवापोविशुध्यति २ एकेनदिनेनयतामृतस्यवार्त्तानश्रूयते साहिविदेशः तत्रस्थं अनिर्दशमनतिक्रांतदशाहंविगतंमृतंपित्रादिकंयःपुत्रादिःशृणुयात् सदशरात्रशेषंयावदशुचिर्भवति। विगतमिति जन्मनोप्युपलक्षणम् तथाचबृहस्पतिः अन्यदेशमृतंज्ञातिं श्रुत्वावापुत्रजन्मच ॥ अनिर्गत दशाहेतुशेषाहोभिर्विशुध्यति ॥ १ ॥

होताहै ॥ जेकर वर्षबीतजाये तद जलका स्पर्शकरके अर्थात् आचमनकरके शुद्धिहोतीहै २ ॥ इसीका स्पष्टअर्थहै एकदिन करके जिसमें मृतहोयेकी वार्तान सुणीजाये सो विदेश होताहै ॥ तिसमें मृत होये पिता आदिको जो पुत्रादि दशदिन के मध्यमें श्रवणकरे सोपुत्रादि शेष दिन अशुचि रहताहै ॥ विगत इस पद करके बालकादिका जन्म भीग्रहण करणा ॥ तिसीप्रकार बृहस्पतीजीने भी कथन कीया है ॥ अन्येति कि और देशमें मृतहोये सपिंडीको अथवा पुत्रके जन्मको श्रवण करके और दशदिनके नाव्यतीत होयां होयां शेष दिनो करकेशुद्ध होताहै ॥ १ ॥

और दश दिनके व्यतीत होयां होयां मृत सपिंडीके श्रवणमें तीन रात्र अशौचहै और वर्षके व्यतीत होयां होयां मृत सपिंडीके श्रवणमें स्नान करके शुद्धि होतीहै।।यह शुद्धि भेदतें रहित कथन करणेतें चतुर्वर्णोमे जाननी।।और दश दिनके व्यतीत होयां होयां जन्म निमित्त अशौच नहि होता क्योंकि दश दिनके व्यतीत होयां होयां जन्मका अशौच नहि होता।।इस देवल जीके वचनतें।।दश दिनते उपरंत प्राप्त हुआ जो तीन ३ दिनका अशौचहै तिसमें मनुजी विशेष कहतेहैं।।निरेनि।।किदश दिनके व्यतीत होयां २ सपिंडीके मरणको और पुत्रके जन्मको श्रवण करके।।सहित वस्त्रोंके स्नान करे तो शुद्ध होताहै १ और वृहस्पतीजीका वचन सपिंड मरण परथा और यह सजाति परहै ऐसा विवेकहै।।और दशाहाशौचके व्यतीत होयां २ कर्म्मोकी

दशाहेऽतिक्रांतेव्यतीतेसपिण्डमरणश्रुतौत्रिरात्रमशौचंभवति सम्वत्सरानंतरंसपिण्डमरणश्रवणेस्नानमात्रेणशुद्धिः एतच्चाविशेषेणाभिधानाद्वर्णचतुष्टयविषयम् जन्मनिमित्तमशौचंदशाहातीतेनास्ति॥नाशौचंप्रसवस्यास्तिव्यतीतेषुदिनेष्वपीतिदेवलस्मरणात्॥दशाहानंतरंप्राप्तेत्र्यहाशौचेपिविशेषमाहमनुः निर्दशंज्ञातिमरणंश्रुत्वापुत्रस्यजन्मचसवासाजलमाप्लुत्यशुद्धोभवतिमानवः १ दशाहाशौचव्यपगमेकर्म्मानर्हत्वलक्षणस्यत्र्यहाशौचस्योक्तत्वात्तदंगस्पर्शाविषयम् निर्गतदशाहेसपिण्डमरणेपुत्रजन्मनिचसचैलस्नानानंतरंस्पृश्यताभवतीतिभावः ॥ देशान्तरस्थबालादिमरणेप्येवमित्याहसएव॥बालेदेशांतरस्थेचपृथक्पिण्डेचसंस्थितेसवासाजलमाप्लुत्यसद्यएवविशुध्यति ॥ बालेजातदन्तेमृते जातदन्तेनृणामकृतचूडानामित्येकाहोरात्रविधानाद्देशान्तरस्थसपिण्डमरणाशौचविषयमिदम्

योग्यताहै।।जिसमें एसा जो तीन दिनका अशौचहै तिसको उक्त होणेतें तीन दिनके अशौचमें अंग स्पर्शता होतीहै।।यह भावहै किदश दिनके व्यतीत होयां २ और सपिंडीके मरणमें और पुत्रके जन्ममें समेत वस्त्रोंके स्नानकरणेतें उपरंत अंग स्पर्शता होतीहै ॥ औरदेशमें बालादिके मरण विषे मनुजी कहतेहैं।।कि औरदेशमें सपिंडीबालकके अथवा भिन्नपिंडी बालकके मरणेमें सहित वस्त्रोंके स्नान करके तात्काल शुद्ध होताहै।।बालक ईहां जात दंतां वाला ग्रहणकरणा(जातदंतइत्यादि)यह स्मृतिका सारा वाक्य नहि।।इस श्लोक करके एक दिन रात्र विधान करणेतें औरदेशमें सपिंडीके मरणके अशौचके विषयमेंहै ॥

यह आशय है कि जिस में दशदिन अशौच है तिसमें दश दिन ते उपरंत श्रवण हो तोतीन दिन अशौच है ॥जहां भिन्न पिंडी और समानोदकी हो उसमें तीन रात्र अशौक कहाहै॥ और तिसमें तीन रात्र के व्यतीत होयां२ श्रवण हो तो सहित वस्त्रों के स्नान करके शुद्ध होता है ॥ इसमें कुछविष्णुजी भी कथन करतेहैं ॥ अइति ॥ कितीन पक्षतें उरे अर्थात् पंचताली ४५ दिनतें उरे विदेशमें मृतहोये सपिंडीकोश्रवण करे तदतीनरात्र ॥ और तीनपक्षतें उपरंत और छे महीनेते उरे एकरात्र और छेमासते उपरंत वर्षते उरे एकादिनही अशौच कथन कीयाहै १ और विदेशमें मृतहोये सापिंडी और सोदकों के श्रवण मेंस्नान मात्र अशोच कहाहै ॥ देशांतरका लक्षण बृहस्पती जीने कथन कीयाहै ॥ मेति ॥ कि जिसमें महानदी का

अयंभावः यत्रदशाहा शौंचं तत्रदशाहानंतरं श्रवणे त्र्यहमशौंचं यत्रपृथक्पिंडेसमानोदकात्रिरात्रमुक्तं तत्रत्रिरात्रेऽतीतेश्रवणेसचैलस्नानेनशुद्धिरिति॥ किंच विष्णुः। अर्वाक्त्रिपक्षात्त्रिनिशं षण्मासाच्चदिवानिशम् अहःसंवत्सरादर्वाक्देशांतरमृतेष्वपीति सपिण्डानां सोदकानांदेशांतरमृतानां श्रवणे स्नानमेव ॥ देशांतरलक्षणंबृहस्पतिनाप्रोक्तम्॥ महानद्यंतरंयत्रगिरिर्वाव्यवधायकः वाचोयत्रविभिद्यंते तद्देशांतर मुच्यते ॥ १॥ देशांतरंवदंत्येकेषष्टि योजनमापनं चत्वारिंशद्वदंत्यन्येत्रिंशदन्येतथैवचेति ॥२ ॥ सर्वमिदंमातापितृभिन्नपरम् ।तयोस्तु पितरौचेन्मृतौ स्यातांदूरस्थोपिहि पुत्रकः श्रुत्वातद्दिनमारभ्यदशाहंसूतकंचरेदितिपैठीनसिवचनात्सदा दशाहादि पूर्णमेवाशौंचभवति ॥

व्यवधान हो अथवा किसीपर्वतकाव्यवधानहै ॥ और जिसमें वाणीका व्यवधान होजाये सो देशांतर कथन करीदाहै ॥ १ ॥ देशेति कईपंडित साठ ६० योजन के अंतरालमें अर्थात् दो सौचालीस २४० कोशके छिडेंको देशांतर कथन करतेहैं ॥ और और मुनिःचालीस ४० योजनके छिडें में और और कई तीस ३० योजनके छिडें में देशांतर कथन करतेहैं॥२॥यह सभ मातापितातें भिन्नविषयमें जानना॥और माता पिताके विषयमें॥ पितेति माता और पिता मृतहोजाये तद दूरमें भीस्थित होवें पुत्र तद भी श्रवण करके श्रवण दिनतें लेकर दशदिन सूतक करे॥इस पैठीनासि के वचनतें सदा दशदिनादि संपूर्ण अशौचहोताहै ॥

एहि वार्तास्मृत्यर्थसार में कथन कीताहै ॥ मातेति किमाता और पिता दूरदेशमें भी मृत होन और वर्ष भी व्यतीत होजाए तदभी पुत्र दशाहादि सूतककरे ॥ इसी प्रकार स्त्री और पुरुष को भी योग्यहै अर्थात् स्त्री मृतको श्रवण करके पति और पति मृत होयेको श्रवण करके स्त्री दशाहादि अशौच को करेऔर तुल्य वर्णकीयोंमें अथवा उत्तम वर्णकीयों सपत्नीयोंमें भी इसी प्रकार जानना अर्थात् तुल्य वर्ण वाली अथवा उत्तम वर्णकी साकण मृत होई कोश्रवणकरके साकण दशाहादि अशौचकरे यहनिर्णय सिंधुमें कथन कीआहै ॥ माताकी साकणके विषयमें दक्षजी कथन करतेहैं ॥ पित्रिति ॥ माताके विना पिताकी स्त्री को विदेशमें मृतहोयां होयां और वर्षके व्यतीत होयां होयां भी पुत्र तीन रात्र अशौच करे ॥ इसी प्रकार हीन वर्णकी मातामें और हीनवर्ण कीयां साकणामें जानना यह स्मृत्यर्थसारमें कथन की

इदमेवस्मृत्यर्थसारे ॥ मातापितृमरणेतुदूरदेशेपि संवत्सरोर्ध्वमपिपुत्रोदशाहादिकंकुर्य्यात् ॥ स्त्रीपुंसयोः परस्परंसवर्णोत्तमवर्णसपत्नीषुचैवमिति निर्णयसिंधुः ॥ सपत्नमातृविषये दक्षः ॥ पितृपत्न्यामपेतायां मातृवर्ज्यं द्विजोत्तमः संवत्सरेव्यतीतेपित्रिरात्रमशुचिर्भवेदिति ॥ अपेतायां देशांतरे मृतायाम् ॥ हीनवर्णमातृषुहीनवर्णसपत्नीषुचैवमितिस्मृत्यर्थसारे ॥ और सपुत्रष्येवमिति केचित् । तथाचब्राह्म्यम् ॥ पितृपत्न्यांप्रमीतायामौरसेतनयेतथेति एतच्चसर्ववर्णसाधारणम् ॥ तुल्यंवयसिसर्वेषामतिक्रांतेतथैव चेति व्याघ्रस्मरणात् ॥ वयसिबालविषयेअतिक्रांते देशांतरवशादशौचकालेव्यतीते सर्वेषांवर्णानांतदुक्तमशौचंतुल्यमेव इतिविदेशस्थाशौचम् ॥

याहै ॥ इसी प्रकार अपनी स्त्रीमें उत्पन्न होयाजो पुत्रहै तिसके मृतहोयां भी इसी प्रकार करणा यह भी कैई कथन करतेहैं॥तिसी प्रकार ब्राह्म्यमें क्या ब्रह्मपुराणमें भी कथन कीयाहै॥ पित्रिति कि पिताकी स्त्री और अपना पुत्र इनके मृतहोयां होयां दशाहादि अशौच करे इति और यह सब वर्णोंको तुल्य जानना ॥ क्युंके बालकमें और दशाहादि मरणा शौचके व्यतीत होयां २ सभना वर्णाको ) बराबरहि अशौच हुंदाहै इस व्याघ्रजीके वचनतें ॥ इसका स्पष्ट अर्थहै ॥ ( वयसि ) क्या बाल्यावस्था विषे ( अतिक्रांते ) क्यादेशांतरके वशतें अशौच कालके व्यतीत होयां २ सर्ववर्णोंको पूर्व कथन कीआजो अशौचहै सो तुल्य होताहै ॥ यहविदेशीका अशौच समाप्त हुआ ॥

संकर अशौचमे जहांपूर्वले अशौच करके शुद्धि कथन कीतीहै तिसका अपवाद षडशीतिमेक हाहैं ॥ पूर्वेति॥किपूर्वले अशौच करके जो शुद्धि सूतकमे और मरणमें कहीहै सो प्रसूतास्त्री और शवके दाहकरण वाले और मृतपुरुषके पुत्र इन्हाको त्याग करके जाननी अर्थात् पूर्वलेअशौच करके होरणा संबंधीआंकीशुद्धि होतीहै ॥ और इनकी शुद्धि नहि होती ॥ १ यह स्मृतिसंग्रहमें कथन कीयाहै । इयमिति ॥ प्रसूता स्त्री और शवके दाह करण वाला इनते विनायह शुद्धि कथन कीतीहै (अग्निदः) किजोपुरुष मजूरी लेकर शवको दाह करे॥ और मातुलादि संबंध करके दाह करनेमें तीन रात्र अशौच होताहै॥यही अशौच वृद्धात्रि जीने कहाहै ॥ सूतेति॥जन्म निमित अशौचतें मरणाशौच दूणा होताहै और शावतें दूणा ऋतुसंबंधी होताहै और ऋतुतें दूणा प्रसूता स्त्री का होताहै और सूतिते दूणा शवके दाह करण वाले को होताहै ॥ कुछ और कथन करतेहैं। क्या किसी स्थानमें अशौच के शंकरमें भी तिस निमित प्रतिबंधक नहि होता ॥ अशोच इति ॥ शावाशौच के होयां २ जेकर पुत्रका जन्म होवे तद कर्म्म के करण वाले को तिसकालमें शुद्धि होतीहैं। अर्थात् तिसकालमेंकर्मोका अधिकार होताहै और सो शुद्धिपूर्वले अशौच करके होतीहैं अर्थात् पुत्र जन्म निमितदानादि करणे॥ शाता तपजी कहतेहैं अतेति ॥ कि दश दिनके मध्यमें सूतकके विषे पश्चात् जेकर कोई मृतहोजाये तद विधि पूर्वक प्रेतके निमित्त पिंडदान करणे योग्यहै ॥१॥ प्रारेति॥ प्रेतपिंडके आरंभमें अर्थात् किसेके मृतहोयांहोयां जेकर जन्मनिमित्त अशौच पड जाये अर्थात् कोई उत्पन्न होपवे तदजिस प्रकार पहले पिंड देताथा तिसी प्रकार बाकीकें पिंड विधि पूर्वक देतारहें तिनको ॥ २ ॥

षडशीत्यांपूर्वाशौचापवादउक्तः ॥ पूर्वाशौचेनयाशुद्धिः सूतकेमृतकेचसासूतिकामग्निदंहित्वाप्रेतस्यचसुतानपि ॥ १ । स्मृतिसंग्रहे इयंविशुद्धिरुदितासूतिकामग्निदंविना अग्निदात्रमूल्येनशवदाहकः मातुलादिसंबंधेनदाहकरणेत्रिरात्रम् एतदशौचमाहवृद्धात्रिः सूतकाद्द्विगुणंशावंशावाद्द्विगुणमार्त्तवम्आर्त्तवाद्द्विगुणासूतिस्ततोपिशवदाहकः किंचाशौचसंपातेपिनतन्निमित्तंकचित्प्रतिबन्धः अशौचेतुसमुत्पन्ने पुत्रजन्मयदाभवेत्कर्त्तुस्तात्कालिकीशुद्धिः पूर्वाशौचेनशुद्ध्यतीति शातातपः॥ अंतर्दशाहेजननात्पश्चात्स्यान्मरणंयदि प्रेतमुद्दिश्यकर्त्तव्यंपिंडदानंयथाविधि १ प्रारब्धेप्रेतपिंडेतुमध्येचेज्जननंभवेत् तथैवाशौचपिंडांस्तुशेषान्दद्याद्यथाविधि ॥ २ ॥

यह जो कथन कीयाहै कि पिताके मृत होयां २ दश दिन में जेकर माता मृत होजाये तद एक रात्र अशौच करे ॥ इसमें कथन करतेहैं ॥ माताकि एक रात्रिमें भी पिताके एकादशाह को करे । क्युंके यारमे ११ दिनमें अशौच भी होवे तदपि आदले श्राद्धको करे ॥ इस वचन तें । यह वचन क्षत्रि आदिमें जानना ॥ यह कोई कथन करतेहैं । दशेति । दशमे दिन १० पिंडको दे करके रात्रि शेषमें शुद्ध होताहै । इस विज्ञाने श्वर के वचनतें ब्राह्मणको अशौच के अंतहिं एकादश ११ दिनहै ॥ कुछ और कथन करतेहैं कूर्म पुराण में लिखाहै ॥ नैष्टीति नैष्ठक ब्रह्मचारी वोह होताहै कि जो जीवन पर्यंत गुरुके कुलमें व्रत करके निवास करे ॥ वानप्रस्थी सन्यासी और ब्रह्मचारी इनको किसे संबंधीके मृत होयां २ और पतित होयां २ पति

मातुः पक्षिणीमध्येपितुरेकादशाहंकुर्य्यात् आद्यंश्राद्धमशुद्धोपिकुर्य्यादेकादशेहनीतिस्मरणात् क्षत्रियादिपरमिदमितिकेचित् दशमंपिंडमुत्सृज्यरात्रिशेषेशुचिर्भवेदितिविज्ञानेश्वरवचनाद्विप्रस्याशौचांतएवैकादशाहः॥ किंचकौर्म्मे नैष्ठिकानांवनस्थानांयतीनांब्रह्मचारिणाम् नाशौचंकीर्त्तितंसद्भिःपतितेचमृतेतथेति अंत्यपादेशावेवापितथैवचेतिस्मृत्यंतरपाठः ॥ अत्राशौचपदंअंत्यकर्म्मोपलक्षणम् ॥ ब्रह्मचारीनकुर्वीतशवदाहादिकांक्रियाम् यदिकुर्य्याच्चरेत्कृच्छ्रंपुनःसंस्कारमेवचेतिदेवलवचनात् पित्रादिभिन्नपरमिदम् तथाचमनुः आचार्य्यंस्वमुपाध्यायंमातरंपितरंगुरुंनिर्हृत्यतुव्रती। प्रेतंनव्रतेनवियुज्यते ॥ १ ॥

त वोह होताहे यो अपने धर्मते विचल होजाये॥इनकरके श्रेष्ठोंनें अशौच कथन नहि कीआ॥(पतितेचमृतेतथा ) इस स्थानेंमे ( शावेवापितथैवच ) यहभीपाठ होताहै ॥ इस श्लोकमें ) अशौच ) इस पद करके सपिंडी क्रिया काभी ग्रहण करणा ॥ क्युंके ब्रह्मेति । ब्रह्मचारी शवकी दहादि क्रिया ना करे और जेकर दाहादि क्रिया करे तद कृच्छ्र व्रत को करके पीछे संस्कार को फेर करे । इस देवल जीके वचनतें ॥ यह वचन पिता माता इत्यादिमें नहि जानना ॥ तिसी प्रकार मनु जीभी कथन करतेहैं ॥ आचेति ॥ पुरोहित और विद्यागुरु और माता पिता और गुरु इन प्रेतोंको उठाणे और सपिंडी कर्म करने करके ब्रह्मचारी व्रततें रहित नहि होता अर्थात् तिस ब्रह्मचारी का व्रत दूर नहि होताहै॥

इसी प्रकार मृत नाने के उठाणे में भी भविष्य पुराण का वचनहै ॥ यथेति ॥ कि जिस प्रकार ब्रह्मचारि भी पुत्र पिता की क्रिया करे ॥ तिसप्रकार हे राजन् नानेकी क्रिया करने कों दौहित्र योग्यहै ॥ १ ॥ काला दर्शमें भी ऐसा लिखाहै ॥ इसमें दाह क्रिया निमित्त यो अस्पृश्य ताहै सो दश दिन पर्यन्त जाननी ॥ क्युंके ॥ सइति ॥ हेमित्र सगोत्री वा भिन्न गोत्री जो पुरुष शवको दाह करे सोभी शुद्ध दश दिनमें होताहै और नव ९ श्राद्धां कोभी करे ॥ इस दिवोदास के वचनतें ॥ और कहतेहैं । नित्येति पित्रादिको दाह करके ब्रह्मचारीके नित्य कर्मका भी लोप नहिं होता अर्थात् नित्य कर्मो को छोड न देवे किंतु करता रहे ॥ यह छांदोग परिशिष्ट उप निषदमें कथन कीयाहै ॥ और स्थानमें भी कहाहै ॥ नेति । कि ब्रह्मचारी सूतकमें अपने

व्रतीब्रह्मचारी ॥ निर्हरणमत्रान्त्यकर्मणोप्युपलक्षणम् ॥ एवंमातामहनिर्हरणेपिभविष्यवचनम् । यथाव्रतस्थोपिसुतःपितुःकुर्य्यात्क्रियांनृप तथामातामहस्यापिदौहित्रः कर्त्तुमर्हतीति कालादर्शेप्येवं अत्रांत्यकर्म्मनिमित्तमस्पृश्यत्वं दशाहावध्येव सगोत्रोवाऽसगोत्रोवायोग्निंदद्यात्सखेनरःसोपिकुर्य्यान्नवश्राद्धान् शुद्धेतुदशमेहनीतिदिवोदासवचनात् ॥ अपिच नित्यकर्म्मलोपोपिनब्रह्मचारिणइतिछांदोगपारिशिष्टे ॥यथा नत्यजेत्सूतकेकर्म्मब्रह्मचारीस्वयंक्वचिदिति। संवर्त्तः पित्रोर्गुरोर्विपत्तौतुब्रह्मचार्य्यपियःसुतःसव्रतश्चापिकुर्वीतअग्निपिंडोदकक्रियाम् १ ॥ तेनाशौचंनकर्त्तव्यंसंध्याचैवनलुप्यते अग्निकार्य्यंचकर्त्तव्यंसायंप्रातश्चानित्यशः २ ॥ इति अत्रायमशौचाभावः कर्म्माधिकारपरोनस्पृश्यतापरःपूर्वोक्तवचनात् केचित्त्वेकाहमशौचमाहुः॥

कर्मोंके कदेभी त्याग ना करे ॥ इस वचनतें ॥ इसीमें संवर्त्तजीभी कहतेहैं ॥ माता और पिता और गुरु इनके मृत होयां २ ब्रह्मचारी भी जो पुत्रहै सो सहित व्रत के अग्नि और पिंडोदक क्रियाकों करे ॥ १ ॥ तेनेति ॥ और तिस पुत्र ने अशौच नहि करने योग्यहै ॥ और तिसके संध्या कर्मका लोप नहि होता अर्थात् संध्या को करे ॥ और सायंकाल और प्राता काल में नित्य ही अग्निमें हवन करे ॥ २ ॥ इति इस वाक्यमें यह जो अशोचाभावहै सो कर्माधिकार पर जानना और अस्पृश्यता पर नाहि जानना अर्थात् कर्मो के करणे में उसको अधिकार है और अस्पृश्य उसकी नहि दूर होतीहै ॥ क्योंकि पूर्वले वचनतें ॥ कोई एकादिन तिसको अशौच कहतेहैं ॥

उँश्रीगणेशायनमः श्रीमच्छ्रीरणवीरसिंह महाराजजीकाजोवचन रूपअमृत तिसकों कर्णोंके द्वारा पान करके आनंदके समूह करके युक्त भये जो गंगारामादि पंडित लोक तिनोंनें बहुत पुराणोंका समूह देख करके परिशिष्ट प्रकरण किआहै॥पुराणोंका मत लिखने करके और स्मृतियों सें किसी किसी स्थानमें विलक्षण होणेतें परिशिष्ट इस प्रकरणका नाम कीया॥१॥प्रथम विष्णु धर्मोत्तरमें भार्गवजीपुष्करकों कहते भये। प्रायश्चित्तकों नहि कर्त्ते जो पापी तिनकों राजा दंड करे तिस कारणतें हे पुष्करमेरेकों प्रायश्चित्तविधान कथनकरो १ पुष्करकहिताहै हेभार्गव पंडित लोकजोहैं विनाकामनाकर किया जो पाप तिसका प्रायश्चित्त कहितेहैं॥ और कामनाकर किया यो पाप तिसकावी प्रायश्चित्तकहितेहैं एह मेरेकों श्रुति प्रमाणहोंणेसे अनुमतहै२प्रायश्चित्तैरिति मनुष्योंने कियाजोपापहै सो प्रायश्चित्तोंकर्केदूरहो जाताहै इसवातमें संशयनाहिंहै। उौर योमनुष्य

उँश्रीगणेशायनमः रणवीरसुभूपतिवाक्यसुधाचमनादनुसंभृतमोदभरैः अवलोक्यपुराणचयंबहुधाक्रियतेपरिशिष्टमिदंविबुधैः॥१॥परिशिष्टत्वंचास्यकेवलपौराणिकत्वं संक्षिप्तत्वंवा। विष्णुधर्म्मोत्तरेत्रिसप्ततितमेऽध्याये प्रायश्चित्तविधिःभार्गवउवाच कुर्याद्दण्डप्रणयनंप्रायश्चित्तमकुर्वताम् नृणांराजाततोब्रूहिप्रायश्चित्तविधिंमम १ पुष्करउवाच अकामतःकृतेपापे प्रायश्चित्तंविदुर्बुधाः॥२॥ कामचारकृतेप्येतन्मतंमेश्रुतिदर्शनात्। प्रायश्चित्तैः शमंयातिपापंकृतमसंशयं॥३॥ राजदण्डात्क्षयंयातिप्रायश्चित्तमकुर्वताम् प्रायश्चित्तविहीनायेराजभिश्चाप्यवासिताः।४।राजभिश्चाप्यवाधिताइति पाठांतरम् तत्रअवाधिताअदंडिताइत्यर्थः नरकंप्रतिपद्यंतेतिर्यग्योनिंतथैवच मानुष्यमपिचासाद्यभवंतीहतथांकिताः ५ अंकितास्तप्तमुद्रादिचिह्निताः॥ सशूद्रवद्वहिःकार्यःसर्वस्माद्द्विजकर्मणइत्यादिनातदाचारस्यानिपिद्धत्वादितिकेचित्अंकिताःश्यावदंतत्वादिनालक्षिता इत्यन्ये॥ ५॥

प्रायश्चित्तोंकों नहिकर्त्ते। तिनका पाप राजाकेदंडदेणेतें दूरहोताहै॥३॥और योमनुष्य प्रायश्चित्तो कर्के रहितहैं अर्थात् पापकोंकर्के प्रायश्चित्तको नहि करते सोराजाकर्के वाहर निकासदीये जातेहैं ४ तवभी मरकर्के नरककों प्राप्तहोतेहैं और जिसवखत नरककों भोगरहितेहैं तवतिर्यक् योनि योहै पशु ० अर पक्षी इनकों प्राप्तहोते हैं और मनुष्य योनिकोंभी प्राप्त होय कर्के अंकितकथाश्यामदंतादि कर्के लक्षित होतेहैं अथवा अंकितकथातप्तमुद्रादियोंहैं तिनों कर्के चिन्हितहोतेहैं५इसमेंकितनेऋषि इसप्रकारकहितेहैं जोमनुष्य तप्तमुद्रादेहमेंधारताहै सो संपूर्ण जो द्विजकर्महै तिसतें शूद्रकी न्यांइ वहिः कार्यहै॥अर्थात् दूरकरदेणे योग्यहै इत्यादि कर्के तिनके तप्तमुद्रा धारणवालयोंकेआचारकों निषिद्ध होणेतें एह कितनें कहितेहैं॥ ५॥

इसतें पापके दूर कर्णे के निमित्त प्रायश्चित्तकरणे योग्यहै ॥ एहहि प्रायश्चित्त विधान कूर्म पुराणके उत्तरीयें २१ अध्यायमें किहाहै ॥ अब इसतें उपरंत प्रायश्चित्तकी सुंदरयो विधि सोमैं कहताहां संपूर्ण ब्राह्मणोंके हितके वास्ते उर दोषयोहैं पाप तिनके दूर करणे वास्ते ॥ १ ॥ अकृत्वेति विहित यो कर्म हैं क्या यो यो कर्म जिसकों करणा किहा है तिस २ कों नाहीं करणे कर्के उर निंदित योकर्महैं तिनके करणे करके मनुष्य दोषकों प्राप्त होताहै तिस दोषके शुद्ध करणे वाला प्रायश्चित्तहै २ प्रायश्चित्तमिति पापकों करके प्रायश्चित्त किये विना ब्राह्मण किसीस्थानमें भी नाहीं स्थितहोवे और ब्राह्मणयोहैं शांत चित्त और पंडित एहयोकहैं सोकरे ३ साग्निक उर अच्छा प्रकार वेदार्थके जानणे वाला और शांत चित्त और

प्रायश्चित्तमतःकार्य्यंकल्मषस्यापनुत्तये ॥ कूर्मपुराणेऊनत्रिंशत्तमेध्याये अतः परंप्रवक्ष्यामि प्रायश्चित्तविधिंशुभं हितायसर्वविप्राणांदोषाणामपनुत्तये ॥ १ ॥ अकृत्वाविहितंकर्मकृत्वानिंदितमेवच दोषमाप्नोतिपुरुषः प्रायश्चित्तंविशोधनम् ॥ २ ॥ प्रायश्चित्तमकृत्वातुनतिष्ठेद्ब्राह्मणःक्वचित् यद्ब्रूयुर्ब्राह्मणाः शांताविद्वांसस्तत्समाचरेत् ॥ ३ ॥ वेदार्थवित्तमः शांतो धर्मकामाग्निमान्द्विजः सएवस्यात्परोधर्मोयमेकोपिव्यवस्यति । ४ । अनाहिताग्नयोविप्रास्त्रयोवेदार्थपारगाःयद्ब्रूयुर्धर्म्मकामास्तेतद्ज्ञेयंधर्मशोधनम् ५ अनेकधर्मशास्त्रज्ञाऊहापोहविशारदाः वेदाध्ययनसंपन्नाःसप्तैते परिकीर्त्तिताः ६ मीमांसान्यायतत्त्वज्ञावेदांतकुशलाद्विजाःएकविंशतिसंख्याताःप्रायश्चित्तंवदंतिवैइति ७

धर्ममें इच्छा जिसकी ऐसा एकभी ब्राह्मण योनिश्चयकर कहे सो यी परम धर्महै ४ अनाहिताग्नि योहैं निरग्निक तीनब्राह्मण और वेदके अर्थों कों जाणने वाले और धर्मकामाः एह यो प्रायश्चित्तकहैं सोसुंदर धर्म जानणे योग्यहै ५ अनेकेति अनेकक्या वहुत धर्मशास्त्रके ग्रंथोंकों जानणे वाले योहैं और ऊहापोह योहैं शास्त्रकाविचार इसमें चतुर यों ब्राह्मण उर वेदों का यो पडना उसकर्के योपूर्णहैं सो प्रायश्चित्तके कहणे वाले सात ७ कहेहैं ६ मीमांसेति मीमांसा और न्याय तत्त्वके जानणे वाले और वेदांतमें चतुर यो ब्राह्मणहैं सो ऐसे इकी २१ ब्राह्मण प्रायश्चित्तके कहने वाले कहेहैं ॥ ७ ॥

नारदीयपुराणके तीसमे ३० अध्यायमें सनत्कुमारजी नारदकों कहितेहैं हेनारद अवतेरेकों प्रायश्चित्तका विधान कहितेहैं सोतूं श्रवणकर प्रायश्चित्तकरणेकर विशुद्धमन जिसका ऐसा योमनुष्य सोसंपूर्ण कर्मफलकोंप्राप्तहोताहै १ और हेनारद प्रायश्चित्तों कर्के रहितयोहैं तिनोंने योकर्म किया सोसंपूर्ण निष्फल किहाहै सोकर्मराक्षसों कर्के परिसेवितहोताहै २ कामेति इसतेंकाम अरु क्रोधकर्के हीनयोहैं और धर्मशास्त्रमें चतुरयोहैं और संपूर्णधर्मफलकी इच्छावालेयोमनुष्यतिनोंनें धर्मकों ब्राह्मणपूछने योग्यहैं किक्या करणे कर्के पाप दूरहोताहै और केसेंधर्महोताहै ३ प्रायश्चित्तानीति नारायणतें पराङ्मुखयोहैं मनुष्य तिसनेकिये योप्रायश्चित्तहैंसोतिसकों पवित्र नहिंकर्ते केसें जिसप्रकार नदिआं सरावके पात्रकों नाहिपवित्रकरसकतियां ४ और प्राय

नारदीयपुराणेत्रिंशत्तमेध्याये॥ सनकउवाच प्रायश्चित्तविधिंवक्ष्येशृणुनारदसांप्रतम् प्रायश्चित्तविशुद्धात्मासर्वकर्मफलंलभेत् १ प्रायश्चित्तविहीनैस्तुयत्कर्म्मक्रियतेमुने तत्सर्वंनिष्फलंप्रोक्तंराक्षसैःपरिसेवितम् २ कामक्रोधविहीनैश्चधर्मशास्त्रविशारदैःप्रष्टव्याब्राह्मणाधर्मंसर्वधर्मफलेप्सुभिः ३ प्रायश्चित्तानिचीर्णानिनारायणपराङ्मुखं ननिष्पुनन्तिविप्रेंद्रसुराभांडमिवापगाः४प्रायश्चित्तमपिधर्मशास्त्रावलोकनपूर्वकथितव्यमन्यथादोषस्तत्रैव अश्रौतस्मार्त्तविहितंप्रायश्चित्तंवदंतियेतान्धर्म्मविघ्नकर्त्तॄंश्चराजादंडेनपीडयेत् १ नचैतान्पीडयेद्राजाकथंचित्काममोहितः तत्पापंशतधाभूत्वातमेवपरिसर्प्पति २ प्रायश्चित्तेततश्चीर्णेकुर्याद्ब्राह्मणभोजनम् विंशतिर्गावृषंचैकं दद्यात्तेषांचदक्षिणाम् ३ प्रायश्चित्तमत्र पापिनेदातव्यं यत्तदेवकार्यं विप्रभोजनमधिकंदक्षिणाचप्रत्येकंदातव्या ॥

श्चित्तबी धर्मशास्त्र देखकर्के कहनेयोग्यहै और योमनुष्य धर्मशास्त्रके जानणे विना प्रायश्चित्त कहितेहैं तिनकों प्रायश्चित्त तिसीस्थानमें किहाहै ॥ अश्रौतेति वेद और स्मृतियां इनों कर्के नाहि किहा योधर्म उसकों योकहितेहैं सोयोधर्महंताहै तिनकोंराजादंडदेवे १ योकदाचित् उनकों राजा दंडनदेवे कामकर्के मोहितहुआ २ तबउनका पापशत १००प्रकारकयासी १०० प्रकारहोयकर्के राजाकोंप्राप्तहोताहै २ और प्रायश्चित्तकर्केपीछे ब्राह्मणोंकों भोजनदेवे और वीस२० गौआं और एकवृषभ दक्षिणादेवे ३ इसमें प्रायश्चित्त पापीके तांई यो कहाहै सोई करणेयोग्यहै परंतुब्राह्मण भोजन और दक्षिणा एह अधिक एक एक ब्राह्मणके तांई देणे योग्यहै ॥

इसप्रकरणमें प्राथमिकपापगणनाकी अपेक्षाकर्के क्रमकी विलक्षणताहै सोई कहितेहैं उपपातक १ महापातक २ जाति भ्रंशकरादि प्रकीर्णकांत ५ और रहस्य एह क्रमकर्के लिखेहैन तिनमें भी संपूर्ण कार्योंमें भोजनको प्रथमोपस्थितहोणेतें अर्थात् भोजनके अधीनाहिं संपूर्ण कार्यहैं तिसके व्यवस्थापनकेवास्ते पाहिले अभोज्यान्नयोहैं जिनकाअन्न नाहि भोजनकरणे योग्य सोदिखाईदेहैंन ॥ इसमे इसप्रकारआकांक्षाकापूरणहै बहुतवाराकिये योउपपातकसोमहापातकों के बराबरहैं इसते महापातकोंतें पाहिले उपपातककहेहैं फेरतिसतें उपरंत महापापियोंको जाति बाह्यता स्मरणकर्के महापापियोंका वर्णनहै पुनःतिसतें उपरंत लघूनांस्मरणं पश्चादिति न्यायेन छोटे योपापहैं तिनका स्मरण पीछे होताहै इसन्यायकर्के प्रकीर्णकपापकहेहैं फेर रहस्य योपाप

अत्रप्रकरणेप्राथमिकपापगणनापेक्षयाक्रमवैलक्षण्यम् तथाच उपपातक महापातक जातिभ्रंशकरादिप्रकीर्णकरहस्यानिक्रमतोलिखितानि तत्रापि सर्वकार्येषुभोजनस्यप्रथमोपस्थितत्वात्तद्व्यवस्थापनायप्रथममभो ज्यान्नाः प्रदर्श्यन्ते अत्रेत्थमाकांक्षापूरणं अभ्यस्तान्युपपातकानिमहापातकतुल्या निजायन्तेऽतस्तेभ्यःप्राक्तदुपक्षेपः ततश्चमहापापिनांजातिबाह्यतास्मरणे न तदनन्तरंतदुपक्षेपस्तदनंतरं लघूनांस्मरणंपश्चादितिन्यायेनप्रकीर्णकं ततोरहस्यस्यसर्वशेषित्वेननिबंधइति विद्वद्विज्ञप्तिप्रपंचः ॥ अभोज्यान्नावि ष्णुधर्म्मोत्तरे मत्तक्रुद्धातुराणांचनभुंजीतकदाचन तथैवाहूवयकस्यान्नपदा स्पृष्टंचकामतः १ आहूवयकस्याहूवानवृत्त्याजीवतः। महापातकिनास्पृष्टम वलीढंपतत्रिणा ऋजीपपक्वयच्चान्नंस्पृष्टंयच्चाप्युदक्यया २ गणान्नंगणि कान्नंचविदुषाचजुगुप्सितं स्तेनस्यचैवक्षीणस्यवार्धुषेर्गायनस्यच ३ अभिशस्तस्यशंढस्यपुंश्चल्यादांभिकस्यच चिकित्सकस्यमृगयोःक्रूरस्यो च्छिष्टभोजिनः ४

हैं तिनको संपूर्णोंके पीछे किहाहै एहइसप्रकरणमें विद्वानोंकी विज्ञप्तिका प्रपंचहै विष्णुधर्म्ममें किहाहै मत्तेति ॥ मत्तयेहैं उन्मत्त और क्रोधी और आव्हानके करणेवाले तिनका और पैरकर्के स्पर्श किया इच्छाकर्के यो अन्नहै तिसकोंनाहिं भोजनकरे १ महेति महापातकीकर्के स्पर्शाकिया योअन्न और पक्षीकर्के जूठाकियायो अन्न और केवल तवे कर्के भुज्जा जो अन्न रजस्वला कर्के स्पर्श कियायो अन्न २ और सभकासांझा अन्न और वेश्याका अन्न और विद्वान् कर्के निंदित जोअन्न और चोरकायोअन्न और क्षीण क्या अतिदरिद्री अन्यायकर्के जीविका करण वाला व्याजलैणे वाला और गायनकर्के जीविका कर्णे वाला ३ और शापित और नपुंसक और व्यभिचारिणी और दांभिक और वैद्य और मृगोंके मारणवाला लुब्धक और क्रूर और जूठा खाणे वाला ४ ॥

और अनर्चित वृथामांस और जिसस्त्रीका स्वामि अर पुत्र नहिहै तिसका अन्न और शत्रुकाअन्न दासका अन्न और उग्रका अन्न और खोटे नेत्रोंवालेका अन्न ५ और चुगल और झूठबोलणेवाला और अस्त्र शस्त्रोंके बेचनेवाला और धोबा और नृशंस और जिसके घरमें उपपतिहै तिसका अन्न ६ नटका अन्न याचकका अन्न कृतघ्नका अन्न परि वित्तीका अन्न और दुष्टका अन्न और वंदीका अन्न और धूर्तका अन्न ७ कुंडोति पिताके जीवते जारते जन्मया जो पुत्र तिसका नाम कुंडहै और पिताके मरे पीछे जन्मयायोहै तिसका नाम गोलकहै॥ तिनका अन्न औरस्त्री जितजोहै स्त्रीके वश वर्त्ती तिसका अन्न और कर्मारयोहै जाति विशेष अथवा लोहकार तिसका अन्न और निषादका अन्न और नटुएका ललारीका अन्न ८ और स्वर्ण कारका अन्न और वैद्यका अन्न और धोबेका अन्न झूठा संन्यास धारा जिसनें तिसका अन्न और

अनर्चितंवृथामांसमवीरायाश्चयोषितः द्विषदन्नंचदासान्नमुग्रान्नंचाप्यचाक्षुषम् ५ पिशुनानृतिनोश्चान्नमस्त्रविक्रयकस्यच रजकस्यनृशंसस्ययस्यचोपपतिर्गृहे ६ शैलूषान्नंयाचकान्नंकृतघ्नस्यान्नमेवच परिवित्तेश्चदुष्टस्यवंदिनःकितवस्यच ७ कुंडगोलकयोश्चैवस्त्रीजितस्यतथैवच कर्मारस्यनिषादस्यरंगावतरणस्यच ८ सुवर्णकर्तृवैद्यस्यचैलनिर्णेजकस्यच मिथ्याप्रव्रजितस्यान्नंतैलिकस्यतथैवच ९ तथैववृषलस्यान्नंब्राह्मणेनानिमंत्रितम् एषामन्यतमस्यान्नंसमश्नित्वात्र्यहंक्षिपेत् १० मत्याभुक्ताचरेत्कृच्छ्रंरेतोविण्मूत्रमेवच महापातकयुक्तस्यसूतिकस्यतथैवच ११ भुक्तान्नंचर्म्मकारस्यमत्याकृच्छ्रंचरेद्द्विजः चांडालश्वपचान्नंचभुक्ताचांद्रायणंचरेत् १२ अंतश्चतुर्थीप्रेतान्नं गवाघ्रातंतथैवच शूद्रोच्छिष्टंगुरूच्छिष्टंसूतिकान्नंतथैवच १३

तेलीका अन्न ९ और शूद्रका अन्न और ब्राह्मण कर्के नहिं निमंत्रिण कियायो अन्न एहयो संपूर्ण कहेहैं इनके वीचमें एककाभी अन्न भोजन कर्के तीन दिन निरा हार व्रत करे १० और जाणकर्के बुद्धि पूर्वक वीर्य्य विष्टा मूत्र इनकों भोजन कर प्राजापत्य व्रत करे और जाण कर्के महापातक कर्के युक्तयोहै और सूतकीयोहै ११ और चर्म्म कार जोहै इनके अन्नकों द्विज भोजनकरे तव कृच्छ्र व्रतकों करे चांडाल और श्वपच क्या कुत्तेको भोजन करणे वाला इनके अन्नकों भोजन कर्के चांद्रायण व्रतकों करे १२ अंतश्चतुर्थी योप्रेतान्नहै अर्थात् मृतके चार दिनके अंदर जो अन्न और गवा घ्रातक्या गोकर्के सिंगआयो अन्न और शूद्रका उच्छिष्टयो अन्न और गुरोंका उच्छिष्ट यो अन्न और तिसी प्रकार सूतिका स्त्रीका यो अन्न ॥ १३ ॥

इनकों भोजनकर्के तिसपापके दूरकर्णेके निमित्त तप्तकृच्छ्रव्रत कोंकरे और ब्राह्मणके सूतकमें द्विजभोजनकरे तद सांतपनव्रतकोंकरे १४ और जब क्षत्रियोंके सूतकमें भोजनकरे तब कृच्छ्रव्रत योप्राजापत्य तिसकोंकरे और वैश्योंके सूतकमें ब्राह्मण भोजनकरे तब तप्त कृच्छ्रव्रतकरे ॥ १५ और शूद्रके सूतकमें ब्राह्मणभोजनकरे तव चांद्रायण व्रतको करे योंजिसके सूतकमें भोजनकर्त्ता है जितना पर्यंत उसको सूतकहै इतना काल भोजन करणेवाला अपवित्रहोताहै । हेराम इत नाचिर उसकों सूतक कहाहै ॥ १६ ॥ तस्येति ॥ योंजिसकें सूतकमें भोजनकरे जब उसका सूतक दूरहोजावे अर्थात् वितीत जावे तव ओहो भोजन करणे वाला प्रायश्चित्तकोंकरे आप णेतें श्रेष्ठके सूतकमें भोजन करे तब एक दिन भोजन नहिंकरे अर्थात् प्रायश्चित्तके निमित्त एक

यानितु गुरुवद्गुरुपुत्रःस्यादन्यत्रोच्छिष्टभोजनात् उच्छिष्टमगुरोरभोज्यमि त्यादीनितानिपित्रादिमुख्यगुरुविषयाणिज्ञेयानि ॥ तप्तकृच्छ्रंतुकुर्वीतत स्यपापस्यशांतये भुक्त्वातुब्राह्मणाशौचेचरेत्सांतपनंद्विजः ॥१४ ॥ भुक्त्वा तुक्षत्रियाशौचेतथाकृच्छ्रंविधीयते वैश्याशौचेतथाभुक्त्वातप्तकृच्छ्रंसमाचरेत् । १५ । शूद्राशौचेद्विजोभुक्त्वातथाचांद्रायणंचरेत् अशौचेयस्ययोभुंक्तेसो प्यशुद्धस्तथाभवेत् १६ तावद्यावदशौचंतुतस्यरामप्रकीर्त्तितम् ॥ १६ त स्याशौचव्यपगमेप्रायश्चित्तंसमाचरेत् भुक्तोत्तमस्यचाशौचेक्षपेतदिवसं तथाइति १७ तथाचकूर्मपुराणे ॥ भुक्त्वाचैवनवश्राद्धेसूतकेमृतकेपिवा च। द्रायणेनशुद्ध्येतब्राह्मणः सुसमाहितः १ अभोज्यानांतुसर्वेषांभुक्त्वाचान्न मुपस्कृतंअंतेवसायिनांचैवतप्तकृच्छ्रेणशुद्ध्यति २ चांडालानांद्विजोभुक्त्वास म्यक्चांद्रायणंचरेत् बुद्धिपूर्वंतुकृच्छ्राद्धंपुनः संस्कारएवच ३ असुरामद्यपा नेनकुर्य्याच्चान्द्रायणंव्रतम् ॥ अभोज्यान्नंहिभुक्त्वाचप्राजापत्येनशुद्ध्यति ४

दिनव्रतकरे १७ तैसेंहिंकूर्म्म पुराणमें कहाहै भुक्त्वेति । नव श्राद्धमें भोजनकर्के और सूतकमें और मृतकमें भोजन करणेकर ब्राह्मण सावधान चित्त हुया चांद्रायण व्रत कर्के शुद्ध होताहै १ अभोज्येति संपूर्ण यो अभोज्यहैं जिनका अन्न भोजन कर्णानाहिं किहा तिनका अन्न भोजन कर्के और अंतेवसायियोहैं चांडालादि तिनका अन्न भोजन कर्के तप्त कृच्छ्र यो व्रत तिसकर्के शुद्ध होताहै ॥ २ ॥ चांडालानामिति और द्विज चांडालोंका अन्न भोजन कर्के अच्छी प्रकार चांद्रयण व्रतकोंकरे और जो बुद्धि पूर्व क्या जान कर्के भोजन करे तव आधा कृच्छ्रकरे और फेर संस्कार करे तव शुद्धहोताहै ॥ ३ ॥ और सुराभिन्नयो मद्यपान तिसके करणेकर चांद्रायण व्रतकोंकरे नहिभोजन करणेयोग्ययो अन्नतिसको भोजनकर्के प्राजापत्यव्रत कर्के शुद्धहोताहै ४

और शूद्रके जूठकों ब्राह्मण भोजन कर्के चांद्रायण व्रतकों करे और कुत्तेका जूठा ब्राह्मण भोजन कर्के तीन रात्र व्रत करणे कर शुद्ध होताहै ॥ ५ ॥ महापातकीति महापातकीयेहैं ब्रह्महत्यादिके करणे वाले तिनके संसर्गमें मूढ बुद्धि जान कर्के भोजन करणे कर स्नान कर्के तप्त कृच्छ्र व्रतकों करे तब शुद्ध होताहै ॥ ६ ॥स्पृष्ट्वेति महापातकी येहि तिसकों स्पर्शकर्के और चांडालकों स्पर्श कर्के और रजस्वलास्त्रीकों स्पर्श कर्के प्रमादतें भोजन करणे कर तीनरात्र कर्के शुद्ध होताहै अर्थात् तीन रात्र व्रत करे ॥ ७ ॥ और जो बुद्धि पूर्व कया जाण कर्के इनके साथ स्पर्श कर्के भोजन करे सो कृच्छ्र व्रत जोहै प्राजापत्य तिस कर्के शुद्ध होताहै एह भगवान् ब्रह्माजीका वचनहै शुष्केति शुष्क और वासी और गवादिघ्रातयो अन्नहै तिसकों भोजन कर्के निराहार व्रतकों करे अथवा प्राजा पत्य व्रतका चतुर्थांश करे ॥ ८ ॥ और वर्षके अंत

शूद्रोच्छिष्टंद्विजोभुक्त्वाकुर्याच्चांद्रायणव्रतं शुनोच्छिष्टंद्विजोभुक्त्वात्रिरात्रेण विशुध्यति ॥ ५ ॥ महापातकिसंसर्गेभुक्त्वास्नात्वाद्विजोयदि बुद्धिपूर्वं तुमूढात्मातप्तकृच्छ्रंसमाचरेत् ॥ ६ ॥ स्पृष्ट्वामहापातकिनंचांडालंवा रजस्वलां प्रमादाद्भोजनंकृत्वात्रिरात्रेणविशुद्ध्यति ॥ ७ ॥ बुद्धिपूर्वंतु कृच्छ्रेणभगवानाहपद्मजः ॥ शुष्कपर्युषितादीनिगवादिप्रतिदूषितं भुक्त्वोपवासंकुर्वीतकृच्छ्रपादमथापिवा ८ संवत्सरांतेकृच्छ्रंतुचरन्विप्रःपुनःपुनः अज्ञातभुक्तशुद्ध्यर्थंज्ञातस्यतुविशेषत इति ९ विष्णुधर्मोत्तरे।अपांक्त्यानां तुयःपंक्त्यांभुंक्तेकश्चिद्द्विजोत्तमः अहोरात्रोषितोभूत्वापंचगव्येनशुद्ध्यति चंद्रार्कग्रहणेभुक्त्वाद्विजश्चांद्रायणंचरेत् इति१ वाराहपुराणेचतुर्विंशत्यधिकशताध्याये विष्णुपूजाविहीनानांराज्ञामन्नभक्षणे प्रायश्चित्तकथनम्॥वाराहउवाच शुद्धाभागवताभूत्वाममकर्मपरायणाः येतुभुंजंतिराजान्नंलोभेनच भयेनच॥ १ ॥

में ब्राह्मण वारंवार अज्ञान कर्के यो भोजन किया अथवा विशेष कर्के जान कर्के यो भोजन किया तिसोकी शुद्धिके निमित्त कृच्छ्रयो प्राजा पत्य व्रत तिसको करे ॥ ९ विष्णुधर्म्मोत्तरमें किहाहै जिनकी पंक्तिमें भोजन करणा नहियोग्य उनकी पंक्तिमें जो द्विजोत्तम भोजन कर्ताहै सो दिन रात्र निराहार व्रतकर्के और पंचगव्य पान कर्के शुद्ध होताहै और चंद्रमा अर सूर्यके ग्रहणमे भोजन कर्के द्विज चांद्रायण व्रतको करे १अब वाराह पुराणके एक शत चौविये १२४ अध्यायमें विष्णु पूजा कर्के रहित योराजाहैं तिनके अन्न भोजन करणेमे प्रायश्चित्त वाराह भगवान् पृथ्वीकों कहतेहैं हेपृथ्वि शुद्ध भागवतहोय कर्के और मेरे पूजादिमें तत्पर योहैं और लोभ कर्के और भय कर्के १

राजान्नकों योभोजन कर्त्तेहैं आपदाकों प्राप्त होय कर्के वी योराजाकें अन्नकों भोजन कर्त्तेहैं सो मनुष्य दश १०००० हजार वर्ष नरकोंमें पचतेहैं २ जवएहभगवान्जीका वचन सुना तव सुनकर्के पृथिवी कांपिती भयी अर्थात् वडेभय कर्के युक्त होतीभई दीनानीति तव नारायणका वचन सुनकर सात ७ दिन चपुनः दशदिन १० पृथ्वीको वडाभय होता भया ३ ॥ तिसतें उपरंत दीन मना होय कर्के पृथ्वी धारयाहै व्रत जिसनें सो संपूर्ण लोकों कों हितके करणे वाला योमधुर वचन सो कहिती भयी ४ ॥ पृथ्वी कहितीहै हेभगवन् तुमयथार्थ कर्के मेरा वचन सुनों योतुमनें किहाहै राजाका अन्न नहि भोजन करणा तव राज योंकों क्या दोषहै सो तुममेरे को कथन करणे योग्यहै ५ । तव भूमिका वचन सुनकर्के संपूर्ण

आपद्गताहिभुंजीरन्राजान्नंतुवसुंधरे दशवर्षसहस्राणिपच्यंतेनरकेनराः२
भगवद्वचनंश्रुत्वाकंपिताचवसुंधर दिनानिसप्तदशचभयंतीव्रंप्रजायते ३ त
तोदीनमनाभूत्वासामहासंशितव्रता उवाचमधुरंवाक्यंसर्वलोकसुखावहम्४
धरण्युवाच शृणुतत्त्वेनमेदेवयत्त्वयाह्यदिवर्त्तते कोनुदोषोहिराज्ञांतु तन्मेत्वं
वक्तुमर्हसि ५ ततोभूमिवचः श्रुत्वासर्वधर्मविदांवरः प्राहनारायणोवाक्यं
धर्मकामांवसुंधराम् ६ वाराहउवाच शृणुसुंदरितत्त्वेनगुह्यमेतदनिंदिते रा
जान्नंतुनभोक्तव्यंशुभैर्भागवतैःसदा ७ यद्यप्येणसमांशेनराजालोकेप्रवर्त्त
ते राजसंतामसंवापिकुर्वन्कर्मसुदारुणम् ८ अपिवागर्हितंतेनराजान्नंतुव
सुंधरे धर्म्मसंधारणार्थायनतुमेरोचतेभुवि ९ ततोन्यत्संप्रवक्ष्यामितच्छृणो
षिवसुंधरे यथाराज्ञांतुभोज्यंवैशुद्धैर्भागवतैःशुभैः १०

धर्म्मोंके जाणनें वालयोंमें श्रेष्ट यो नारायण भगवान् सो धर्म्म कामा यो पृथ्वी तिसकों कहतेहैं ६ । वाराहःहेसुंदरि हेअनिंदिते गुह्ययो धर्म्म सोतूं यथार्थ कर्के मेरेतें श्रवण कर हेभूमि सुंदर जो भगवान् जीके भक्तहैन तिनोंनें राजाका अन्ननहि भोजन करणे योग्यहै७ । जद्यपिराजा समांश कर्के वर्त्तताहै क्यासंपूर्णमें तुल्यवर्त्तताहै तवभी राजस और तामस योदारुण कर्म्म तिनकों कर्त्ताहुआ वर्त्तताहै ८ । इसकर्के हेवसुंधरे राजाका अन्ननिंदितहै धर्म्मके अछी प्रकारधारणके वास्ते मेरेकों पृथ्वीमें राजान्नका भक्षणनहिरुचताहै अर्थात् अछा नहिं लगताहै ९ । तिसतें और में तेरे कों कहिता हां हेपृथ्वि सोतूं श्रवण कर जैसें शुद्ध भगवान्के भक्तों को जिनों राजयों का अन्न भोजन करणे योग्यहै ॥ १० ॥

हेदेवि विधि दृष्टयो कर्म्म तिस कर्के मेरेकों स्थापन कर्के धन और धान्य इनों कर्के समृद्ध यें हैं तिनकों दान कर्के भगवान के योभक्तहैं तिनोंनैंवी ॥११॥भागवत योहैं भक्त तिनों कर्के सिद्ध यो अन्न मेरेनैंवेद्य का शेष हेवरारोहे हेपृथ्वि उस अन्न कों यों भोजन कर्ताहै सो पाप कर्के नहिं लिप्त होता॥१२॥ प्रापणनाम नैवेद्यकाहै एवमिति॥ इसप्रकार विष्णु का वचन सुण कर्के धारयाहै व्रत जिसनें सो पृथ्वी वाराहरूपी यो भगवान् तिनकों फेर कहती भई॥१३॥ पृथ्वी कहतीहै॥हेभगवन् हेजनार्दन शुद्ध योभक्तहैं और पवित्र सो राजाका अन्न भोजन कर्के किस कर्म्म कर्के शुद्ध होताहे सो तुम मेरेकों कहो॥१४॥वाराह जीकहतेहै॥हेदेवि हेभीरू यो तूं मेरेकों कहितीहैं सो यथार्थ कर्के सुण जिस कर्के राजा का अन्न भोजन करणें वाले पुरुष तरतेहैं अर्थात् पापतें शुद्ध होतेहै॥१५॥एक चांद्रायण व्रत कर्के और वडा पुष्कल तप्त कृच्छ्र

स्थापयित्वातुमांदेविविधिदृष्टेनकर्मणा धनधान्यसमृद्धानिदत्वाभागवतेरपि ११सिद्धंभागवतैश्चान्नंममप्रापणशेषणंभुंजानस्तुवरारोहेनसपापेनालिप्यते१२प्रापणशेषणंनैवेद्यांशः।एवंविष्णुवचःश्रुत्वाधरणीसंशितव्रता वाराहरूपिणंदेवंप्रत्युवाचवरानना१३धरण्युवाच राजान्नंतुततोभुक्त्वाशुद्धोभागवतः शुचिःकर्मणाकेनशुद्ध्येततन्मेब्रूहिजनार्दन।१४।वाराहउवाच।शृणुतत्वेनमेदेवियन्मांत्वंभीरुभाषसे तरंतिमनुजायेनराजान्नमुपभुंजत।मू१५एकंचाद्रयणंकृत्वातप्तकृच्छ्रंचपुष्कलं कुर्यात्सांतपनंचैकंशीघ्रंमुंचतिकिल्बिषात१६ भुक्त्वावैराजसान्नानिइमंकर्म्मसमारभेत् नतस्यैवापराधोऽस्तिवसुधेवचोमम ॥ १७॥ एवमेवनभोक्तव्यंराजान्नंतुकदाचन ममार्त्तप्रियकामाययदीच्छेत्परमांगतिमिति ॥ १८ ॥ विष्णुधर्मोत्तरे लशुनंगृंजनंचैवपलांडुमद्यमेवच लशुनादिसमंचैवगंधनमनुजोत्तम ॥ १ ॥

व्रत कर्के और एक सांतपन व्रत करे तब शीघ्रराजाके अन्न भोजन करणेका यो पाप तिसतें दूर होताहै॥१६ अर हे वसुधे राजा के अन्नोंकों भोजन कर्के एह जो कर्म्म किहा चांद्रयण तप्त कृच्छ्र सांतपन इनकों करे तब उसकों अपराध क्या पाप नहिंहै एह मेरावचनहै १७इसी प्रकार राजा का अन्न किसीनें मेरे भक्तनें कदाचित् नहि भोजन करणे योग्य यो मेरे मेंप्रेमके करणे वाला और परम गति कों योचाहिताहै॥तिसने राजा का अन्न नहिं भोजन करणा॥१८॥विष्णु धर्म्मोत्तरमें किहा लशुन मिति॥लशुन क्या थोम और गृंजन क्या गोगलू गाजरां पलांडु क्या गंडा और मद्य एह योहैंलशुनके वाग वरहैं सुगंध कर्के हेमनुष्योंमे श्रेष्ट इन लशुनादियोंकों भोजन कर्के चांद्रायण व्रत कों करे॥ १ ॥

और तिसी प्रकार कच्चामांस खाणे वाले योमृगादिहैं तिनका मांस खाय करके वी चांद्रायणव्रतक रे॥लोहीति लाल वर्णके यो वृक्षोंके गूंदहैं और व्रश्चन प्रभव योवृक्ष अर्थात् पीडंदी करेहुये संगतेर इत्यादि॥२॥और लसूडे वहुवारकफल और गव्यपी यूष नवीन प्रसूता यौगौ दश पत्र के मध्य उसके दूधका पीना और विषयो दुर्गंधिरस और श्लेष्मांतक और मृत्तिका और विना नैवेद्यादि कृसर क्या खिचडी और संयाव क्या यवोंके आटेका घृत खंड मिश्रित भक्ष्य वि शेष और पायस और पूडे और सुचियां इनकों ब्राह्मणादिके भोजन करवाये विना भोजन करे तवभी चांद्रयण व्रतकों करे ॥३॥कूर्म पुराणमें किहाहै वार्त्ताकमिति॥वार्त्ताकक्या कंटकारी शाक और भूस्तृण क्या शाक विशेष रोहिकर्णीति और सुहांजना और कूष्मांड क्या पेठा और करक लड्वानाम पक्षि विशेष और शंख क्या अस्थि और कुंभिकादि शाक विशेष

भुक्त्वाचांद्रायणंकुर्यान्मासंक्रव्यभुजस्तथा लोहितान्वृक्षनिर्यासान्व्रश्चनप्र भवांस्तथा॥२॥शेलुंगव्यंचपीयूषंविपंश्लेष्मांतकंमृदम् वृथाकृसरसंयावपा यसापूपशष्कुलीइतिपीयूपोभिनवंपयइत्यमरः॥विपंदुर्गन्धिरसः वृथेतिश्र निवेदितं संयावोयवपिष्टविकारोभक्ष्यविशेषः स्पष्टमन्यत्॥कूर्मपुराणे॥वार्ता कंभूस्तृणंशिग्रुंकूष्मांडंकरकंतथाप्राजापत्यंचरेज्जग्ध्वाशंखंकुंभिकमेवच।१। पलांडुंलशुनंचैवभुक्त्वाचांद्रायणंचरेत् नालिकांतंडुलीयंच प्राजापत्येनशुद्ध्य ति॥२॥ वृथाकृसरसंयावंपायसापूपशष्कुलीः भुक्त्वाचैवंविधंत्वन्नंत्रिरात्रेणवि शुद्ध्यति॥३॥वार्त्ताकंकंटकारीशाकं॥भूस्तृणंकरकं लड्वानामापक्षिविशेषः शंखोऽस्थि कुंभिकादिशाकविशेषः स्पष्टमन्यत्॥चक्रवाकादिमांसभक्षणप्रा यश्चित्तंविष्णुध ०

इनको भोजन करके प्राजापत्य व्रत करके शुद्ध होताहै॥१॥गंडे और लसुन इनकों भोजन क रके चांद्रायण व्रतकों करे नालिकायो शाक विशेषहै और तंडुलीययो शाक विशेष इनकों भक्षण करके प्राजापत्य व्रत करके शुद्ध होताहै॥२॥और ब्राह्मणादिके पूजनतें विना योमनुष्य कृस र और संयाव और पायस और अपूप और शष्कुली इस प्रकारके अन्नकों भोजन कर्त्ताहै सो त्रिरात्र व्रत करके शुद्ध होताहै कृसरादिका अर्थ पहलें कथन कर दियाहै॥३॥अव चक्र वाका दि योपक्षीहैं तिनके मांस भक्षणका प्रायश्चित्त विष्णु धर्म्मोत्तरमें कहितेहैं ॥

चक्रवाकमिति चक्रवाक योहै चकोर पक्षी प्लव नाम योपक्षीविशेष जलचर पक्षि मात्र और हंस टिटिभनाम पक्षी टिटीउरी और मद्गुनाम पक्षि विशेष और काक और उल्लूक और तोता और भासनाम पक्षी और दात्यूह यो विर्वाहा और शारिका क्या मैना ॥ १ ॥ और बकक्या बगुला और बाज और बगुलेकी स्त्री इनकों भोजन करके षट् रात्र व्रतकों करे और कसाईके मांसकों यो भोजन करे तब बी तिसीप्रकार षट्रात्र व्रतकरे ॥ २ ॥अज क्यावकरा और भेड और सूकर और फोग और महिष और रुरु नामक मृग विशेष और न्यंकु नामक मृग विशेष और हरिण और गवययोहै इनकों भक्षण करके और जो मृगहै तिनकों भक्षण करके तीन दिन निराहार व्रतकों करे ॥ ३ ॥ क्रव्यादयोहैं कच्चा मांसखाने वाले मृगादि और ग्राम्य

चक्रवाकंप्लवंहंसंटिट्टिभंमद्गुमेवच काकोलूकंशुकंभासंदात्यूहंकारिकांतथा १ बकश्येनबलाकांश्चभुक्त्वाषड्रात्रमाचरेत् उपवासस्तथाकार्यः सूनामासाशनेभवेत् २ अजाविकान्वराहांश्चपृषतान्माहिषांस्तथा रुरुंन्यंकुंतथैणांश्चगवयांश्चैवभक्षयेत् ३ भुक्त्वामांसमतोन्यस्यत्र्यहंतिष्ठे द्बुभुक्षितः क्रव्यादशूकरोष्ट्राणांगोमायोः कपिकाकयोः ४ गोनराश्वखराणांचनोक्ताःपंचनखाश्चये मांसंचकौंजरंभुक्त्वातप्तकृच्छ्रेणशुद्ध्यति ५ ग्रामकुक्कुट छत्राकौभुक्त्वाचांद्रायणंचरेत् केशकीटविपन्नेपि पिबेद्ब्राह्मींसुवर्चलामिति ६ शूकरोऽत्रग्राम्यः॥कूर्मपुराणेनरादिमांसभक्षणप्रा०नरमांसाशनंकृत्वाचांद्रायणमथाचरेत् काकंचैवतथाश्वानंजग्ध्वाहस्तिनमेवच १ वराहंकुक्कुटंचाथ तप्तकृच्छ्रेणशुद्ध्यति

शूकरयोहैं और ऊठ और गिद्दड और वानर और काक ५ और गौः और मनुष्य और घोडा और खोता और नहिकहेयो पंचनखभक्ष और हाथीकामांसइनकों भोजनकरके तप्तकृच्छ्र यो व्रत तिस करके शुद्धहोताहै ॥ ५ ॥ ग्रामकुकुट और छत्राकक्या छतडीयां इनकों भोजन करके चांद्रायण व्रतकों करे और केशयोहैं शिरकेबाल और कीटयोहैं कीडे इनों करके युक्त बी जो अन्न तिस अन्नके भोजनमें ब्राह्मीसुवर्चलायोबूटी तिसकों पानकरे ६ कूर्मपुराणमें नरादिमांस भक्षणका प्रायश्चित्त कहतेहैं नरेति मनुष्यके मांसको भक्षण करके चांद्रायण व्रतकों करे काक और कुत्ता और हाथी ॥ १ ॥ और विड्‌ वराह और ग्राम्य कुकुट इनकों भक्षण करके तप्तकृच्छ्र यो व्रत तिस करके शुद्धहोताहै ॥

क्रव्यादयोहैं कच्चामांस खाणे वाले तिनके मांसको खायकर्के विष्टा और मूत्र॥२॥और गौ क्या गौके सदृशपशु गवयादि और गीदड और कबूतर इनके मांसको खाय कर्के वीपूर्वकिहायो तप्त कृच्छ्र व्रत तिसीको करे। और बारां दिन निराहार व्रत कर्के कूष्मांड योमंत्र हैं तिनो कर्के घृतको हवन करे॥३॥नकुल और उल्लूक और मार्जार इनको भोजन कर्के सांतपन व्रतको करे श्वापदयो मृग विशेषहै कुत्तेकीन्याई पैर जिसके और ऊंठ और खोता इनको खाये कर्के तप्त कृच्छ्र व्रत कर्के शुद्ध होताहै॥४॥और व्रतकीन्याई पूर्व कथन करीयो विधि तिस कर्के संस्कारको करे बकोयोहै बलाका और हंस और कारंडव पक्षिविशेष बगलेकाभेद॥५॥ और चकोर और प्लव कर्के जलके पक्षी इनको भोजन कर्के बारां दिन भोजनको नहिं करे कबूतर और टिट्टिभ नाम पक्षि विशेष और तोता और सारसपक्षी और उल्लू और जालपा

क्रव्यादानांचमांसानिपुरीषंमूत्रमेवच २ गोगोमायुकपोतानांतदेवव्रतमाचरेत् अत्रगोपदंगोसदृशपशुपरं प्रायश्चित्तस्याल्पत्वात् उपोष्यद्वादशाहंतु कूष्मांडैर्जुहुयाद्घृतं ३ नकुलोलूकमार्जारंजग्ध्वासांतपनंचरेत् श्वापदोष्ट्रखरंजग्ध्वातप्तकृच्छ्रेणशुद्ध्यति ४ व्रतवच्चैवसंस्कारंपूर्वेणविधिनैवतु वकांचैवबलाकांचहंसंकारंडवंतथा ५ चक्रवाकंप्लवंजग्ध्वाद्वादशाहमभोजनं कपोतंटिट्टिभंचैवशुकंसारसमेववा ६ उलूकंजालपादंचजग्ध्वाप्येतद्व्रतंचरेत् ६ शिशुमारंतथावीरंमत्स्यमांसंतथैवच जग्ध्वाचैवकठाहाकमेतदेवव्रतंचरेत् ७ वीरंतंत्रोक्तकुलाचारलब्धं कठाहाकोदात्यूहः पक्षी॥मृतपंचनखादिदूषितकूपादिजलपानेप्राय. मृतपंचनखात्कूपादमेध्येनसकृद्युतात् अपः पीत्वात्र्यहंतिष्ठेत्सोपवासोद्विजोत्तमः १ द्विदिनंक्षत्रियस्तिष्ठेदकाहंवैश्य एवचनक्ताशीचतथाशूद्रः पंचगव्येनशुद्ध्यति २ ॥

द जालकीन्याई पैर जिसके इनको खाय कर्केवी पूर्वकिहायो व्रत तिस व्रतको करे६वा शिशुमारजो जल चरजीव और बीर क्या तंत्रोक्त कुलाचारकर्के लब्ध यो अन्नादि और तिसीप्रकार मत्स्य मांस और कठाहाक क्या दात्यूह पक्षी इनको खाय कर्के वी पूर्वोक्त व्रतको करे ॥ ७ अबमृत पंचनखादि कर्के दूषित यो कूपादि तिसके जलपीनेमें प्रायश्चित्त कहितेहैं मृतहोयाहै पंच नखादि जिसकूपमे और अमेध्य यो विष्टादि तिनो कर्के युक्त यो कूपादि तिसते एकवार जलपीनेकर तीनदिन निराहार व्रतकरे ब्राह्मण तब शुद्धहोताहै ॥ १ ॥ क्षत्री दोदिन व्रतकरे और वैश्य एक व्रतकरे और शूद्र उसकूपका जलपीयके नक्त भोजन करे और पंचगव्य पान करे तब शुद्धहोताहै॥ ॥ २ ॥

और शुक्त योहैं अम्ल कांजिकादि और कषाययोहैं तिनकों पानकर्के और अमेध्य योहैं अपवित्र वस्तु तिनकोंपान कर्के द्विज इतना पर्यंत पाप युक्त होताहै जितना पर्यंत ओाहि अन्नादिहैठ नाहिभया अर्थात् पचयानाहिं॥३॥एहशुक्त अर कषायवहुत दिनोंके लणे अवविष्णुधर्मोत्तरमेकहितेहैं सरावके भांडेमैं प्राप्तयोजल उसको योब्राह्मण मोहकर्के पानकरे तवशंखपुष्पी बूटीकर्के काडयागो दूधउसकों तीनदिन पानकरे॥१और सरावके भांडेमैं पडा योजल तिसकों पीयकरके तैसेंहि सातरात्र पर्यंतपानकरे और शूद्रके जूठे योजलहैं तिनकों पानकर्के पांचरात्र शंखपुष्पी कर्के काडयायो दूध तिसकों पानकरे२फेर विष्णु धर्मोत्तरमे हिकिहाहै गौआं औरम

शुक्तान्यपिकषायांश्चपीत्वामेध्यान्यपिद्विजः तावद्भवत्यप्रयतोयावत्त्वन्नंव्रजत्यधइति३वहुदिनीयानि विष्णुधर्मोत्तरे मद्यभांडगतामोहात्पीत्वाचापो द्विजोत्तमः शंखपुष्पीशृतंक्षीरं पिवेत्तुदिवसत्रयम्१ सुराभांडगताः पीत्वासप्तरात्रंतथापिवेत् शूद्रोच्छिष्टास्तथापीत्वापंचरात्रंतथापिवे दिति २पुनस्तत्रैव गवांचमहिषीणांचवर्जयित्वातथाप्यजां सर्वक्षीराणिवर्ज्यानितेषां चैवाप्यानिर्दिशम्१ स्यंदन्यमध्यभक्षायाविवत्सायाश्चवर्जयेत् दधिवर्ज्जंच शुक्तानिसर्वाणिपरिवर्जयेत् २ शुभैः पुष्पफलैर्यानिभक्ष्यैरभिपुतानितुइति॥शुभंपुष्पफलादिकृतानिअभिपुतानि कांजिकानि शुक्तान्यपिनपरिवर्ज्जनीयानीति तुशब्दार्थः॥ भक्ष्यैरभिपुतानिनो इतिपाठान्तरम् ॥ शुक्तत्वंच वहुदिनातिक्रमणेनाम्लत्वाद्याश्रयत्वम् उपपातकप्राश्चित्तंविष्णुधर्मोत्तरे।उपपातकसंयुक्तोगोघ्नोमासंयवान्पिवेत् कृतवापनोवापिवसेच्चर्मणातेनसंवृतः१

हिषीयां और वकरियां इनके दूधकों छोडकरके संपूर्ण दूध वर्जेहैं और तिनकाभी दूध दश दिन पर्यंत वार्जितहै २ और स्पंदिनी क्या गर्भकी इच्छावाली योगौः और अमेध्य भक्षा योगौ और विवत्सा योगौ तिनके दूधकोत्यागे और दधितें विना संपूर्ण योशुक्त अम्ल वस्तु तिनकों नाहिभोजन करे २ शुभयोपुष्प और फल तिनों कर्के यो कांजिकहै सोभक्ष्यहैं तिनकोंनहिंत्यागे इनातें जोकोई होरहोवे सोत्यागने योग्यहै उपपातक प्रायश्चित्त विष्णुधर्मोत्तर में किहाहै गौकीहत्या योहै सोउपपातकहै गौकीहत्याके करणे वाला एकमहीना यवजोहैं तिनकों काडकर्के पानकरे और मुंडन करायकर्के गौके चर्मकों,ऊपरधार कर्के वासकरे १

और चतुर्थकाल योहै तिसमें क्षार और लवण योहै तिनोंतें विनाथोडे प्रमाणका भोजन करें और जिनेंद्रीहोयकर्के दोमहीने गोमूत्रकर्के स्नानकरें॥२॥और दिनमें गौआं जववनकोंजावें तव उनके पीछे जावे खडाहोयकर ऊपर कीयो धूडहै आकाशकी तिसकोंपान करे॥इसप्रकार गौआंकोसिवाकर्के और नमस्कार कर्के रात्रिमें वीरासन योहै खडहोये कर्के गौओंकीरक्षाकरणी तिसकों करे॥३॥और जव गौआं खडिआंहोजामें तव आप भीखडा होवे और जव गौआं चलें तव उनके पीछे चले और जववैठें गौआं तवआपभी नियमकर्के दूर होयामत्सर जिसका सोवैठे॥४॥ और रोगिनी योगौ और अभिक्काक्या चोर व्याघ्रादि भयोंकर्के भीताहै अथवा गौघातीयोहै तिनों कर्के ग्रहण करी योगौः अथवा गिडपडी योगौः अथवा चिकड में गिडी योगौ तिसकों संपूर्णप्राणों कर्के रक्षाकरे अर्थात् इनोंउपद्रवोंसें गौ

चतुर्थकालमश्नीयादक्षारलवणंमितं गोमूत्रेणाचरेत्स्नानंद्वौमासौनियतेंद्रियः॥२॥दिवानुगच्छेत्तागाश्चातिष्ठन्नूर्द्ध्वरजःपिवेत् शुश्रूषित्वानमस्कृत्वारात्रौवीरासनंचरेत्॥३॥तिष्ठंतीष्वनुतिष्ठेत्तुव्रजंतीष्वप्यनुव्रजेत् आसीनासुतथासीननियतोवीतमत्सरः॥४॥आतुरामभिक्तांचचोरव्याघ्रादिभिर्भयैः पतितांपंकमग्नांवासर्वप्राणैर्विमोक्षयेत् ५अभिपिक्तांचोरादिजैर्भयैर्भीतांगोघातीभिर्गृहीतांवा॥उष्णेवर्षातिशीतेवामारुतेयातिवाभृशम् नकुर्वीतात्मनस्त्राणंगोरकृत्वात् शक्तितः६आत्मनोयदिवान्येषांगृहेक्षेत्रेथवाखले खादमानांनशंसेत पिवंतंचैववत्सकम्॥७॥वृषभैकादशागास्तुदद्याद्विचरितव्रतः अविद्यमानेसर्वस्वंवेदविद्भ्योनिवेदयेत्॥८॥वंधनेरोधनेवापियोजनेचगवांरुजा भवेद्वामरणंयत्रनिमित्तेनत्रलिप्यते॥९॥ पादमेकंचरेद्रोधेद्वौपादौवंधनेचरेत्

कोंछुडावे॥५॥और धूपमें और वर्षामें और शीतमें और वहुतपवनके चलते हुये शक्तिकर्के गौकी रक्षाकिये विना आपणी रक्षाकोंनाहिकरे॥६॥और आपणेवा औरोंके घर अथवाक्षेत्रअथवाखलाडे खातीयोगौ तिसकों नहिहटावे और दूधपान कर्तायोवच्छा तिसकों नाहटावे॥७॥ और इसप्रकार धारेहै व्रतजिसने सोतिस गोहत्याके पापके दूरकरणेके निमित्त दशगौआं और एकवृषभ दानकरे अथवाएहनाहिं होयसके तव वेदोंकों जानणेवालायोहैं तिनांके तांई सर्वधनस्व दानकरदेवे॥ ८ ॥वांधवांमें और रोकणेमें और योजनमें। जिस निमित्तमेंरोगकर्के गौआंका मरण होवे तहां वंधनादिके करणे वाला पाप कर्केयुक्त होताहै।९।सोकहितेहैं गौआं को रोकणेमें एक पाद पूर्वोक्त व्रतकों करे और योवंधन मेंगौः मृत होजावे तव दोपाद पूर्वोक्त व्रत को करे ॥ अर्थात्

आधा पूर्वोक्त व्रत करे) और हलादिमें योजनमें योमृतहोजावे तव पादोन व्रतकों करे और इनों निमित्तोंथें विना गौके निपातनमें संपूर्ण व्रतकों करे क्या योपूर्व किहा सो संपूर्णकरे १० वनोंमें और कठिन स्थानोंमें और विषम भोजनमें जोगो मृतहोजावे तद पूर्वोक्त व्रतका एक पाद प्रायश्चित्त करणा ११ घंटा योगोके गलमें पाणा तिस दोष कर्के मृतहोजावे तव आधा प्रायश्चित्तकरे और दमनमें और वाहनमें और रोधमें और गड्डेमेंयोडनेमें और नासिकामें रस्सी पाणेमें पूर्वकिहायो व्रत सो पादोनकरे १२ और वंधनमें और रोकणेमें वहुतिओं गोओंके मरणमें और मिथ्या औषधके करणमें पूर्वोक्त यो गोहत्याके निमित्त व्रत सो द्विगुण करे अर्थात् दूणा प्रायश्चित्त करे १३ शृंग भंगमें और अस्थि भंगमें और पुच्छके छेदनेमें जितना पर्यंत गौ

योजनेपादहीनंस्याच्चरेत्सर्वंनिपातने १० कांतारेष्वथदुर्गेषुविषमेखादनेपिच यदितत्रविपत्तिःस्यादेकपादोविधीयते ११ घंटाभरणदोषेतुतथैवार्धंविनिर्दिशेत् दमनेवाहनेरोधेशकटस्यचयोक्रणे१२नस्तःशकलपाशेपुमृते॰ पादोनमाचरेत्१२नस्तःशकलपाशोनासारजुपातः।व्यापन्नानांवहूनांतुवंधनेरोधनेपिवाभिषङ्मिथ्याचरंश्चेहद्विगुणंगोव्रतंचरेत् १३ शृंगभंगेस्थिभंगेवालांगूलच्छेदनेपिवा यावर्कतुपिवेत्तावद्यावत्स्वस्थातुगौर्भवेत्१४एकाचेद्बहुभिर्दैवाद्यत्रव्यापादिताभवेत् पादंपादंतुहत्यायाश्चरेयुस्तेपृथक्पृथक्१५यंत्रणेगोचिकित्सायांमूढगर्भविमोक्षणे यदितत्रविपत्तिःस्यात्तत्रदोषोनाविद्यते १६ औषधंस्नेहमाहारंदद्याद्गोब्राह्मणादिषु दीयमानेविपत्तिःस्याद्दातुर्दोषोनविद्यते १७ एतदेवव्रतंकुर्युरुपपातकिनस्तथेति

न राजी होवे इतना पर्यंत यावक यो है यवोंका काढा तिसकों पानकरे १४ जव दैवयोगतें जिस स्थानमें एक गो वहुत मनुष्यों कर्के मारी होवे तव उस हत्याका सो मनुष्य भिन्न भिन्न पूर्वोक्त पादपाद प्रायश्चित्त करे १५ गोके राजी करणे के निमित्त यो औषधकरणी उसके निमित्त यों गौका वांधना और मूढ गर्भ योहि योगर्भमें मृतहोगया यो वच्छा वावच्छी उसकावाहरनकासना उसमें योगो मरजावे तव उसका दोष नाहिं १६ औषध वास्नेह वा भोजन योब्राह्मणादियोंमें देवे अर उस औषधादिके दित्ते हि गौमरजावे तव औषधादिके देणे वाले को दोष नाहिंहै १७ एहहि व्रत होर उपपातकके करणे वाले भी मनुष्यकरें ॥

क्षत्रियादिके वधमें भी प्रायश्चित्त तहांहि किहाहै ब्रह्म हत्याका चतुर्थांश क्षत्रिके मारणमें किहाहै और आपणे धर्ममें स्थित यो वैश्य तिसके मारणेमें ब्रह्महत्याका अष्टमांश पाप किहा और शूद्रके मारणेमें ब्रह्महत्या का षोडशांश१६ क्या सोलआंहिस्सा प्रायश्चित्त होताहै१ उोर कामनातें विना यो ब्राह्मण क्षत्रीकोंमारे तव एक १ वृषभ और हजार १००० गोआपणी शुद्धिके निमित्त दान करे ॥ २ ॥ अथवा नियम कर्के उोर शिरमें जटाधार कर्के तीन ३ वर्ष ब्रह्महत्याके ब्रतकों करे उोर ग्रामतें दूर वृक्षके हेठ स्थान वना कर्के वासकरे ॥ ३ ॥ और ब्राह्मण एह हि व्रत वर्ष पर्यंत १ वैश्यकें मारणमेंकरे प्रमाप्येति ॥ आपणे वृत्तमें स्थित योवैश्य तिसकों मार कर्के ब्राह्मण शत १०० गौका दान करे४उोर एहि संपूर्ण व्रत छेमहीनें शूद्रके मारणे वा लाकेर और श्वेत वर्ण कियां दशगौआं उोर एक वृषभ ब्राह्मण के तांई दान कर देवे शूद्र

क्षत्रियादिवधेप्रायश्चित्तंतत्रैवम् तुरीयंब्रह्महत्यायाःक्षत्रियस्यवधेस्मृतम् वैश्येऽष्टमांशोवृत्तस्थेशूद्रेज्ञेयस्तुषोडश १ अकामतस्तुराजन्यंविनिपात्य द्विजोत्तमः वृषभैकसहस्रागादद्यात्शुद्ध्यर्थमात्मनः २ त्र्यब्दंचरेद्वानियतो जटीब्रह्महणोव्रतम् वसन्दूरतरेग्रामाद्वृक्षमूलानिकेतनः ३ एतदेवाचरेदब्दंप्रायश्चित्तंद्विजोत्तमःप्रमाप्यवैश्यंवृत्तस्थंदद्याद्वैकशतंगवाम्४एतदेवव्रतंकृत्स्नंषण्मासान्शूद्रहाचरेत् वृषभैकादशावापिदद्याद्विप्रायगाःसिताइति ५ कूर्मपुराणेपि॥हत्वातुक्षात्रियंविप्रःकुर्याद्ब्रह्महणोव्रतम् अकामतोपिषण्मासान्दद्यात्पंचशतंगवाम्१कामतस्तु त्र्यब्दंचरेतनियतोवनवासीसमाहितः प्राजापत्यंसांतपनंतप्तकृच्छ्रंतुवात्रयम्२प्रमाप्यकामतोवैश्यंकुर्यात्संवत्सरद्वयम् गोसहस्रस्यपादंचदद्याद्वाब्राह्मणोव्रते ३ कृच्छ्रातिकृच्छ्रौवाकुर्यात्चांद्रायणमथापिवा संवत्सरंव्रतंकुर्याच्छूद्रंहत्वाप्रमादतः ॥ ४ ॥

की हत्याके दूर करणेके निमित्त ॥ ५ ॥ कूर्म पुराणमें भी कहितेहैं सो तहां विशेषहै क्षत्रीकों कामनाकर ब्राह्मण मार कर्के ब्रह्म हत्याके ब्रतकोंकरे उोर कामनातें विनावी मारकर्के छेमहीने व्रत कों करे उोर पांचशत५००गोदानकरे १ और योकामनातेंमारे सोनियम कर्के तीन वर्ष पर्यंत वनवा सीहोय कर्के और सावधान चित्त होय कर्के प्राजापत्य उोर सांतपन अथवा तप्त कृच्छ्र ब्रतकरे अथवातिन्नांकोहिकरे २ और यो ब्राह्मण कामना कर्के वैश्यकोंमारे सोदो वर्ष पर्यंत प्रायश्चित्त कों करे उोर ढाईसौ २५० उस प्रायश्चित्तके निमित्त ब्राह्मण गौआं दानकरे३ उोर कृच्छ्र ब्रत अथवा अति कृच्छ्र ब्रत अथवा चांद्रायणकरे उोर योब्राह्मण प्रमाद कर्के शूद्र कोंमारे तव वर्ष पर्यंत ब्रतकरे ॥ ४ ॥

और सहस्रार्द्ध गौका पाद क्या सपाद शत १२५ गौओं कों दानकरे उसपापके दूर करणे वास्ते। अब पहले मे कुछविशेषकहतेहैं किंचेति और ब्राह्मण क्षत्रिकों वैश्य कों और शूद्रको मारे तब यथा क्रम कर्के आठवर्ष और छेवर्ष और तीनवर्ष ब्रह्म हत्याके व्रतकों करे अर्थात् क्षत्रिकों मार कर्के ब्राह्मण आठ वर्ष और वैश्य कों मार कर्के छेवर्ष और शूद्रकों मार कर्के तीन वर्ष व्रतकों करे। और योगर्भवती ब्राह्मणीकोंमारे तब उसके निमित्त आठ वर्ष व्रतकों करे ६ राजन्यामिति और क्षत्रीकी स्त्री योगर्भवती उसकों यो मारे सो छे ६ वर्ष पूर्वोक्त व्रतकों करे। और वैश्यायोहैवैश्यकी स्त्री उसकों गर्भवतीकों यो मारे सोमारणे वाला तीन वर्ष पर्यंत पूर्वोक्त व्रतकों करे ॥ और ऐसी शूद्रा कों मार कर्के ब्राह्मण १ वर्षव्रतकर्केशुद्धहोताहै ॥ ७ और यो प्रमादकर्के वेश्या कोंमारेतब ब्राह्मणके तांई कुछ थोडादान करदेवे। और अंत्यज येहैं चांडालादि तिनको मार

गोसहस्रार्द्धपादंचदद्यात्तत्पापशांतये किंच अष्टौवर्षाणिषट्त्रीणिकुर्याद्ब्रह्महणोव्रतम् ५ हत्वातुक्षत्रियंवैश्यंशूद्रंचैवयथाक्रमम् गर्भिणींब्राह्मणींविस्येत्स्वष्टवर्षंव्रतंचरेत् ६ विस्येतुर्हिंस्यात् ॥ राजन्यांवर्षषट्कंतुवैश्यांसंवत्सरत्रयम् वत्सरेणविशुध्येतशूद्रांहत्वाद्विजोत्तमः ७ वेश्यांहत्वाप्रमादेनकिंचिद्दद्याद्द्विजातये अंत्यजानांवधेचैवकुर्याच्चांद्रायणव्रतम् पराकेणाथवाशुद्धिरित्याहभगवानज इति ८ विष्णुधर्म्मोत्तरे चतुर्णामपिवर्णानांनारींहत्वानरः स्थितः वर्णानामानुपूर्व्येणत्रयाणामविशेषतः १ अस्यश्लोकस्यव्यवस्थाप्रायश्चित्तेन्दुशेखरे कामतोगुणवत्तरब्राह्मणीवधे विप्रस्यषाड्वार्षिकंब्रह्महत्याव्रतम् ॥ क्षत्रियवैश्यशूद्रजातिस्त्रीवधेतदर्धंतदर्धंतदर्धानि ॥ अमत्याचेत्सर्वत्र तत्तदर्धम् ॥ अभाष्यैवप्रमाप्यस्त्रींशूद्रहत्याव्रतंचरेदिति ॥ नारदीयेपि ब्राह्मणीनांवधेत्वर्द्धपादःस्यात्कन्यकावधे हत्वात्वनुपनीतांचतथापादव्रतंचरेत् ॥ १ ॥ अनुपनीतामविवाहिताम्

कर्के चांद्रायण व्रतकों करे। अथवा पराकव्रत करे एहभगवान ब्रह्माजीका वचनहै ॥ ८ ॥ विष्णुधर्म्मोत्तरमें किहाहै कामनाते गुणवत्तर ब्राह्मणीके मारणमें ब्राह्मणकों छेवर्षका ब्रह्महत्याव्रत किहा ॥ और क्षत्री ओर वेश्य और शूद्र इनकीस्त्रीयों के मारणमें तदर्ध तदर्ध तदर्ध प्रायश्चित्तहै अर्थात् ब्राह्मणी ते आधा प्रायश्चित्त क्षत्रियाके मारणमें और तिसतें आधा वैश्याकें मारणमेंहे। और तिसतें आधा शूद्राके मारणमेंहै ॥ १ ॥ और विना बुलाये स्त्रीकों मारे तब शूद्रके मारणका योव्रत सोकरे। नारदीयपुराणमें भीकिहाहै। ब्राह्मणीके मारणमें आधा प्रायश्चित्तहै ॥ और कन्यका मारणमेंपादक्या चतुर्थांश व्रतकिहा। और तिसीप्रकार अविवाहिता यो स्त्रीतिसकों मार कर्के पाद व्रतकरे ॥ १ ॥ परंतु इस जगा अर्द्धपादादिव्यवस्था ब्रह्महत्याके व्रतकी जाननी

और क्षत्रियाकों मार कर्के छेवर्ष व्रत करे ब्राह्मण और वैश्याकों मार कर्के तीनवर्ष व्रत क रे ॥ और शूद्राकों मार कर्के वर्ष पर्यंत व्रत करे ॥ २ ॥ और दीक्षित ब्राह्मणकी स्त्रीकों मार कर्के आठ वर्ष व्रत करे इतना काल ब्रह्महत्याके व्रतकों कर्के निश्चयकर्के शुद्ध होताहै ॥ ३ और हेमुनिसत्तम मुनियोंमे श्रेष्ठ बृद्धा और रोगिणी और बाला एह योस्त्रियांहैं इनकों मुनियों नें आधा प्रायश्चित्त किहाहै सर्वत्र ॥ ४ ॥ अब विष्णु धर्म्मोत्तरमें मार्जारादि वधमें प्रायश्चित्त क हितेहैं मार्जार और नकुल और विबीहा और डिडुं और कुत्ता और गोधा और उलू और काक इनकों मार कर्के शूद्रके मारणकायो व्रत तिसकों करे १ अथवा तीन रात्र दुग्ध पान करे अथवा रामनाम जपता होया योजन मात्र क्या चार कोश मार्ग जावे अथवा नदींमें जा यकर्के स्नानाचमन करे अथवा वरुणहै देवता जिनका तिनों मंत्रोंका जपकरे ॥ २ ॥ इसमें

हत्वातुक्षत्रियांविप्रः षडब्दंकृच्छ्रमाचरेत् संवत्सरत्रयंवैश्यांशूद्रांहत्वातुव त्सरम् ॥ २ ॥ दीक्षितस्यस्त्रियं हत्वाब्राह्मणींचाष्टवत्सरान् ब्रह्महत्याव्रतं कृत्वा शुद्धोभवतिनिश्चितम् । ३ प्रायश्चित्तविधानंतुसर्वत्रमुनिसत्तम वृद्धा तुरस्त्रीबालानामर्धमुक्तंमनीपिभिरिति ॥ ४ ॥ विष्णुधर्म्मोत्तरेमार्जारादिव धेप्रा०मार्जारनकुलान्हत्वाचाषंमंडूकमेववा श्वगोधोलूककाकांश्चशूद्रहत्या व्रतंचरेत् ॥ १ ॥ पयः पिबेत्त्रिरात्रंवायोजनंवाध्वनोव्रजेत् उपस्पृशेत्स्रवं त्यांवासूक्तंवाब्देवतंजपेत् २ अत्रशूद्रहत्याव्रताचरणमात्रंविवक्षितंनतुत न्मानंतेनैकादिनंशूद्रहत्याव्रतंचरेदिति तात्पर्यार्थः अभ्रींकार्ष्णायसींदद्या त्सर्पेहत्वाद्विजोत्तमःपलालभारकंपंडसैसकंचैकमाषकम् ३ घृतकुंभवराहे तुतिलद्रोणंतुतित्तिरे शुकेद्विहायनंवत्संक्रौंचहत्वाद्विहायनम् ४ हत्वाहंसं बलाकांवाबकंबर्हिणमेववा वानरंश्येनभासौवास्पृशयेद्ब्राह्मणायगाम् ५ स्पृशेद्दद्यादित्यर्थः ॥ वासोदद्याद्धयंहत्वापंचनीलान्वृपान्गजम्

शूद्रहत्या व्रत आचरण मात्र विवक्षितहै तुपुनः शूद्रहत्याके व्रतका प्रमाण नहिं किहा तिस कर्के एक दिन शूद्रहत्याके व्रतकों करे एह तात्पर्यहै ॥ ब्राह्मण जब सर्पकों मारे तब लोहेकी क ही दान करे और जब नपुंसककों मारे तब पराली या घास तिसका भार दान करे वा एक १ मासा सिक्का दान करे ॥ ३ ॥ और शूकरके मारणमें घृतका कुम्भ दान करे तित्तिर पक्षीकों मार कर्के द्रोण मात्र तिल दान करे और तोतेकों मार कर्के दो वर्षके वच्छेका दान करे और क्रौंच पक्षीकों मार कर्केवी दो वर्षके वच्छेकों दान करे ४ हंस और बलाका और बगुला और मोर और वानर और बाज और भासपक्षी इनकों मार कर्के ब्राह्मणके तांई गोदान कर देवे ५ घोडेकों मारकर्के वस्त्रदान करे और हाथीकों मारकर्के नील वर्णके पांचवृषभ दान करे

वकरा और भेडू और बलीवर्द्द और खोता एह यो एक वर्षके हैं और कच्चामांस खाणे वाले मृग योहैं तिनकों मारकर्के दूधवालीगौकों दानकरे ॥६ कच्चामांस खाणेवाला योमृग तिसकों मार॰ कर्के वच्छीकों दानकरे और ऊठकों मारकर्के रत्तीमात्र सुवर्ण दान करे और जीवक जो पक्षी विशेष और आपणा यो वकरा और भेड इनकों मारकरके बी एक एकके निमित्त रत्ती रत्ती सुवर्ण दान करे ॥ ७ ॥ कामना कर्के बहुत बार मंडूकादि के मारणका प्रायश्चित्त कूर्म्म पुराणमें लिखाहै मंडूक और नकुल और काक और सर्प्प और मूषक और कुत्ता इनकों मारकर्के द्विज ब्रह्महत्याका षोडशांश क्या १६ सोलमांहिसा व्रतकरे ॥ १ ॥ और कुत्तेकोंमार कर्के मौन धारकर्के तीनरात्र दूधकोंपानकरे मार्ज्जार और नकुल इनकों मारकर्के योजन मात्र मार्गचले॥२॥ और घोडेके मारणेमें द्विज द्वादश रात्र क्या बारांरातीं व्रत करे और सर्प्पकों मार

अजंमेषमनड्वाहंखरंहत्वैकहायनम् क्रव्यादांस्तुमृगान्हत्वाधेनुंदद्यात्पयस्विनीम् ६ क्रव्यादंवत्सरींचैवमुष्ट्रंहत्वातुकृष्णलं जीवकात्मकवस्तावीःपृथग्दद्याद्विशुद्धयइति ७ कामतोऽभ्यासे कूर्मपुराणे मंडूकंनकुलंकाकंदंदशूकंचमूषकं श्वानंहत्वाद्विजःकुर्यात्पोडशांशव्रतंतथा १ पयःपिबेत्त्रिरात्रंतु श्वानंहत्वातुयंत्रितः मार्ज्जारंवाथनकुलंयोजनंवाध्वनोव्रजेत् २ कृच्छ्रंद्वादशरात्रंतुकुर्यादश्ववधेद्विजः अर्श्रीकार्ष्णायसींदद्यात्सर्प्पंहत्वाद्विजोत्तमः ३ अग्रेविष्णुधर्म्मोक्तवत्पाठः। अकामतोभ्यासेनारदीये मंडूकंनकुलंकाकंवराहंमूषकंतथा मार्ज्जाराजाविकंश्वानंहत्वाकुक्कुटकंतथा कृच्छ्रार्धमाचरेद्विप्रोऽतिकृच्छ्रंचाश्वहाचरेत् १ तप्तकृच्छ्रंकारेवधेपराकंगोवधेस्मृतम् कामतोगोवधेनैवशुद्धिर्दृष्टामनीषिभिः २ यानशय्यासनंष्वेवंपुष्पमूलफलेषुच भक्ष्यभोज्यापहारेषुपंचगव्यंविशोधनम् ३

कर्के ब्राह्मण लोहेकी कहीका दान कर देवे ॥ ३ ॥ आगे विष्णुधर्म्मके बराबर हिपाठहै ॥ काम नातें विना बहुत बार मंडूकादिके मारणमें नारदीयमें विशेषहै मंडूक और नकुल और काक और वराह और मूषक और मार्ज्जार और वकरा और भेडू और कुत्ता और कुक्कुट इनकोंमार कर्के ब्राह्मण आधा प्राजापत्य व्रत करे और घोडेकों मारणे वाला अतिकृच्छ्रव्रत करे ॥१ ॥ और हाथीके मारणेमें तप्तकृच्छ्र व्रत किहाहै और गौके मारणेमें पराकनामकव्रत किहा और कामनाकर्के गौके मारणमें बुद्धिमानयोहैं तिनोंनें शुद्धि नहिं देखी अर्थात् कामनातें गौवध करणेका मरणांत प्रायश्चित्तहै ॥ २ ॥ वाहन और शय्या और आसन इनके चुराणेमें और पुष्पमूल फल इनके चुराणेमें और भक्ष्य और भोज्य इनके चुराणेमें पंचगव्य पान करणे कर शुद्धिहोतीहै ॥ ३ ॥

शुष्ककाष्ठ और तृण और वृक्ष और गुड और चर्म्म और वस्त्र और मांस इनके चुराणेमें तीनरात्र भोजननाहिं करे अर्थात् तीनरात्र भोजनको त्यागे ॥ ४ ॥ टिट्टिभमिति टिट्टिभ चकोर हंस कारंडव उल्लूक सारस कबूतर जालपादक ५ ॥ तोता विवीहा बलाक और शिशुमार यो जलचर जीवहे और कच्छप इनके मध्यमें एककोंवी मार कर्के बारां दिन भोजन नहिंकरे ६ वीर्य्य और विष्ठा और मूत्र इनके भोजनमें प्राजापत्य व्रत करे और शूद्रका जूठा भोजन करणे मे तीन चांद्रायण व्रत कहेहैं ॥ ७ ॥ अस्थियों वाले क्या हड्डियों वाले योजीवहैं तिनका हजार १००० मारणमें और विना हड्डियों योजीवहैं तिनका गड्डा भरा हुया मारणमें इक दिन शूद्रके मारणका योव्रत तिसको करे ॥ ८ ॥ और अस्थियों वाले जीवोंके मारणमें किंचित् योहै

शुष्ककाष्ठतृणानांचद्रुमाणांचगुडस्यच चर्मवस्त्रामिषाणांचत्रिरात्रंस्यादभोजनम् ॥ ४ ॥ टिट्टिभंचक्रवाकंचहंसंकारंडवंतथा उलूकंसारसंचैवकपोतंजालपादकम् ५ शुकंचापंवलाकंचशिशुमारंचकच्छपं एतेष्वन्यतमंहत्वाद्वादशाहमभोजनम् ६ प्राजापत्यव्रतंकुर्याद्रेतोविण्मूत्रभोजने चांद्रायणत्रयंप्रोक्तं शूद्रोच्छिष्टस्यभोजने ७ पुनस्तत्रैव अस्थिमतांतुसत्वानांसहस्रस्यप्रमापणे पूर्णेचानस्यनस्थ्नांतुशूद्रहत्याव्रतंचरेत् ८ अनासिशकटेपूर्णेहतेसतीत्यर्थः ॥ किंचिदेवतुविप्रायदद्यादस्थिमतांवधे अष्टमुष्टिमितंधान्यंकिंचित् अनस्थ्नांचैवहिंसायांप्राणायामेनशुद्ध्यति ९ अन्नाद्यजानांसत्वानांरसजानांचसर्वशः फलपुष्पोद्भवानांचघृतप्राशोविशोधनम् १० कृष्टजानामोषधीनांजातानांचस्वयंवने वृथारंभेनुगच्छेद्गांदिनमेकंपयोव्रतः एतैर्व्रतैरपोह्यंस्यादेनोहिंसासमुद्भवम् ११ वृथारंभोवृथाछिदः

सो ब्राह्मणके तांईदेवे किंचित्का प्रमाणकहितेहैं आठ मुष्टि ८ प्रमाण योधान्यहै उसका नाम किंचित्है और विना अस्थियो योजीवहैं तिनके मारणमे प्राणायामकर्के शुद्ध होताहै एह एकके मारणेका प्रायश्चित्तहै ९ और अन्नादितें और रसतें और फलपुष्पतें उत्पन्नभये जोजीवतिनों संपूर्णोंके मारणमें घृतको प्राशनकर्के क्या घृत खाय कर्के शुद्ध होताहै १० ॥ हलवाह कर्के उत्पन्नभयी यो औषधी और स्वय क्या अपने आप वनमें उत्पन्नभयी यो औषधी तिनके प्रयोजनतें विना कट्टणेमें एक दिन गौके पीछे भ्रमे और दूध पान करे एह यो व्रत कहेहैं इनों कर्के हिंसातें उत्पन्नभया योपाप सो दूर करणे योग्यहै ॥ ११ ॥

कूर्मपुराणमें भीकिहाहै फलेति फलोंकों देणे वाले योवृक्षहैं उनके छेदनमें सौ १०० वारवेद मंत्रका जपकरे और गुल्मयोहैं गुच्छे और वल्लिआंयोहैं आच्छादनकरणे वालिआं वेलां और लतायोहैं वेष्टनकरणा स्वभाव जिनका और वीरुध योहैं शाखा पत्रोंके समूह वालिआंवेलां १ और अज्ञातयोजीवहैं नाहिं जाणेयोजीव गंडूपदीकीटप्रभृति योहैं और पत्रोंतें उत्पन्न भये योजीव और फल और पुष्प इनोंतें उत्पन्न भयेयोजीव तिनों संपूर्णोंके मारणमें घृतकायो प्राशन है घृतखाणा सोशोधनहै २ और कामनातें विना हाथीके मारणमें तप्तकृच्छ्र व्रत शोधन है और कामनाकर्के हाथीके मारणमें प्रायश्चित्तनाहिंहै अर्थात् मरणांत प्रायश्चित्तहै ३ और अज्ञानकर्के गौकों मारकर चांद्रायण अथवापराकव्रतकरे॥ विष्णुधर्मोत्तरमें भी इनका इसी

कूर्मपुराणे फलदानांतुवृक्षाणांछेदनेजाप्यमृकूशतम् गुल्मवल्लीलतानांचपुष्पितानांचवीरुधाम् १ गुल्माअप्रकांडावृक्षावल्लयआच्छादनस्वभावालतावेष्टनस्वभावावीरुधः शाखापत्रप्रचयवत्यः अज्ञातानांचसत्त्वानांपत्रजानांचसर्वशःफलपुष्पोद्भवानांचघृतप्राशोविशोधनम् २ अज्ञातानांगंडूपदीकीटप्रभृतीनाम् हस्तिनश्चवधेदृष्टंतप्तकृच्छ्रंविशोधनम्मतिपूर्ववधेचैवप्रायश्चित्तंनविद्यते ३ ॥ चांद्रायणंपराकंचगांहत्वातुप्रमादत इति विष्णुधर्मोत्तरेप्येवम् कूर्मपुराणेमनुष्यादिहरणेप्राय. मनुष्याणांतुहरणंकृत्वास्त्रीणांवधस्यतु वापीकूपजलानांचशुद्धयेच्चांद्रायणेनतु १ स्त्रीणांवधस्यवधंकृत्वाजलपदंजलाशयोपलक्षकंतद्वधंतद्भग्नंकृत्वेत्यर्थः॥ द्रव्याणामल्पसाराणांस्तेयंकृत्वान्यवेश्मतः चरेत्सांतपनंकृच्छ्रंनियमादात्मशुद्धये ॥ २ ॥ धान्यान्नधनचौर्यंचकृत्वाकामाद्द्विजोत्तमः स्वजातीयगृहादेवकृच्छ्रार्द्धेनविशुध्यति ॥ ३ ॥ भक्ष्यभोज्यापहरणयानशय्यासनस्यच पुष्पमूलफलानांचपंचगव्यंविशोधनम् ॥ ४ ॥

प्रकार प्रायश्चित्तहै ॥ अबकूर्मपुराणमें मनुष्यादियोंके हरणका प्रायश्चित्त कहितेहैं मनुष्ययोहैं तिनकों चुरायकर्के और स्त्रियोंको मार कर्के और वाउलिआं और खूहे और जलाशय तडागादि इनकों तोडकर्के मनुष्य चांद्रायण व्रतकर्के शुद्धहोताहै १ और दूसरेके घरतें थोडेमूल्यवाले द्रव्ययोहैं पात्रादि तिनकोंचुरायकर्के नियमतें आपणी शुद्धिकेतांई सांतपनकृच्छ्रकोंकरे २ और ब्राह्मण कामनातें धान्य अन्नधनइनकी चोरी ब्राह्मणकेघरतेंकर्के आधाप्राजापत्य व्रतकरणेतें शुद्धहोताहै ३ और भक्ष्य भोज्यवाहन शय्याआसन पुष्प मूल फल इनके मध्यमें एकके चुराणेमें भी पंचगव्य विशोधनहै अर्थात् इनकेमध्यमें एककोंभी चुरायकर्के पंचगव्यपानकरे ४

तृण और काष्ठवृक्ष शुष्कान्नगुड वस्त्र चर्म मांस एह योहैं इनके मध्यमें एककेभी चुराणेमें तीनरात्रि निराहार व्रतकरे ॥ ५॥ओरमणिओ मोती मुंगा ताम्र रजत लोहाकांस्य पाषाण इन केमध्यमें एककोंभी चुरायकर्के वारांदिन अन्नके कणोंको वाहरतें चुणकर भोजन करे॥६॥कर्पास और कीडयोंकी योनियेहैं पट्ट और द्विशफ योहैं गवादि और एकशफ योहैं अश्वादि और पक्षी और गंधकया सुगंधवस्तु और औषध इनके मध्यमें एककेभी चुराणेमै और रस्सी के चुराणेम तीनरात्र दूधको पीवे ७॥ विष्णुधर्म्मोत्तरमें भीइसीप्रकारहै ॥और तहांहिं अस्पृश्यके स्पर्शमें प्रायश्चित्तहै बंधनकर्के मृतहोगया योप्रेत उसको कदाचित् ब्राह्मणस्पर्श करे तब उस

तृणकाष्ठद्रुमाणांतुशुष्कान्नस्यगुडस्यच चैलचर्मामिषाणांचत्रिरात्रंस्याद भोजनम् ॥ ५॥ मणिमुक्ताप्रवालानांताम्रस्यरजतस्यच अयःकांस्योपला नांचद्वादशाहंकणाशनम् ६ कर्पासकीटयोनीनांद्विशफैकशफस्यच पक्षिगं धौषधीनांचरज्ज्वाश्चैवत्र्यहंपय इति॥७॥ अत्रसर्वत्रपष्ठ्यन्तानांचौर्य्यंकृत्वे त्यनेनान्वयः।विष्णुधर्म्मोत्तरेप्येवम् तत्रैवास्पृश्यस्पर्शेनेप्रा० उद्बंधमृतकं प्रेतंयः स्पृशेद्ब्राह्मणः क्वचित् तस्यशुद्धिंविजानीयात्तप्तकृच्छ्रेणनित्यशः ॥ १॥ आत्मानंघातयेद्यस्तुरज्ज्वादिभिरुपक्रमैः तस्यप्रेतक्रियांकृत्वातप्तकृच्छ्रे णशुद्ध्यति ॥ २ ॥ इंद्रियेप्रविष्टंस्यादमेध्यंयस्यकस्यचित् अहोरात्रोषि तः स्नात्वापंचगव्येनशुद्ध्यति ३ इंद्रियेपुनेत्रादिषु । एतद्विजातयःशोध्या व्रतैराविष्कृतैनसः अनाविष्कृतपापाश्चमंत्रैर्होमैश्चशोधयेत् ॥४॥आविष्कृ तैनसःप्रकाशितपापाद्विजातयःशूद्रवर्जिताएभिर्व्रतैःपूर्वोक्तैःशोध्याइत्यर्थः

ब्राह्मणकी शुद्धि नित्यप्रति तप्त कृच्छ्र व्रतकर्के जानें ॥१॥ और योमनुष्य रस्सी यों आदिलेक र योसाधन हैं उनोंकर्के आपणे को मारेउसकी प्रेतक्रिया को कर्के क्रियाके करणे वाला तप्त कृच्छ्रव्रत कर्के शुद्ध होताहै ॥२॥और जिसकिसे मनुष्यके इंद्रिय योहैं नेत्रादि उनमें प्रवेश कि याहो अमेध्य विष्टादि अर्थात् जिसके नेत्रों मे विष्टापड जावे सोमनुष्य दिनरात्र निराहार व्र तकर और स्नानकर्के पंचगव्य पान करे तब शुद्धहोताहै ॥३॥एहयो द्विजातिहैं ब्रा ० क्ष० वै० शूद्रोंकर्के रहित और प्रकट करेहैं पापाजिनोंने सोपूर्वोक्त व्रतों कर्के शोधने योग्यहैं अर्थात् शुद्ध करणेयोग्यहैं॥औरनहिं प्रकट किये पापाजिनोंने तिनकों मंत्रों कर्केऔर हवनों कर्केशुद्ध करे ४

विष्णु धर्म्मो त्तरमें किहा कदाचित् रजस्वला स्त्री जूठे मनुष्यके साथ स्पर्श करे तब जितना पर्यन्त शुद्धिकों नहिं प्राप्त होती इतना पर्यंत भोजनकों नहिंकरे ॥ १ ॥ चांडाल और श्वपच येहि कुत्तेको खाणे वाला और पूय क्या पाक और सूतिका स्त्री और शव और शवकों स्पर्श करणे वाला और कुत्ता इनकों स्पर्श कर्के स्त्री येहि सो सद्यः स्नानकर्के शुद्ध होतीहि॥नारी एह योपदहै इसका पूर्व श्लोकमे अन्वय जानणा ॥ २ ॥ और ब्राह्मण सस्नेह अस्थियेहि गिल्ली हड्डी तिसकों स्पर्श कर्के स्नान कर्के शुद्ध होताहै और निःस्नेह अस्थि यांहिं सुक्की हड्डी उस कों स्पर्श कर्के आचमन करे अर गौके देहमें स्पर्श करे अथवा सूर्यकों देखे तब शुद्धहोताहै ३ ॥ गलीका यो चिक्कड और जल इस कर्के नाभिके हेठ स्पर्श भयायो पुरुष सो मृत्तिका

विष्णुधर्म्मोत्तरे उच्छिष्टेनतुसंस्पृष्टाकदाचित्स्त्रीरजस्वला यावन्नशुद्धिमाप्नो तिनाश्नीयात्तावदेवतु ॥ १ चांडालश्वपचौस्पृष्ट्वातथापूयंचसूतिकां शवं तत्स्पृष्टिनंश्वानंसद्यःस्नानेनशुद्ध्यति २ नारीस्पृष्ट्वास्थिसस्नेहंस्नात्वावि प्रोविशुद्ध्यति आचम्यैवतुनिःस्नेहंगामालभ्यार्कमीक्ष्यवा ॥ ३ ॥ अत्रनारी तिपूर्वान्वयि । रथ्याकर्दमतोयेननाभिस्पृष्टोभवेदधःमृत्तोयैःशोधयेदंगंततः शुद्धिमवाप्नुयात् ४ नापुरुषःअधःरथ्याकर्दमतोयेनअभिस्पृष्टोभवेदितिसंबं धःवांतिविविक्तःस्नात्वातुघृतंप्राश्यविशुद्ध्यति क्षुरकर्मततःकृत्वास्नानेनैवविशु द्धयतीति ५ ॥ अन्यच्च ब्रह्मचारिशुनादष्टस्त्र्यहंसायंपयःपिबेत् गृहस्थो वात्रिरात्रंतुएकाहंत्वाग्निहोत्रवान् ॥ ६ ॥ नाभेरूर्ध्वंतुदष्टस्यतदेवद्विगुणंभवे त् वाह्वोश्चत्रिगुणंज्ञेयंमूर्धनिस्याच्चतुर्गुणम् ॥ ७ ॥

और जलों कर्के अंगकों धोय कर्के शुद्धिकों प्राप्त होताहै ॥ ४ ॥ और यो मनुष्य वांत क्या उलटी करे भोजन कराहुआ मुखके द्वारात्यागे सो स्नान कर्के और घृतकों प्राशन कर्के शु द्ध होताहै और क्षुर कर्म्म योहि मुंडन तिसकों कर्के स्नान कर्के शुद्ध होताहै ॥ ५ ॥ विष्णु धर्म्मो त्तरमेंहि और किहाहै ब्रह्मचारी कों जब कुत्ता काटे तब तीन दिन सायं कालमें दूध पीवे और गृहस्थीकों कुत्ताकाटे तब त्रिरात्र व्रतकों करे अर्थात् त्रिरात्र दूधपीवे और अग्निहोत्रीकों कुत्ता काटे तब एकदिन व्रतकोंकरे ॥ ६ ॥ और नाभितं ऊपर यो कदाचित् कुत्ता काटे तब दूणा व्रतकरे और यो वाहुयोंमे कुत्ता काटे तब तीनगुणा व्रत करे और यो शिरमें कुत्ता काटे तब चारगुणा व्रत करे ॥ ७ ॥

अन्यदिति अब और कहितेहैं ब्रह्मचारीयो द्विज सो कामनातें विना स्वप्नमें वीर्य्यकों त्यागे अर्थात् स्खलित वीर्य्य होजावे तब स्नानकरे और सूर्य्यकों पूजे और पुनर्मां एह यो मंत्रहै इसका तीन वार जपकरे ॥ ८ ॥ और अग्निहोत्रमें अपवित्रहोया अग्नि जिसका अर्थात् केशकीटादियोंहैं तिनोंकर्के दूषितभयाअग्नि जिसका सोब्राह्मणआपनी इच्छाकर्केहि १ महीना चान्द्रायण व्रतकरे किसीके उपदेशतें विना और वीरासन क्या खडोते रहणा सो उसकों किहा ॥ ९ ॥ अवकीर्णि व्रत विष्णु धर्म्मोत्तरमें किहा अवकीर्णी यो ब्रह्मचारी यो आप स्त्री संगकों करे तब ओहो ब्रह्मचारी आपनी शुद्धिके निमित्तचान्द्रायण व्रतकरे ॥ और कहतेहैं॥अवकीर्णी यो

अन्यत्र स्वप्नेसिक्त्वाब्रह्मचारीद्विजःशुक्रमकामतःस्नात्वार्कमर्चयित्वात्रिःपुनर्मामित्यृचंजपेत् ॥ ८॥ अग्निहोत्रेऽपवित्राग्निर्ब्राह्मणःकामकारतः चान्द्रायणंचरेन्मासंवीरमध्यासनंहितम्॥९॥कामकारतःस्वेच्छयैवचान्द्रायणंकुर्य्यान्नतुकस्यचिदुपदेशेनेत्यर्थः॥ अपवित्रःकेशकीटादिदूषितोऽग्निर्यस्य॥अपवित्राणिअस्पृश्यस्पर्शनादीनिप्रकीर्णकसंज्ञानीतिकिंचित् तद्वानग्निर्यस्येति॥ अवकीर्णिव्रतमुक्तं विष्णुधर्म्मोत्तरे अवकीर्णीविशुद्ध्यर्थंचान्द्रायणमथापिवा अवकीर्णीतुकाणेनगर्द्दभेनचतुष्पथे ॥ १ ॥ पाकयज्ञविधानेनयजेतनिर्ऋतिंनिशि हुत्वाग्नौविधिवद्धोमान्निर्ऋतस्तुसमित्यृचम् ॥२ ॥ वातेन्द्रगुरुवह्नीनांजुहुयात्सर्पिषाहुतीःकामतोरेतसस्सेकेव्रतस्थस्यद्विजन्मनःआक्रमंचव्रतस्याहुर्धर्म्मज्ञाःसत्यवादिनः ।३।व्रतस्याक्रमंव्रतांतरानुष्ठानंतत्प्रकारमाहएतास्मिन्नित्यादिना एतस्मिन्नेवासिद्धान्तेर्वासित्वागर्द्दभाजिनम् सप्तागारंचरन्भैक्षंस्वकर्मपरिवेदयन् ॥ ४

ब्रह्मचारी सो काणे खोते कर्के चुरस्तेमें पाकयज्ञ विधान कर्के रात्रिमें निर्ऋतिकों पूजे ॥ १ ॥ और अग्निमें विधिवत् होमकों करे निर्ऋतेरस्तुमे इस ऋचा कर्के ॥ २ ॥ पवन और इंद्र और गुरु और अग्नि इनकों घृतकर्के आहुति देवे और ब्रह्म चर्य्य व्रतमें स्थित यो ब्राह्मण तिसकों कामनातें रेतस्सेकमें धर्म्मके जानणे वाले और सत्यबोलने वाले व्रतका आक्रम कहतेहैं ॥३ ॥ आक्रमक्या और व्रत करणा । तिसका प्रकार एतस्मिन्नित्यादि कर्के कहितेहैं ॥ अवकीर्णीका जब सिद्धांत होवे तब खोते का चर्म ऊपर लेकर्के सात घरों की भिक्षा करे और आपणा कर्म संपूर्णकों सुनावे ॥ ४ ॥

